C. 4. 147
B. 4. 5. 6
K. 4. 6. 17

वसामेह परां रात्रिं बलवान्मे परिश्रमः ॥ ६

युधिष्ठिर उवाच ।

धनंजय समुद्यम्य पाञ्चालीं वह भारत ।
राजधान्यां निवत्स्यामो विमुक्ताश्च वनादितः ॥ ७

वैशंपायन उवाच ।

तामादायार्जुनस्तूर्णं द्रौपदीं गजराडिव ।
संप्राप्य नगराभ्याशमवतारयदर्जुनः ॥ ८
स राजधानीं संप्राप्य कौन्तेयोऽर्जुनमब्रवीत् ।
क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयम् ॥ ९
सायुधाश्च वयं तात प्रवेक्ष्यामः पुरं यदि ।
समुद्वेगं जनस्यास्य करिष्यामो न संशयः ॥ १०
ततो द्वादश वर्षाणि प्रवेष्टव्यं वनं पुनः ।

---

नेतो दूरे विराटस्य नगरं भरतर्षभ ।
राजधान्यां निवत्स्यामः सुमुक्तमिव नो वनम् ।
नकुलः ।
पूर्वाह्णे मृगयां गत्वा वने विद्धा महामृगाः ।
अटवी च मया दूरं सृता मृगवधेप्सुना ।
विषमा ह्यतिदुर्गा च वेगवत्परिधावता ।
सोऽहं घर्माभितप्तो वै नैनामादातुमुत्सहे ।
युधिष्ठिरः ।
सहदेव त्वमादाय मुहूर्तं द्रौपदीं नय ।
राजधान्यां निवत्स्यामः सुमुक्तमिव नो वनम् ।
सहदेवः ।
अहमप्यस्मि तृषितः क्षुधयाभिप्रपीडितः ।
श्रान्तो घर्माभितप्तो वै नैनामादातुमुत्सहे ।

[ M transp. lines 2 and 3. — (L. 2) $T_{2}$ transp. बाहु° and मुहू°. M °भ्यां नकुलादाय. $T_{1}$ °र्तं नकुलोद्वह; M °र्तं द्रौपदीं नय. — (L. 3) M इतो दूरे (*or* दूरं). $T_{1}$ G नगरी. — (L. 5) $G_{2}$ $M_{5}$ मया (for महा-). — (L. 6) $G_{2}$ श्रांता; $M_{4}$ (*sup. lin.* as above) गता (for सृता). — (L. 11) $T_{1}$ $G_{2}$ $M_{1.5}$ खिन्नश्च (for तृषितः). $T_{2}$ $G_{2}$ °या परिपी°; $M_{5}$ °या च प्रपी°. — (L. 12) $T_{2}$ परिश्रांतश्च भद्रं ते (for the prior half). ]

7 $^{ab}$) $B_{1.3}$ उपागम्य; $D_{5}$ समुद्गम्य. $D_{1-3}$ द्रौपदीं (for पाञ्चालीं). — For $7^{ab}$, S subst:

144* एहि वीर विशालाक्ष वीरसिंह इवार्जुन ।
इमां कमलपत्राक्षीं द्रौपदीं द्रुपदात्मजाम् ।
परिगृह्य मुहूर्तं त्वं बाहुभ्यां कुशलं व्रज ।

[ (L. 1) $T_{2}$ $G_{1}$ भो भो (for एहि). $T_{1}$ G $M_{1}$ द्रुत° (for वीर°). ]

— $^{c}$) $D_{4.8}$ °धानीं. $D_{8}$ प्रवेश्यामो (for निव°). — $^{d}$) $D_{4}$ तु; $D_{8.10}$ स्म (for च). S सु(G $M_{3}$ वि)मुक्तमिव नो वनं (cf. 143*).

8 After वैशं°, S ins.:

145* गुरोर्वचनमाज्ञाय संप्रहृष्टो धनंजयः ।

— $^{a}$) $M_{4}$ ततः (for अर्जुनस्). S पार्थः (for तूर्णं). — $^{b}$) $B_{2}$ नाग°; $D_{4}$ पक्षि°; S हस्ति° (for गज°). — After $8^{ab}$, S ins.:

146* प्रवव्राज महाबाहुरर्जुनः प्रियदर्शनः ।
जटिलो वल्कलधरः शरतूणधनुर्धरः ।
स्कन्धे कृत्वा वरारोहां बालामायतलोचनाम् ।

[ (L. 1) $M_{2.5}$ °दर्शनां; $M_{3}$ परवीरहा. — (L. 2) $T_{2}$ $G_{2}$ °तूणी. ]

— $^{c}$) S ($M_{4}$ *sup. lin.*) आनीय ($M_{2-4}$ आगम्य) (for संप्राप्य). Some MSS. अभ्यासं. — $^{d}$) $B_{4}$ $D_{5.7}$ अवा°. $K_{2}$ M (except $M_{5}$) अच्युतः (for अर्जुनः). $D_{1.3.4}$ $G_{1}$ °यतार्जुनः ($D_{4}$ °च्युतः). — After 8, S ins. (an additional) colophon (*adhy. no.*: 6).

9 Before 9, S reads वैशं°. — $^{b}$) S पार्थिवो (for कौन्तेयो). — $^{c}$) $D_{4}$ समावेश्य; $D_{10}$ समाधाय; Cc as in text. — $^{d}$) $D_{1-3}$ प्रविशामः. — For $9^{cd}$, S subst.:

147* इमानि पुरुषव्याघ्र आयुधानि परंतप ।
कस्मिन्न्यासयितव्यानि गुप्तिश्चैषां कथं भवेत् ।

10 $^{ab}$) $D_{4}$ S हि (for च). K समं (for वयं). B D (except $D_{1-4}$) transp. वयं तात and प्रवे°. — $^{cd}$) $D_{4}$ आशंकां तु (for समु°). $D_{8.10}$ पुर° (for जन°). $B_{2}$ $D_{4-6}$ transp. जनस्यास्य and करि°. — After 10, B Dn $D_{5.6.10-12}$ S ins.:

148* गाण्डीवं च महद्गाढं लोके च विदितं नृणाम् ।
तच्चेदायुधमादाय गच्छामो नगरं वयम् ।
क्षिप्रमस्मान्विजानीयुर्मनुष्या नात्र संशयः ।

[ (L. 1) S हि (for च). $D_{5}$ महाह्लादं; $D_{6}$ महागाढं; $D_{10}$ महाभागं; S नरव्याघ्र ($M_{3}$ महच्चापं). $B_{1.3}$ धनुः (for नृणाम्). S त्रिषु लोकेषु विश्रुतं (for the posterior half). — After line 1, S ins.:

149* कथं नाविष्कृताः स्यामो धार्तराष्ट्रस्य मारिष ।

— (L. 2) T G यदीदं धनुरादाय. $D_{5}$ $M_{3-5}$ गच्छेम; $M_{2}$ गच्छाम. T G चरेम सजने पुरे ($T_{2}$ पदे). Ca cites तच्चेदायुधं, Cr तच्चेत्, Crp (Dī.) तदेव. — (L. 3) $D_{5.6}$ क्षिप्रं नः संविजा°; T G क्षिप्रं नः प्रतिजा°; M क्षिप्रं नः संप्रजा°. ]

$D_{5}$ marg. cont.:

150* आशंकां च करिष्यामो जनस्यास्य न संशयः ।

एकस्मिन्नपि विज्ञाते प्रतिज्ञातं हि नस्तथा ॥ ११

अर्जुन उवाच ।

इयं कूटे मनुष्येन्द्र गहना महती शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ १२
न चापि विद्यते कश्चिन्मनुष्य इह पार्थिव ।
उत्पथे हि वने जाता मृगव्यालनिषेविते ॥ १३
समासज्यायुधान्यस्यां गच्छामो नगरं प्रति ।
एवमत्र यथाजोषं विहरिष्याम भारत ॥ १४

वैशंपायन उवाच ।

एवमुक्त्वा स राजानं धर्मात्मानं युधिष्ठिरम् ।
प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ ॥ १५
येन देवान्मनुष्यांश्च सर्पांश्चैकरथोऽजयत् । C 4. 159 B. 4.5.18 K. 4.7.19

11 S transp. $11^{ab}$ and $11^{cd}$. — $^{a}$) S भूयो ($M_3$ बुध्या) (for ततो). — $^{b}$) $K_2$ $D_{1-3}$ वनवासो ; $B_3$ $D_{5-7.9}$ वस्तव्यानि; S प्रविशेम (for प्रवे°). $K_2$ $D_{1-3}$ हि नः; $B_{1.3-5}$ Dn $D_{5-7.9.11.12}$ वने; $T_2$ $G_3$ $M_{1-3.5}$ वयं (for वनं). $T_1$ $G_{1.2}$ $M_4$ वयं; $T_2$ $G_3$ $M_{1-3.5}$ वनं (for पुनः). $K_1$ प्रवेष्टव्यानि नः पुनः. **C**v cites (in prose order) न ञ्ज्ञातेऽपि. — $D_{10}$ om. $11^{cd}$. — $^{d}$) $B_3$ $D_5$ °ज्ञानं; $D_3$ °ज्ञाते; $D_4$ °ज्ञाता; $D_8$ परिज्ञाता. $B_2$ पुरा; $D_{5.7}$ तदा (for तथा). **C**v cites नस्तथा. S समयं न ($T_2$ $G_{2.3}$ नो; $G_1$ ना-) व्यतीत्य च. — After 11, S ($M_{1.2}$ om. lines 1 and 2) ins.:

151* तस्माच्छस्त्राणि सर्वाणि प्रच्छाद्यान्यत्र यत्र वा ।
प्रविशेम पुरं श्रेष्ठं तथा सम्यक्कृतं भवेत् ।
वैशंपायनः ।
अजातशत्रोर्वचनं श्रुत्वा चैव महायशाः ।
उवाच धर्मपुत्रं तमर्जुनः परवीरहा ।

[ (L. 1) $T_2$ $G_{2.3}$ transp. शस्त्राणि and सर्वाणि. $M_3$ प्रच्छन्नं न्यस्य यत्र ह; $M_4$ प्रच्छन्नान्यत्र तत्र वै (*sup. lin.* प्रच्छन्नं न्यस्य कुत्रचित्); $M_5$ प्रच्छन्नान्यत्र यत्र वा. — (L. 2) $T_2$ पुरश्रेष्ठं. ]

12 S om. अर्जुन उ°. — $^{a}$) S वने (for कूटे). — $^{b}$) $B_4$ $D_{1.3.5.7}$ **C**r गहने; **C**c.v.rp (Catur.) as in text. $D_8$ वर्तते; **C**a.v महती (as in text). S महती दृश्यते शमी.

13 S transp. $13^{ab}$ and $13^{cd}$. — $^{a}$) $D_{6.9}$m अत्र; $D_9$ अद्य (for अपि). S न चास्यां चारयि(T G संचरि-; $M_1$ च चरि)ष्यंति. — $^{b}$) $K_2$ $Dn_1$ इव; B $Dn_2$ $D_{5-12}$ इति (for इह). K भारत; B D (except $D_{1-4}$) मे मतिः (for पार्थिव). S मनुष्याः पार्थ ($T_2$ पथि) केचन ($G_{2.3}$ कानने). — After $13^{ab}$, N ins.:

152* योऽस्मान्निदधतो द्रष्टा भवेच्छस्त्राणि पार्थिव ।

[ $D_{1-3.8}$ दृष्ट्वा (for द्रष्टा), and हरेत् (for भवेत्). $B_3$ $D_{4-6.8.10}$ अस्त्राणि (for शस्त्राणि). $B_{1.3}$ $D_4$ भारत; $B_{2.4.5}$ $D_{2.5-7.9.10}$ पांडव; Dn $D_{11.12}$ पांडवाः; $D_8$ पांडवः. **C**c cites (in prose order) शस्त्राणि निदधतोऽस्मान् द्रष्टा भवेत्. **C**a.v cite निदधतः. ]

S transp. $13^{ab}$ and $13^{cd}$, and then after $13^{ab}$ ins.:

153* धनुर्भिः पुरुषं कृत्वा चर्मकेशास्थिसंवृतम् ।
उद्बन्धमिव कृत्वा च धनुर्ज्यापाशसंवृतम् ।
[ (L. 2) M मनुजं ($M_5$ पुरुषं) पाश°. ]

M cont.: T G ins. after 14:

154* एवं परिहरिष्यन्ति मनुष्या वनचारिणः ।

T G cont.: M ins. after 14:

155* अत्रैवं नावबुध्यन्ते मनुष्याः केचिदायुधम् ।

— $^{c}$) S °थे चापि जातेयं. — $^{d}$) $K_1$ $D_6$ मृगव्याडनि°; T G अमनुष्य° ($G_1$ °ष्यानुषेवितं); M निर्जने गहने वने. — After 13, $T_2$ ins.:

156* विपुलाकीर्णशाखा च वायसैरुपसेविता ।
स्नेहानुबद्धां पश्यामि दुरारोहामिमां शमीम् ।

$T_2$ cont.: N ins. after 13:

157* समीपे च श्मशानस्य गहनस्य विशेषतः ।

[ $Dn_2$ $D_{11}$ वा; $D_{1-3}$ हि (for च). $D_{10}$ समीपतः (for °पे च). $D_4$ दुःप्रवेशे (for गह°). ]

14 $^{a}$) $B_2$ Dn $D_{11.12}$ समाधायायुधं शम्यां. **C**a cites समासज्य. S अस्यामायुधमासज्य. — $^{b}$) T $G_1$ M गच्छाम ($M_2$ गच्छेम). $B_{1.3.4}$ $D_4$ S वयं (for प्रति). — $^{c}$) B (except $B_2$) Dn $D_{5.6.11\ 12}$ यथायोगं; $D_{2.4.8.10}$ °सौख्यं; **C**a.c °जोषं (as in text). — $^{d}$) S विहराम ($G_1$ विच°; $G_{2.3}$ °रामो; $M_1$ °रेम) यथासुखं. — After 14, T G ins. 154*, M ins. 155*, and finally $K_2$ ins. a passage given in App. I (No. 2).

15 $M_{1-3}$ om. वैशं°. — $^{b}$) $B_{1.3}$ धर्मपुत्रं; $B_2$ $Dn_1$ $D_4$ धर्मराजं (for धर्मा°). S धनंजयः (for युधि°). — After 15, S ins.:

158* तानि सर्वाणि संनह्य पञ्च पञ्चाचलोपमाः ।
आयुधानि कलापांश्च निस्त्रिंशांश्चातुलप्रभान् ।

[ (L. 1) $T_1$ $G_3$ संगृह्य. M (except $M_2$) °चलोपमान्. — (L. 2) $M_5$ कलापानि. $M_{1.3.4}$ (*sup. lin.* as in text) °तुलोपमान्; $M_5$ °चलप्रभान्. ]

$T_1$ G ($G_1$ om. line 3) cont.:

159* ततो युधिष्ठिरो राजा सहदेवमुवाच ह ।

C. 4. 159 B. 4. 5. 18 K. 4. 7 स्फीताञ्जनपदांश्चान्यानजयत्कुरुनन्दनः ॥ १६
तदुदारं महाघोषं सपत्नगणसूदनम् ।
अपज्यमकरोत्पार्थो गाण्डीवमभयंकरम् ॥ १७
येन वीरः कुरुक्षेत्रमभ्यरक्षत्परंतपः ।
अमुञ्चद्धनुषस्तस्य ज्यामक्षय्यां युधिष्ठिरः ॥ १८
पाञ्चालान्येन संग्रामे भीमसेनोऽजयत्प्रभुः ।
प्रत्यषेधद्बहूनेकः सपत्नांश्चैव दिग्जये ॥ १९
निशम्य यस्य विस्फारं व्यद्रवन्त रणे परे ।
पर्वतस्येव दीर्णस्य विस्फोटमशनेरिव ॥ २०
सैन्धवं येन राजानं परामृषत चानघ ।
ज्यापाशं धनुषस्तस्य भीमसेनोऽवतारयत् ॥ २१
अजयत्पश्चिमामाशां धनुषा येन पाण्डवः ।

आरुह्यमा शमीं वीर निधत्स्वेहायुधानि नः ।
इति संदिश्य तं पार्थः पुनरेव धनंजयम् ।
अब्रवीदायुधानीह निधातुं भरतर्षभ ।

16 Before 16, T1 G2 ins. वैशं; G3 युधिष्ठिरः. — After $16^{a}$, S ins.:

160* पिशाचोरगराक्षसान् ।
निवातकवचांश्चापि पौलोमांश्च परंतपः ।
कालकेयांश्च दुर्धर्षान्.

— $^{b}$) B (except B4) Dn2 D1.3.6.10–12 S सर्वांश्च (for सर्पांश्च). — $^{d}$) K B1.3.5 Dn D7.9.11.12 कुरुपुंगवः; B4 °नंदन; D1–3 पांडु°.

17 $^{a}$) D5 T1 M2 तं (for तद्). T1 G M उदग्रं (for उदारं). T2 तदग्रं च (for तदु°). B (except B5) D1–5.7.8.10 T G1 M1 महाघोरं; G2.3 °वेगं. — $^{b}$) K °सेवितं; Dn D11.12 संपन्नबल°; D2 °जन°. — $^{c}$) S (except T2) असज्यं. — $^{d}$) D3.4.7.9 गांजीवं. B Dn2 D3.5.6.11.12 सु- (D3 स; D8 च)भयंकरं (for अभ°).

18 M3 om. $18^{ab}$. — S ins. after $18^{ab}$ (M3, om. lines 1 and 2, after 17):

161* जृम्भिते च धनुष्यस्त्रं न्यासार्थं नृपसत्तमः ।
धर्मपुत्रो महातेजाः सर्वलोकवशीकरम् ।
भुजंगभोगसदृशं मणिकाञ्चनभूषितम् ।
वित्रासनं दानवानां राक्षसानां च नित्यशः ।

[ (L. 1) G2.3 धनुश्रेष्ठे; M1.4 (*sup. lin.*) धनुष्यस्मिन्; M5 °ष्यत्र. T1 अजृंभयत तच्छ्रेष्ठं. — (L. 2) T1 °वशंकरं; G2.3 °वशीकृतं. — (L. 3) T1 M1.4 मणिप्रवर°; G1.3 °भूषणं; G2 महाकांचन°. ]

— $^{cd}$) S धनूरत्नं महातेजा जृंभयामास पांडवः.

19 $^{a}$) A few MSS. पंचालान्. — $^{c}$) D4 प्रत्ययुध्यत; G1 विप्रषेधत्. — $^{d}$) S (except M1.2) अपि (for एव).

20 $^{a}$) S (except T1) Ca विष्फारं; Cc as in text. — $^{b}$) B1 व्यद्रव्यंश्च; B4 D1.7–9 S विद्रवंति; B5 प्राद्रवंत; D4 विद्रवंते. Dn1 रणात् (for रणे). B1.8 रिपून् (for परे).

21 $^{a}$) D5.7 चैव (for येन). M5 संग्रामे (for राजानं). — $^{b}$) B2.4 D4.10 Ca.c पर्यामृषत; B5 D1–3.6 पर्यामृशत; D5 पर्यामर्षत; D7 पर्यमर्षत; D8 प्रत्यषेधत; Cv as in text. B (except B2) D2.5–8 चानघः (D8 °घं); D4 भारत; D9 पांडवः. Dn D11.12 पर्यामृषितवानथ; S जित्वा क्रुद्धः परामृशत्. — After $21^{ab}$, S (M5 om. line 3) ins.:

162* येन क्रोधवशाञ्जघ्ने पर्वते गन्धमादने ।
दिव्यं सौगन्धिकं पुष्पं येनाजैषीत्स पाण्डवः ।
त्रिगर्तान्येन संग्रामे जित्वा त्रैगर्तमानयत् ।
इन्द्रायुधसमस्पर्शं वज्रहाटकभूषितम् ।

[ (L. 1) M5 तत्र (for जघ्ने). G3 राक्षसान् (for पर्वते). — (L. 2) M4 *sup. lin.* अनैषीत्. G परंतपः (for स पाण्डवः). ]

— $^{c}$) B1.3 ज्यां तस्य; Dn2 D11 ज्यां तां स; D12 ज्यातं स; Cc ज्यापाशं (as in text). B1.3 वीरो (for तस्य). — $^{d}$) K °नोप्यवातरत्. — After 21, S ins.:

163* नकुलं पुनराहूय धर्मराजो युधिष्ठिरः ।
उवाच येन संग्रामे सर्वशत्रूञ्जिघांससि ।
सुराष्ट्राञ्जितवान्येन शार्ङ्गगाण्डीवसंनिभम् ।
सुवर्णविकृतं सारमिन्द्रायुधनिभं वरम् ।
तवानुरूपं सुदृढं चापमेतदलंकृतम् ।
तत्स्रंसयित्वा ज्यापाशं निधातुं धनुराहर ।
सहदेवं च संप्रेक्ष्य पुनर्धर्मसुतोऽब्रवीत् ।
कलिङ्गान्दाक्षिणात्यांश्च मागधांश्चारिमर्दन ।
येनैव शत्रून्समरे अधाक्षीररिमर्दन ।
तत्स्रंसयित्वा ज्यापाशं निधातुं धनुराहर ।

[ M2.4.5 transp. lines 1–6 and 7–10. G1 om. lines 1–2. After line 2, M1 reads line 6 (for the first time) and then $22^{ab}$. — (L. 3) Om. in G1 M1.3 M2.4 सुराष्ट्रं. M2 °धन्विनं (for °संनिभम्). — After line 3, M4 reads $22^{ab}$. — (L. 4) Om. in G1. M2.3 °युधवरोपमं. — G1 M1.3 om. line 5. — (L. 6) Om. in G1. T ज्यापाशान्. T2 निधाय. M1 धनुराहरत्; M2 समुपाहर. — M3 om. lines 7–10. — (L. 8) T1 °मर्दनान्; G1.3 M2 °मर्दनः; M1.4 (*sup. lin.*) अपि दिग्जये. — (L. 9) G2.3 संग्रामे (for समरे). T1 न्यधाक्षीः; T2 व्यधा°; G1 M5 °क्षीद्; G3 ह्यधा°; M1.2 -स्वधा°. — (L. 10) T ज्यापाशान्. T2 निधाय. ]

— M1 cont.: M2 ins. after line 6 of the same

तस्य मौर्वीमपाकर्षच्छूरः संक्रन्दनो युधि ॥ २२
दक्षिणां दक्षिणाचारो दिशं येनाजयत्प्रभुः ।
अपज्यमकरोद्वीरः सहदेवस्तदायुधम् ॥ २३
खड्गांश्च पीतान्दीर्घांश्च कलापांश्च महाधनान् ।
विपाठान्क्षुरधारांश्च धनुर्भिर्निदधुः सह ॥ २४
तामुपारुह्य नकुलो धनूंषि निदधत्स्वयम् ।
यानि तस्यावकाशानि दृढरूपाण्यमन्यत ॥ २५
यत्र चापश्यत स वै तिरो वर्षाणि वर्षति ।
तत्र तानि दृढैः पाशैः सुगाढं पर्यबन्धत ॥ २६
शरीरं च मृतस्यैकं समबध्नन्त पाण्डवाः ।
विवर्जयिष्यन्ति नरा दूरादेव शमीमिमाम् ।
आबद्धं शवमत्रेति गन्धमाघ्राय पूतिकम् ॥ २७ C. 4 173 B 4.5 32 K. 4.7.45

---

passage (cf. $22^{ab}$):

164* अजयद्दक्षिणामाशां धनुषा येन पाण्डवः ।

Thereafter M1 repeats line 10 of 163*. — M2 ins. after 164*: M3, after $22^{ab}$:

165* तदसज्यं धनुश्चक्रे नकुलो धनुरात्मनः ।
कलिङ्गान्दाक्षिणात्यांश्च येनाजयदरिंदमः ।

22 T G M5 om. 22–23; M2 om. 22. M1.4 read $22^{ab}$ after line 3 and 6 of 163*. — After $22^{ab}$, N ins.:

166* माद्रीपुत्रो महाबाहुस्ताम्रास्यो मितभाषिता ।

[ B (except B4) D3.7.9 ताम्राक्षो. B1.3.5 D6 [ऽ]मितविक्रमः; B2 Dn1 D1.9 °भाषितः; B4 D3 °भाषिणः; D7 मृदु°. ]

— After $22^{ab}$, M3 ins. 165* (cf. v. l. 21). — M1.3 om. $22^{cd}$; M4 om. $22^{c}$–$23^{d}$. — $^{c}$) D1–3 तस्मान् (for तस्य). K2 समाकर्षत्; D7 अपावर्षत्; D8 अपाकार्षीत्; Ca as in text. — $^{d}$) B1.3 संहननो; Ca.c.v संक्रन्दनो (as in text). B1 3 D4 युवा (for युधि). — After 22, N ins.:

167* कुले नास्ति समो रूपे यस्येति नकुलः स्मृतः ।

[ D4 बले (for कुले), and यस्य (for रूपे). B3 कुले यस्यास्ति न समो; Cc.r as above (but in prose order). B3 रूपेण (for यस्येति). D1–3 नकुलस्तेन स (D3 सं-) स्मृतः. D4 reads रूपेण यशसा श्रिया for the posterior half, and cont.:

168* तेन तस्याभवन्नाम नकुलेति धनंजय ।]

23 T G M4.5 om. 23 (cf. v. l. 22). — $^{ab}$) M1 अजयद्दक्षिणामाशां धनुषा येन पाण्डवः (=$164^{f}$). — After $23^{ab}$, M1 ins. line 10 (with v. l. धनुराहरत्) of 163*; while M2.3 ins.:

169* यस्माल्लघुतरो नास्ति किंचिद्योद्धासि चर्मणि ।

M1 om. $23^{cd}$. — $^{c}$) M2.3 असज्यम् (for अपज्यम्). — $^{d}$) B3 M2.3 स्वमायुधं; D2–4.8 तथायु°.

24 $^{a}$) D1–4 सु- (for the first च). K1 पानान्; B1.2.5 Dn D6.11.12 दीप्तान्; D5 दीर्घान् (for पीतान्). B4 तीक्ष्णाग्रान्; Dn2 D8 दीर्घांश्च; D5 दीप्तां च. B3 (m as in text) खड्गान्दीर्घान्कलापांश्च; D7 खड्गान्दीर्घानदीप्तांश्च; D9 खड्गान्दीर्घान्प्रदीप्तांश्च; S दीर्घांश्च खड्गान् सुदृढान् (M3 विमलान्); Cc पीतान्दीप्तांश्च खड्गांश्च. Ca cites पीतान् and दीर्घान्, Cr अदीर्घांश्च, Crp (Dev.) पीनदीर्घांश्च. — $^{b}$) B3 तोमरांश्च (for कला°); cf. Cs तोमरो हस्तक्षेप्यो बाणः. S निशितान् (M2 विमलान्; M3 विपुलान्) कनकत्सरून्. Ca.v cite कलापान् and महाधनान्. — $^{c}$) S विविधान्क्षुरनाराचान्. — $^{d}$) Dn2 D11.12 निदधे. S निस्त्रिंशां(M2.3 असङ्गां)श्च शरानपि. — After 24, Dn D9.11.12 ins.:

170* वैशंपायन उवाच ।
अथान्वशात्स नकुलं कुन्तीपुत्रो युधिष्ठिरः ।
आरुह्येमां शमीं वीर धनूंष्येतानि निक्षिप ।

[ (L. 1) D9 Cn °न्वशासत् (for °न्वशात्स). ]

— After 24, S ins. a passage given in App. I (No. 3).

☞ For st. 25–31, S subst. a passage which, besides containing some additional stanzas, shows other differences. The Southern passage (with its variants) is given separately, under v. l. 31.

25 For S cf. v. l. 31. — $^{b}$) K B1–3 न्यदधत्; B4 Dn1 D4.7.9 निदधे; B5 D6.8.10 अवदधे; D1–3 अभ्यादधत्; D5 अवदधत्. — After $25^{ab}$, D6 ins.:

171* गाण्डीवं चापरं तत्र चतुर्भिर्निदधे सह ।

— $^{c}$) B1.3 तस्यावगाहानि; D10 °वशाखानि; Cn.s तस्या वकाशानि (sic); Cv as in text. — $^{d}$) B2 Dn1 D12 दिव्य°; D1–4 दृश्य°; D7.9 दृष्ट° (for दृढ°).

26 For S cf. v. l. 31. — $^{a}$) Dn2 D8.12 वा (for च). K2 D8 यत्र चा(D8 वा)पश्यति स वै; D4 यत्र पश्यत वर्षं वै; D7 यत्र चापश्यतः सर्वे; D9 यत्रामन्यन्न जलदो; D10 यत्र चापश्य तस्यैव.

27 For S cf. v. l. 31. — $^{a}$) Dn1 च मृतं च; D1.3.8.9 मृतकस्य (for च मृतस्य). Ca.v as in text (Cv does not cite च). — $^{b}$) D5.10 समबंधंत; D7.8 समबंधत; D9 पर्यबध्नात्स; Ca as in text. D1–4 समादाय न्यबंधत (D3 निबंधयत्; D4 निबंधत). $27^{cdef}$=(var.)

C. 4.173 B. 4.5.32 K. 4.7.59 अशीतिशतवर्षेयं माता न इति वादिनः ।
कुलधर्मोऽयमस्माकं पूर्वैराचरितोऽपि च ।
समासजाना वृक्षेऽस्मिन्निति वै व्याहरन्ति ते ॥ २८
आ गोपालाविपालेभ्य आचक्षाणाः परंतपाः ।
आजग्मुर्नगराभ्याशं पार्थाः शत्रुनिबर्हणाः ॥ २९
जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥ ३०
ततो यथाप्रतिज्ञाभिः प्राविशन्नगरं महत् ।
अज्ञातचर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥ ३१

इति श्रीमहाभारते विराटपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

---

Mañj. 4. 27. — [c]) K विवर्जयंति च; D1–3 वर्जयिष्यंति हि. — [d]) D1–3 हि तां शमीं (for शमीमिमाम्). — [e]) K शावम् (for शवम्); cf. v. l. 1. 36. 24[c]. — [f]) K1 B2 आदाय (for आघ्राय).

28 For S cf. v. l. 31. — [a]) ❀ Cc: अशीतिः शतं च वर्षाणि यस्याः। टीकान्तरं पाठान्तरे। ❀ — [b]) D6 मातामहीति वा°. Ca cites माता and नः. — After 28[ab], K2 D4.5 ins.:

172* यया जाता स्म वृद्धा स्म इति वै व्याहरन्ति ते ।

(cf. 28[f]). — [d]) B2 Dn D7.11.12 वा (for च). — [e]) B Dn D5–12 Cr (Dev.) समासज्याथ (for °सजाना). D4 समासज्यायुधानीत्थं. — [f]) D4 अन्योन्यं (for इति वै). K च (for ते). — After 28, D4 ins.:

173* तस्माद्वृक्षादपाक्रम्य व्याहरन्तस्ततस्ततः ।

29 For S cf. v. l. 31. — [b]) Dn2 D11.12 आचक्षुस्ते; D1–3 आचक्षेयुः; D4.9 आचक्षंतः; D8 ह्याचक्षाणाः; Ca.r as in text. — [c]) A few MSS. °भ्यासं. — After 29, D2 (marg.).6 ins. a short passage each, given in App. I (No. 4 A & B), a variant version of the so-called Durgāstava.

30 For S cf. v. l. 31. — [c]) B2 गुप्ता°; B4 नामा° (for गुह्या°). D4.5 transp. गुह्या° and नामा°. B4 गुप्ता° (for नामा°). — [d]) K B2.4 D4–6 transp. चक्रे and तेषां. — After 30, D4.10 ins. an addl. adhy. given in App. I (No. 4C), which D5 ins. after adhy. 5, a variant version of the so-called Durgāstava.

31 For S see below. D4 om. 31. — [a]) B1.3.4 D9.10 °ज्ञातं; D6 °ज्ञाते. — [b]) D1–3 transp. प्राविशन् and नगरं. — After 31, D3 ins.:

174* रामाभिरामसुरपादपतुल्यगन्धैः
पुष्पैरलंकृतधरं सुनिविष्टवप्रम् ।
प्राकारतोरणगृहैरिव मन्दराद्रि-
* * * कूटमथ ते ददृशुः पुरं[ हि ] तत् ।

☞ For 25–31, S subst.:

175*

(29) {आगोपालाविपालेभ्यः कर्षकेभ्यः परंतपाः ।
आजग्मुर्नगराभ्याशं श्रावयन्तः पुनः पुनः ।
(28[ab]) अशीतिशतवर्षेयं मातास्माकमिहेति च ।
बहुकालपरीणामान्मृत्योस्तु वशमेयुषी ।
(28[c]) न चाग्निसंस्कारमियं प्रापिता कुलधर्मतः ।
यः समासाद्यते कश्चित्तस्मिन्देशे यदृच्छया ।
(28[e]) तमेवमूचुर्धर्मज्ञाः कुलधर्मो न ईदृशः ।
अथाब्रवीद्धर्मराजः सहदेवं परंतपः ।
इदं गोमृगमभ्याशे गतसत्त्वमचेतनम् ।
एतदुत्कृत्य वै वीर धनूंषि परिवेष्टय ।
एवमुक्तो महाबाहुः सहदेवो यथोक्तवत् ।
(25[ab]) शमीमारुह्य त्वरितो धनूंषि परिवेष्टयत् ।
शीतवातातपभयाद्वर्षत्राणाय दुर्जयः ।
तानि वीरो यदाजानान्निराबाधानि सर्वशः ।
पुनः पुनः सुसंवेष्ट्य कृत्वा सुकृतकारिणः ।
अथापरमदूरस्थमुञ्छवृत्तिकलेवरम् ।
प्रायोपवेशनाच्छुष्कं स्नायुचर्मास्थिसंवृतम् ।
तच्चानीय धनुर्मध्ये विनिबध्य च पाण्डवाः ।
उपायकुशलाः सर्वे प्रहसन्तः समब्रुवन् ।
(27[f]) अस्य गन्धस्य दौर्गन्ध्यान्मनुष्या वनचारिणः ।
(27[cde]) दूरात्परिहरिष्यन्ति सशवेयं शमी इति ।
अथाब्रवीन्महाराजो धर्मात्मा स युधिष्ठिरः ।
रज्जुभिः सुदृढं प्राज्ञ विनिबध्नीहि पाण्डव ।
(25[cd]) यानि चात्र विशालानि रूढमूलानि मन्यसे ।
तेषामुपरि बध्नीहि इदं विप्रकलेवरम् ।
विश्रावयन्तस्ते हृष्टा दिशः सर्वा व्यनादयन् ।
स्वर्गतेयमिहास्माकं जननी शोकविह्वला ।
वने विचरमाणानां लुब्धानां वनचारिणाम् ।
(28[cd]) कुलधर्मोऽयमस्माकं पूर्वैराचरितः पुरा ।
एवं ते सुकृतं कृत्वा समन्तादवघुष्य च ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रावुभावपि ।
युधिष्ठिरश्च कृष्णा च राजपुत्री सुमध्यमा ।
(31[ab]) ततो यथासमाज्ञप्तं नगरं प्राविशंस्तदा ।

# ६

वैशंपायन उवाच ।
ततो विराटं प्रथमं युधिष्ठिरो
राजा सभायामुपविष्टमाव्रजत् ।
वैडूर्यरूपान्प्रतिमुच्य काञ्चना-
नक्षान्स कक्षे परिगृह्य वाससा ॥ १

नराधिपो राष्ट्रपतिं यशस्विनं
महायशाः कौरववंशवर्धनः ।
महानुभावो नरराजसत्कृतो
दुरासदस्तीक्ष्णविषो यथोरगः ॥ २
बलेन रूपेण नरर्षभो महा- C. 4 216 B. 4 7. 3

मत्स्यराज्ञो विराटस्य समीपे वस्तुमञ्जसा ।
(31[cd]) अज्ञातचर्यां चरितुं वर्षं राष्ट्रे त्रयोदशम् । [35]
(30[cd]) अथ छन्नानि नामानि चकारैषां युधिष्ठिरः ।
(30[ab]) जयो जयेशो विजयो जयत्सेनो जयद्बलः ।
आपत्सु नामभिस्त्वेतैः समाह्वामः परस्परम् ।

[ M om. the posterior half of line 1 and the prior half of line 2. — (L. 1) G2.3 परंतप. — (L. 3) T G °मिहान्तिके. — (L. 4) T1 M4.5 इह; M1–3 मृता (for बहु). — (L. 5) M4.5 प्राप्ता हि (for प्रापिता). — (L. 6) M1 यस्मिन्नासाद्यते; M2.5 योस्मिन्नासा°; M3 न समासा°. G1 M (except M4) पुमान् (for तस्मिन्). — (L. 7) M2.5 आहुः; M3 आह (for ऊचुः). M3 धर्मज्ञः. G1 M2.4 यम् (for न). M3 °धर्ममनुस्मरन्. — (L. 10) G2 धीर; M5 चर्म (for वीर). — (L. 11) M4 राज्ञो वचनमाज्ञाय (for the prior half). — (L. 12) M2 विधिवद्; M3 महतीं (for त्वरितो). — (L. 13) T2 G1 दुर्जयात्. — (L. 14) T2 राजा; G1 राजन्; G2 M2 जानन्. — (L. 15) T1 सुकृतमारवं; T2 G1 °माचरत्; G2 °मावरं; G3 °मंबरं. — (L. 17) T1 M1 स्नायुमजास्थि°; T2 G °संयुतं. — (L. 18) T1 G1 निर्बंबंधुश्च; T2 विनिबंधुश्च; G2.3 विनिबध्य. — (L. 19) T1 प्रहसंश्च. T1 इदमब्रुवन्; G1 च दुद्रुवन्; M1.5 ततोब्रुवन्; M2 तमब्रुवन्. — (L. 20) M5 देह° (for गन्ध°). T1 शवस्यास्य च दौ°; G2 अस्यागमस्य दौ°. — (L. 21) G1 M2–4 ससत्वेयं. T1 शमीमिति; T2 G शमीति ह (G1 हि). — (L. 22) G2.3 M2 महातेजाः; M4 °राज. T2 G2 (by transp.) स धर्मात्मा; G1.3 धर्मराजो; M1.5 सहदेवं. — (L. 23) G सुकृतं (for सुदृढं). M1 °भिः सहदेवाशु. G विनिर्बध्नीहि; M5 °बध्यस्व. — (L. 25) M1.4.5 बध्यस्व; M2 बद्धस्य (for बध्नीहि). — After line 25, M5 ins.:

176* तथा तत्सर्वमकरोत्सहदेवो यथोक्तवान् ।

— (L. 26) T2 सर्वांस्ते; G1 सर्वास्ते; G2.3 ते सर्वे (for ते हृष्टा). — (L. 28) G3 M2–5 बुद्धानां; M1 सिद्धा° (for लुब्धा°). — (L. 29) G2.3 M2.4 आचरितं. — (L. 30) T1 समयं (for सुकृतं). — M1.3.4 transp. lines 31 and 32. — (L. 31) M5 माद्रीपुत्रौ च तावुभौ. — (L. 34) T1 G1 समीपं. — G1 M1.3–5 om. line 38. ]

☞ After adhy. 5, Dn D3.5–7.9.11.12 T2 ins. an additional adhy. given in App. I (No. 4 C, D, E, F, G), one of the versions of what is popularly known as the Durgāstava; cf. v. l. 29, 30. All reference to Durgā is missing in K B D1.3 and in S (except the composite MS. T2).

Colophon om. in D4.10 T2. — *Adhy. name:* B1.3 नगरगमनं; B2 अस्त्रनिधानं; B4 अस्त्रन्यसनं; B5 D5.6 G3 M1.2 आयुधन्यासः; Dn D9.11.12 पुरप्रवेशः; D1–3 आयुधनिक्षेपः; D7 शस्त्रन्यासः; G1 नगरप्रवेशः. — *Adhy. no.* (figures, words or both): K2 B4 D5.6.9 5; T1 G M 7. — *S'loka no.:* D3 37; G3 67.

## 6

1 After वैशं°, S ins. a passage given in App. I (No. 5). — S transp. 1[ab] and 1[cd]. — [b]) S ददर्श दूरात्सुसमृद्धतेजसं. — [c]) A few MSS. वैदूर्य°. D1–3 °नद्धान्; D9 °बिंदून् (for °रूपान्). K D1 2 प्रवि°; B D4–7 °गृह्य; Cs प्रतिमुच्य (as in text). S निबध्य (T G1 °द्ध्य) वैडूर्यचितान्सकांचनान् (M1 वैडूर्यचित्रान्सुगुणान्मृगासितान्). — [d]) S (except M1) नृपस्तदाक्षान् (for अक्षान्स कक्षे). B3 D5.7 Ca.cp.rp परिरभ्य; D4 प्रतीगृह्य; S °वेष्ट्य; Cc.r.s as in text. K D1.10 वाससि; D2.4.8 °सी; Cc.r.s as in text.

☞ For st. 2–15, S subst. a passage which, besides containing some additional stanzas, shows other differences. The Southern passage (with its variants) is given separately under v. l. 15.

3 For S cf. v. l. 15. — [a]) D1.2.4.8 परेण (for बलेन). B1.3 (m as in text) तथैव तेजसा; D4 यथा पुरंदरः (for नरर्षभो महान्). — [b]) B4 तथार्चि°; B5 Dn

C. 4. 216
B. 4. 7. 3

नथाचिरूपेण यथामरस्तथा ।
महाभ्रजालैरिव संवृतो रवि-
र्यथानलो भस्मवृतश्च वीर्यवान् ॥ ३
तमापतन्तं प्रसमीक्ष्य पाण्डवं
विराटराडिन्दुमिवाभ्रसंवृतम् ।
मन्त्रिद्विजान्सूतमुखान्विशस्तथा
ये चापि केचित्परिषत्समासते ।
पप्रच्छ कोऽयं प्रथमं समेयिवा-
ननेन योऽयं प्रसमीक्षते सभाम् ॥ ४
न तु द्विजोऽयं भविता नरोत्तमः
पतिः पृथिव्या इति मे मनोगतम् ।
न चास्य दासो न रथो न कुण्डले
समीपतो भ्राजति चायमिन्द्रवत् ॥ ५
शरीरलिङ्गैरुपसूचितो ह्ययं
मूर्धाभिषिक्तोऽयमितीव मानसम् ।
समीपमायाति च मे गतव्यथो
यथा गजस्तामरसीं मदोत्कटः ॥ ६
वितर्कयन्तं तु नरर्षभस्तदा
युधिष्ठिरोऽभ्येत्य विराटमब्रवीत् ।
सम्राड्विजानात्विह जीवितार्थिनं
विनष्टसर्वस्वमुपागतं द्विजम् ॥ ७
इहाहमिच्छामि तवानघान्तिके

D11. 12 अपूर्व°; D1-3 गंधर्व°; D6. 7 Cr अथ स्व° (D6m आर्चिस्व°); D8 मनुष्य°; D10 नरस्व°; Cc.rp (Catur.) अथा(Cc om. अथ)चिरूपेण (as in text). K D9 अथं(D9 °पू)वरूपेण यथा पुरंदरः; B1. 3 निगूढभावो ज्वलनो यथा प्रभुः; B2. 3m अथ स्वरूपेण महारथ(B3m यथामर)स्तथा; D4 अथर्वरूपेण नरर्षभस्तथा.

4 For S cf. v. l. 15. — $^a$) B2 दुरितं नृपोत्तमं; B3 (m as in text) सहसा निरीक्ष्य; D4 त्वरितं नरोत्तमं (for प्रसमीक्ष्य पाण्डवं). Cc cites प्रसमीक्ष्य. — $^b$) D4 नृपो विराटोऽभ्रगतं यथा रविं. — After 4$^{ab}$, N ins.:

177* समागतं पूर्णशशिप्रभाननं
महानुभावं नचिरेण दृष्टवान् ।

[(L. 1) D1. 3-9 सभागतं (D6. 7 °तः). — (L. 2) D4 om. line 2. K B3. 4 D1-3. 5-8. 10 सहा(D5 °भा)नुचारैर-(K D6 °नै)चि°; D9 सभासदैर्नातिचि°.]

— $^c$) K विराटराट्; B2. 3 (m as in text) मत्तद्विजान्; B4 D1-3. 7-10 स तु (D1-3 च) द्विजान्; D4 समुद्विजन् (for मन्त्रि°). D9 मंत्रि° (for सूत°). K द्विजांस्; Ca. c विशस् (as in text). D1-3 transp. विशः and तथा. K D4 तदा; Ca तथा (as in text). — $^d$) D2 ये चानुगास्तं; D9 येन्येपि केचित्; Ca as in text. B Dn D2. 5-12 Ca. c परितः (B3 पुरतः; Dn1 परतः); D4 पुरुषाः (for परिषत्). D4 समागताः; Ca समासते (as in text). D1. 3 ये चानुगास्तत्परिषत्सु ते स्थिताः. — $^e$) K D1. 3. 8 वः (for ऽयं). Cf. Cv अयं वः युष्माकं कः संबन्धीयः. K D5. 6. 10 Ca समीयिवान्; Cc. v as in text. — $^f$) B Dn D5. 7. 9. 11. 12 नृपोपमोयं (D9 यः); D1-3. 8 नरो हि येषां (D2 योयं; D8 यो वै); D4 मानेन योयं; D6 रूपोपमोयं; D10 इहागतोयं (for अनेन योऽयं). B1. 2. 5 Dn D8. 10-12 समवेक्षते (for प्रस°).

5 For S cf. v. l. 15. — K1 om. 5$^c$-6$^b$. — $^a$) K2 दासी; B1. 2. 3 (m as in text). 4. 5 D5-7. 9 वाजी; D1-4 दासा (for दासो). B Dn2 D5-7. 9. 11. 12 कुंजरः (for कुण्डले). — $^d$) D4 सभागतो (for समी°).

6 For S cf. v. l. 15. K1 om. 6$^{ab}$ (cf. v. l. 5). — $^b$) B1 °षिक्त इति मे मनोगतं; B3. 4 Dn D5-9. 11. 12 °षिक्तस्त्वि(Dn D11. 12 °क्त इ°; D8 °क्तो ह्य)ति मेत्र मानसं; D1-3 °षिक्तो मम चेतसि स्थितं; D4 मूर्धावसिक्तः प्रतिभाति मे हृदि. — $^c$) D1-3 °व्यथं. — $^d$) D1. 3 महीं; D2. 6 महान्; Ca गजस् (as in text). Cap तामरसी; Cr. s as in text. D1-3 महागजः; Ca मदोत्कटः (as in text).

7 For S cf. v. l. 15. — $^a$) K2 B5 D5 च; D8. 10 स (for तु). K2 B5 D5-7. 9 °र्षभं. B1. 2 Dn2 D7. 9. 11. 12 तथा; B3 यथा (for तदा). D1-3 वितर्कयामास च तं नरर्षभः. — Before 7$^{cd}$, B3. 4 D5 ins. युधिष्ठिर उ°. — $^c$) Dn D11. 12 विजानीहि हि; D1. 3 °वजानामिह. B1. 4 Dn2 D3-9 जीवनार्थिनं. — After 7, D7. 9 ins.:

178* विद्धि प्रभो मत्स्यपते कुलोत्तमं
सेवार्थिनं सेवकमानवर्धनम् ।

8 For S cf. v. l. 15. — $^a$) K D10 °कं (for °के). — $^b$) D1-3 तथा(D2 °वा)भिभो. — $^d$) D4 Cv प्रति संग्रहेण; Ca. c. vp as in text. Cr cites only गृहाण. D8 प्रहृष्टरूपो जगृहे तथागतं. — After 8, N (except K1 D1) ins.:

179* तं राजसिंहं प्रतिगृह्य राजा
प्रीतात्मना चैवमिदं बभाषे ।

वस्तुं यथा कामचरस्तथा विभो ।
तमब्रवीत्स्वागतमित्यनन्तरं
राजा प्रहृष्टः प्रतिसंगृहाण च ॥ ८
कामेन ताताभिवदाम्यहं त्वां
कस्यासि राज्ञो विषयादिहागतः ।
गोत्रं च नामापि च शंस तत्त्वतः
किं चापि शिल्पं तव विद्यते कृतम् ॥ ९

युधिष्ठिर उवाच ।

युधिष्ठिरस्यासमहं पुरा सखा
वैयाघ्रपद्यः पुनरस्मि ब्राह्मणः ।
अक्षान्प्रवप्तुं कुशलोऽस्मि देविता
कङ्केति नाम्नास्मि विराट विश्रुतः ॥ १०

विराट उवाच ।

ददामि ते हन्त वरं यमिच्छसि
प्रशाधि मत्स्यान्वशगो ह्यहं तव ।
प्रिया हि धूर्ता मम देविनः सदा
भवांश्च देवोपम राज्यमर्हति ॥ ११

युधिष्ठिर उवाच ।

आप्तो विवादः परमो विशां पते
न विद्यते किंचन मत्स्य हीनतः ।
न मे जितः कश्चन धारयेद्धनं
वरो ममैषोऽस्तु तव प्रसादतः ॥ १२

विराट उवाच ।

हन्यामवध्यं यदि तेऽप्रियं चरे-
त्प्रव्राजयेयं विषयाद्द्विजांस्तथा ।
शृण्वन्तु मे जानपदाः समागताः
कङ्को यथाहं विषये प्रभुस्तथा ॥ १३
समानयानो भवितासि मे सखा
प्रभूतवस्त्रो बहुपानभोजनः ।
पश्येस्त्वमन्तश्च बहिश्च सर्वदा C 4 228 B. 4. 7. 16

[ (L. 1) K2 परिगृह्य; B3 D8 प्रसमीक्ष्य. — (L. 2) B Dn D2.9–12 प्रीत्यात्मना; D8 प्रीतात्मवान्. B3.4 D4.5 चैनम् (for चैवम्). ]

9 For S cf. v. l. 15. Before 9, B3 D2.4.7–10 read विराट उ°. — [b]) = 4. 9. 7[a]. — [c]) D4.8 नाम्ना सह (for नामापि च). — [d]) = 4. 9. 7[b].

10 For S cf. v. l. 15. K1 श्री * * णः; K2 ब्राह्मण उ°; D8 कंक उ° (for युधि° उ°). — [a]) Dn2 D1–3.9 transp. पुरा and सखा. D4 °रस्यास्मि सखा प्रतीतो; Cnp °रः स्याहमहं (sic) सखा. — [b]) B4 प्रवरोस्मि; D4 पुनरेव (for पुनरस्मि). B1.3.4 वै द्विजः; B5 Dn1 D4 Cn.r.s विप्रः; D5 चैव ह; D7.8 गोत्रतः; Cnp (cf. also Csp) ब्राह्मणः (as in text). — [c]) K D1.7 प्रवक्तुं; B Dn D3–6.8–12 Cc प्रयोक्तुं; Cs प्रकर्तुं; only D2 exactly as in text! K वेदिता; B1 देविनां; D2–4.8 देवने. — [d]) K नामा°; Cv नाम्ना° (as in text).

11 For S cf. v. l. 15. — [a]) B4 ददानि. K D7 अहं तु; Cv हंत (as in text). K प्रतीच्छसि; B4 यदि°; D6 यथे°. — [b]) D1–3.10 अस्मि (for हि). D1–3 ते द्विज (for अहं तव). — [c]) B1 Dn1 D12 च (for हि). — [d]) D1.4 °हसि.

12 For S cf. v. l. 15. — [a]) K गुरोर्; B1–3.5 Dn2 D6.7m.8.11.12 Cc.n.s प्राप्तो; Cr.v आप्तो (as in text). N (except K D6.10) Cv प्रथमं; Cc प्रथमः; Cr.cp परमः (as in text). Cap cites आप्तो विवादः परमः and प्राप्नोतु वादं प्रथमं विशां पते, Crp आप्नोतु वादं प्रथमं (and प्रथमः). — [b]) B (except B4) Ca कश्चन; Dn D11.12 Cs कं च न; D6 किं न च; Cr किंचिन्; Cv.ap as in text. Ca cites (in prose order): मत्स्य विशां पते हीनतः कश्चन न विद्यते मम विवादः [इति] प्रथमं प्राप्तः [वरः]. — [c]) D2.8 Cv जितं; Ca.c.r.s as in text. K दापयेद्धरं; Ca.c.r.s.v धारयेद्धनं (Cr om. धनं) (as in text). — [d]) N (except K B2.4 D3.10) Cv प्रसादजः.

13 For S cf. v. l. 15. — [a]) B1 (m as in text).3.5 Dn D5.6.10–12 अवश्यं (for अवध्यं). — [b]) D1–4 विवास° (for प्रव्राज°). D4 द्विजर्षभान् (for द्विजांस्तथा). — B2 om. 13[cd]. — [c]) K पौरजनाः (for जान°). D4 समेताः (for समा°). — [d]) D8 transp. प्रभुः and तथा.

14 For S cf. v. l. 15. — [a]) K संपन्नजातो; B2–4 D1–10 Ca.r.v °जातो; B5 °यातो. D1–3 अस्मि भवांश्च; Ca भवितासि (as in text). — [b]) K बहुमान°; D10 °भोजनं. — [c]) D7.9 संपश्य मे (for पश्येस्त्वम्). Cv संमदा (for सर्वदा). — [d]) B3 D5 तव; D1–3 मया (for च ते). B3 अनावृतं; Ca.c अपा° (as in text). D1–3 यतः (for मया).

C 4 228
B, 4.7.16

कृतं च ते द्वारमपावृतं मया ॥ १४
ये त्वानुवादेयुरवृत्तिकर्शिता
ब्रूयाश्च तेषां वचनेन मे सदा ।
दास्यामि सर्वं तदहं न संशयो

15 [a]) K ये बांधवा वेयुरवृत्तिकर्षिता; B4 D10 ये त्वानुयाचेयुर°; Dn D11.12 ये त्वानुवादैः पुर°; D1.3 ये त्वानुसंधेयुर°; D2.4.5 ये त्वानुबाधेयुर°; D6.7.9 Cr ये त्वां च याचेयुर°; D8 ये त्वानुधावेयुर°. Crp (Catur.) cites त्वानुवादेयु: (as in text). A few MSS. °कर्षिताः. — [b]) B Dn D6.7.9.11.12 मां सदा; D10 सर्वदा. — [c]) D1-3 सततं (for तदहं). — [d]) Dn2 D2.7.11 विद्यते; D4 तिष्ठति. D1.3 न विद्यते ते मम संनिधौ भयं.

☞ For 2–15, S subst.:

180* अनन्ततेजोज्वलितं यथानलं
(2[d]) दुरासदं तीक्ष्णविषं यथोरगम् ।
सभागतं प्राञ्जलिभिर्जनैर्वृतं
विचित्रनानायुधशस्त्रपाणिभिः ।
उपायनौघैः प्रविशद्भिरार्चितं
द्विजैश्च शीक्षाक्षरमन्त्रधारिभिः ।
गजैरुदीर्णं तुरगैश्च संकुलं
मृगद्विजैः कुब्जगणैश्च संवृतम् ।
सितोच्छ्रितोष्णीषनिरुद्धमूर्धजं
विचित्रवैडूर्यविकारकुण्डलम् ।
विराटमाराद्य युधिष्ठिरस्तदा
बृहस्पतिः शक्रमिव त्रिविष्टपे ।
(4[a]) तमाव्रजन्तं प्रसमीक्ष्य पाण्डवं
(4[b]) विराटराजो मुदितेन चक्षुषा ।
(4[c]) पप्रच्छ चैनं स नराधिपो मुहु-
(4[c]) र्द्विजांश्च ये चास्य सभासदस्तदा ।
(4[e]) को वा विजानाति पुरास्य दर्शनं
(4[f]) युवा सभां योऽयमुपैति मामिकाम् ।
(3[a]) रूपेण सारेण विदारयन्महीं
(3[b]) श्रिया ह्ययं वैश्रवणो द्विजो यथा ।
मृगेन्द्रराड्वारणयूथपोपमः
प्रभात्ययं काञ्चनपर्वतो यथा ।
विरोचते पावकसूर्यसंनिभः
सचन्द्रनक्षत्र इवांशुमान्ग्रहः ।
(5[c]) न दृश्यतेऽस्यानुचरो न कुञ्जरो
न चोष्णरश्म्यावरणं समुच्छ्रितम् ।
(5[c]) न कुण्डले नाङ्गदमस्य न स्रजो
विचित्रिताङ्गश्च रथश्चतुर्युजः ।
(5[ab]) क्षात्रं च रूपं हि बिभर्त्ययं भृशं
गजेन्द्रशार्दूलमहर्षभोपमः ।
अभ्यागतोऽस्माननलंकृतोऽपि स-
न्विरोचते भानुरिवाचिरोदितः ।
विभात्ययं क्षत्रिय एव सर्वथा
विराट इत्येवमुवाच तं प्रति ।
ससागरान्तामयमद्य मेदिनीं
प्रशासितुं चार्हति वासवोपमः ।
नाक्षत्रियो नूनमयं भविष्यति
(6[b]) मूर्धाभिषिक्तः प्रतिभाति मां प्रति ।
तुल्यं हि रूपं प्रतिदृश्यतेऽस्य
व्याघ्रस्य सिंहस्य महर्षभस्य ।
यदेष कामं परिमार्गते द्विज-
स्तदस्य सर्वं क्रियतामसंशयम् ।
प्रियं च मे दर्शनमीदृशे जने
द्विजेषु मुख्येषु तथातिथिष्वपि ।
धनेषु रत्नेष्वथ गोषु वेश्मसु
प्रकामतो मे विचरत्ववारितः ।
एवं ब्रुवाणस्तमनन्ततेजसं
विराजमानं सहसोत्थितो नृपः ।
अनेन रूपेण समीपमागतं
त्रिदण्डकुण्ड्यङ्कुशशिक्यधारिणम् ।
समुत्थिता सा च सभा सपार्थिवा
सविप्रराजन्यविशा सशूद्रका ।
सभागतं प्रेक्ष्य तपन्तमर्चिषा
विनिःसृतं राहुमुखाद्यथा रविम् ।
स तेन पूर्वं जयतां भवानिति
द्विजातिनोक्तोऽभिमुखः कृताञ्जलिः ।
जयं जयार्हेण समेत्य वर्धितो
विराटराजो ह्यभिवादयच्च तम् ।
(8[c]) तमब्रवीत्प्राञ्जलिरेव पार्थिवो
(8[d]) विराटराजो मधुराक्षरं वचः ।
प्राप्तः कुतस्त्वं भगवन्किमिच्छसि
क्व यास्यसे किं करवाणि ते द्विज ।
श्रुतं च शीलं च कुलं च शंस मे
(9[c]) गोत्रं तथा नाम च देशमेव च ।
सत्यप्रतिज्ञा हि भवन्ति साधवो
विशेषतः प्रव्रजिता द्विजातयः ।
तवानुरूपं प्रचरामि ते ह्यहं
न चावमन्ता न श्रुताभिभाषिता ।
अपूजिता ह्यग्निसमा द्विजातयः
कुलं दहेयुः सविषा इवोरगाः ।
सर्वां च भूमिं तव दातुमुत्सहे
सदण्डकोशां विसृजामि ते पुरम् ।
(9[b]) कस्यासि राज्ञो विषयादिहागतः

(9[d]) किं कर्म चात्राचरसि द्विजोत्तम।
एवं ब्रुवाणं तमुवाच पार्थिवो
युधिष्ठिरो धर्ममवेक्ष्य चासकृत्।
सत्यं वचः को न्विह वक्तुमुत्सहे-
द्यथाप्रतिज्ञं तु शृणुष्व पार्थिव।
श्रुतं च शीलं च कुलं च कर्म च
शृणुष्व मे जन्म च देशमेव च।
गुरूपदेशान्नियमाच्च मे व्रतं
कुलक्षमार्थं पितृभिर्नियोजितम्।
द्विजो व्रतेनास्मि न च द्विजः प्रभो
समुण्डितः प्रव्रजितस्त्रिदण्डभृत्।
इदं शरीरं मम पश्य मानुषं
समावृतं पञ्चभिरेव धातुभिः।
ममेह पञ्चेन्द्रियगात्रदर्शिनो
वदन्ति पञ्चैव पितॄन्यथाश्रुति।
मनुष्यजातित्वमचिन्तयन्नह
न चास्मि तुल्यः पितृभिः स्वभावतः।
(10[a]) कङ्को हि नाम्ना विषयं तवागतो
व्रती द्विजातिः स्वकृतेन कर्मणा।
द्यूतप्रसङ्गादधनोऽस्मि राजन्
सत्यप्रतिज्ञा व्रतिनश्चरामहे।
(10[a]) युधिष्ठिरस्यास्मि सखाभवं पुरा
गृहप्रवेशी च शरण्यमेव च।
गृहे च तस्योषितवाहनं सुखं
राजास्मि तस्य स्वपुरेऽभवं पुरा।
ममाज्ञया तत्र विचेरुरङ्गना
मम प्रियार्थं दमयन्ति वाजिनः।
मया कृतं तस्य पुरे तु यत्पुरा
न तत्कदाचित्कृतवाञ्जनोऽन्यथा।
सोऽहं पुरा तस्य वयःसमः सखा
चरामि सर्वां वसुधां सुदुःखितः।
न मे प्रशान्तिं क्वचिदाश्रयामि वै
व्रतोपदेशान्नियमेन हारितः।
(10[b]) वैयाघ्रपद्योऽस्मि नरेन्द्र गोत्रत-
स्तदेव सौख्यं मृगयामहे वयम्।
कृतज्ञभावेन मयानुकीर्तितं
युधिष्ठिरस्यात्मसमस्य चेष्टितम्।
इमं हि मोक्षाश्रममाश्रितस्य मे
युधिष्ठिरस्तुल्यगुणो भवानपि।
न मेऽद्य माता न पिता न बान्धवा
न मे स्वरूपं न रतिर्न संततिः।
सुखं च दुःखं च हि तुल्यमद्य मे
प्रियाप्रिये तुल्यगतिर्गतागते।
मुक्तोऽस्मि कामाच्च धनाच्च सांप्रतं
त्वदाश्रयो वस्तुमिहाभ्युपागतः।
संवत्सरेणेह समाप्यते त्विदं
मम व्रतं दुष्कृतकर्मकारिणः।
ततो भवन्तं परितोष्य कर्मभिः
पुनर्व्रजिष्यामि कुतूहलं यतः।
(10[c]) अक्षान्निवप्तुं कुशलो ह्यहं सदा
पराजितः शकुनिरुतानि चिन्तयन्।
मृगद्विजानां च रुतानि चिन्तय-
न्निराश्रयः प्रव्रजितोऽस्मि भिक्षुकः।
तमेवमुक्ते वचने नराधिपः
कृताञ्जलिः प्रव्रजितं विलोक्य च।
अथाब्रवीद्धृष्टमनाः शुभाक्षरं
मनोनुगं सर्वसभागतं वचः।
(11[a]) ददामि ते हन्त वरं यदीप्सितं
(11[b]) प्रशाधि मत्स्यान्यदि मन्यते भवा न्
(11[c]) प्रिया हि धूर्ता मम चाक्षकोविदा-
(11[d]) स्त्वं चापि देवो मम राज्यमर्हसि।
(14[ab])समानयानासनवस्त्रभोजनं
प्रभूतमाल्याभरणानुलेपनम्।
स सार्वभौमोपम सर्वदार्हसि
प्रियं हि मन्ये तव नित्यदर्शनम्।
(15[a]) ये त्वाभिधावेयुरनर्थपीडिता
द्विजातिमुख्या यदि वेतरे जनाः।
(15[b]) सर्वाणि कार्याण्यहमाथतस्त्वया
(15[cd]) तेषां करिष्यामि न मेऽत्र संशयः।
(13[a]) ममान्तिके यश्च तवाप्रियं चरेत्
(13[b]) प्रवासये तं प्रविचिन्त्य मानवम्।
यच्चापि किंचिद्वसु विद्यते मम
प्रभुर्भवांस्तस्य वशी वसेह च।
युधिष्ठिरः।
(12[ab])अतोऽभिलाषः परमो न विद्यते
(12[c]) न मे जितं किंचन धारये धनम्।
न भोजनं किंचन संस्पृशे त्विह
हविष्यभोजी निशि च क्षितीशयः।
तोपदेशात्समयो हि नैष्ठिको
न क्रोधितव्यं नरदेव कस्यचित्।
एवप्रतिज्ञस्य ममेह भूपते
निवासबुद्धिर्भविता तु नान्यथा।
(12[d]) एवं वरं मात्स्य वृणे प्रवारितः
कृती भविष्यामि वरेण तेऽनघ।
वैशंपायनः।
एवं तु राज्ञः प्रथमः समागमो
बभूव मात्स्यस्य युधिष्ठिरस्य च।
विराटराजस्य हि तेन संगमो

C. 4. 229
B. 4. 7. 17

न ते भयं विद्यति संनिधौ मम ॥ १५
वैशंपायन उवाच ।
एवं स लब्ध्वा तु वरं समागमं
विराटराजेन नरर्षभस्तदा ।
उवास वीरः परमार्चितः सुखी
न चापि कश्चिच्चरितं बुबोध तत् ॥ १६

इति श्रीमहाभारते विराटपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

---

बभूव विष्णोरिव वज्रपाणिना । [160]
तमासनस्थं प्रियरूपदर्शनं
निरीक्षमाणो न ततर्प भूमिपः ।
सभां च तां प्राज्वलयद्युधिष्ठिरः
श्रिया यथा शक्र इव त्रिविष्टपम् ।

[ (L. 1) T G हुताशनं (for यथानलं). — (L. 2) M1-3 °सदस्तीक्ष्णविषो यथोरगः. — (L. 4) T2 M1. 2 °नानाविध°; M3-5 °नानाविधशस्त्रधारिभिः. — (L. 6) T G1 शिक्षा°. — (L. 8) T2 M2. 3 °णैः समावृतं. M1. 4. 5 मृगद्विजश्येनगणाभिनादितं. — (L. 11) T2 M5 आयात् (for आरात्). — (L. 16) G1. 3 M4 द्विजाश्च. M1. 3-5 सदा सभासदः (for सभासदस्तदा). M2 वैश्यांश्च राजा स सभागतांस्तथा. — (L. 18) M1-3 मामिमां (for मामिकाम्). G3 योयं त्विहाभ्येति हि मामिकां सभां. — (L. 23) T2 G विराजते (for विरो°). — (L. 32) G1 विराजते (for विरो°). — (L. 37) G3 M (except M5) असौ (for अयं). — (L. 38) M3-5 मूर्धावसिक्तः. G2. 3 प्रतियाति. — (L. 39) G1 न तुल्यरूपं; M2 क्षात्रं च रूपं. G2 परिदृश्यते; M2 प्रतिपद्यते. M2 शुभं (for ऽस्य). — (L. 40) M1. 3. 5 transp. व्याघ्र° and सिंह°. T1 तदर्षं°; T2 तथर्षं°; G1 यथर्षं°; M1-3 नरर्षभस्य च. — (L. 41) T1 M4. 5 यमेष; G1 येनैष; G2 M2. 3 य एष; M1 यमेव. — (L. 42) T G1 स चास्य; M2 तथास्य. T G1 सर्वैः. — (L. 49) G1. 3 M3-5 अन्येन (for अनेन). G1 समागतं तं (for समीपमा°). — (L. 50) T2 G1 °शच्छत्रधा°; M2. 3 °कुडयांकुश°. — (L. 56) G3 °भिमुखं; M2 °विमुखः. — (L. 61) M1. 3. 4 इच्छसे. M3 कुतोद्य संप्राप्स्यसि वै किमिच्छसे. — (L. 64) G3 तदा; M1. 3. 4 (*sup. lin.*). 5 च ते; M4 च मे (for तथा). M2 गोत्रं च देशं च ममाद्य विप्र. — (L. 67) T2 G यथा (for तव). T2 G1 वितरामि. — (L. 68) M1. 5 हि; M2-4 च (for the second न). T G2. 3 तव (for श्रुता). T2 °षितः; G3 M5 °षितं. G1 न चाभिमन्ये वचसास्मि तोषितः. — (L. 74) G2 M किं चापि कर्म समुदाचरन्भवान्. — (L. 75) M (except M2) पांडवो (for पार्थिवो). — (L. 77) G1 उत्सुकं; G2 M3 उत्सहे. — (L. 78) G1 M3. 5 °ज्ञां; M2 °ज्ञा. — G3 M read lines 79-80 after line 82. — (L. 79) M2. 3 कुलं (for श्रुतं). G2 M1-3. 4 (*sup. lin.* as in text) बलं (for कुलं). — (L. 81) M2 °देशं (for °देशात्), and नियमं (for नियमात्). T1 वने व्रतं; G1 च ते व्रतं; M2 दृढव्रतं. — (L. 82) T1 G2. 3 कुलक्रमार्थं. — (L. 84) T2 M4 सुमुंडितः; G2 सुमं°; M5 समुज्झितः. T2 G2 दंडधृक्; G3 दंडवान्. — After line 84, G3 M read lines 79-80; while G2 repeats them. — (L. 87) G2 °यमात्मदर्शिनो; G3 °यमात्र°. — (L. 88) T2 G2 M4 (*sup. lin.*) °श्रुतिः; G1 °श्रुतं. — (L. 89) M °चिंतयाम्यहं (M4 *sup. lin.* °चिंत्ययाम्यहं, and °चिंतयन्नहं as above). — (L. 90) G3 M प्रभावतः (for स्व°). — (L. 91) G3 M1. 4 5 कंकोस्मि. — (L. 93) M °गाद्वनगोस्मि पार्थिव. — (L. 94) T2 G1. 2 चरामः (for चरा°). — (L. 95) T G अपि (for अस्मि). — (L. 96) T G शरीरम् (for शरण्यम्). — (L. 98) T2 G1. 2 M2 °गृहे (for °पुरे). T2 G1. 2 transp. अभवं and पुरा. — G1 om. lines 99-104. — (L. 99) M1 चरंति ये गजा (for विचेरुरङ्गना). — (L. 101) M1-3. 4 (*sup. lin.* as in text) पुरेषु (for पुरे तु). — (L. 105) T G1. 2 M4 च (for मे). T G °दाम्रवाहनं (for °दाश्रयामि वै). — (L. 106) T1 °मेन भाति नः; G1 °मेन वारितः; M1. 3 °मोभिहारिकः; M2 °मोभिकारितः; M4. 5 °माभिभारि(M5 °र)कः. — (L. 107) T1 G1 वैयाघ्रपादो°; T2 M5 °पाद्यो°. — (L. 112) M4 (*sup. lin.* as in text). 5 °ष्टिरे. — (L. 113) M1 संततिः; M4 *sup. lin.* बांधवो. — (L. 114) T2 G1. 2 न मेस्ति रूपं. M1 बांधवाः (for संततिः). — (L. 116) T1 G2 तुल्यगते; G3 °गती. — T2 reads lines 123-126 after line 138. — (L. 123) G1 °न्निवासुं; G3 M3 °निवर्त्तुं; M1 °न्निवस्तुं; M2 °णिवासुं. G1 M1. 4. 5 अस्मि (for हि). M5 राजन् (for अहं सदा). — (L. 124) T2 G1 शत्रुकृतानि (for शकुनिरु°). — (L. 127) G2. 3 तेनैव°; M5 तदेव°. — (L. 128) T1 विसृज्य; M विपृच्छ्य (M2 प्रविश्य). — (L. 130) G2. 3 मनोगतं. G1 सर्वभवानुगं वचः; M3 सर्वगतं सभागतं. — (L. 131) M3-5 ददानि. T2 हंतु. — (L. 134) T1 G1. 2 M2 °हेति. — (L. 135) G1 स मानयन्नास°; M1. 3. 5 °भोजनः. — (L. 136) M1. 3. 5 °लेपनः. — After line 138, T2 reads lines 123-126. — (L. 146) M1 भवेह (for वसेह). — (L. 147) G2. 3 M4. 5 अतोतिलाभः; M1 अतो निवासः; M2. 3 ततोतिलाभं. — (L. 149) T1

# ७

वैशंपायन उवाच ।
अथापरो भीमबलः श्रिया ज्वल-
न्नुपाययौ सिंहविलासविक्रमः ।
खजं च दर्वीं च करेण धारय-
न्नसिं च कालाङ्गमकोशमव्रणम् ॥ १

स सूदरूपः परमेण वर्चसा
रविर्यथा लोकमिमं प्रभासयन् ।
सुकृष्णवासा गिरिराजसारवा-
न्स मत्स्यराजं समुपेत्य तस्थिवान् ॥ २

तं प्रेक्ष्य राजा वरयन्नुपागतं C. 4. 233 B. 4. 8. 3 K. 4. 10. 7

संस्पृशाम्यहं; G1.3 °शेच्च मे; G3 M2.3 °शे त्वहं; M5 °शेत ह. — (L. 151) M1.4.5 गुरू° (for व्रतो°). — (L. 155) M3.5 मत्स्य. M2 मत्स्यपते (for मात्स्य वृणे). T प्रपूर्यतां; M1.3 प्रदापितं; M2 प्रचारितं; M5 त्ववारितं. — (L. 163) T G M4 प्रज्वलयन्. ]

16 S (except M1–3) om. वैशं° उ°. — a) K D2 transp. स and तु. B3 D4.6 परमं; B5 Dn2 D5.8.9.11.12 तु परं; T1 प्रथमं; T2 G1 नृपतिः; G2.3 M नृवरः (for तु वरं). Cn cites वरं. B2 D1.3 समागमे; D5 °गतं. — b) B4 Dn2 D11.12 °टराज्ञा तु. B4.5 D12 तथा (for तदा). — c) B (except B5) D11 धीरः (for वीरः). D4 सुखं. — d) D4 S चास्य. T2 G1 M2.3.5 किंचित्. D4 व्यबुध्यत; T2 निबोध तत्; G1 कथंचन; M5 °ध सः.

Colophon. — *Adhy. name:* B1–3.5 D (except D5) युधिष्ठिरप्रवेशः; T2 M1–3 युधिष्ठिरविराटसमागमः (T2 °विराटसंवादः); G1 युधिष्ठिरसमयसंवादः; M4 नगरप्रवेशे युधिष्ठिरसमागमः; M5 युधिष्ठिरनगरप्रवेशः. — *Adhy. no.* (figures, words or both): K2 B4 D7.9.10 6; D4.6 5; D5 7; S 8. — *S'loka no.:* D1.3 17; G3 53.

## 7

1 B2 om. 1a–2b. — a) D7.9 त्विषा (for श्रिया). S अथापरस्यां दिशि भीमदर्शनो (T2 G1 भीमसेनो). — b) D7.9 सिंहबलोरु°; Cc सिंहविलास° (as in text). S वृकोदरोदृश्यत सिंहविक्रमः. — After 1ab, T G ins.:

181* असिं प्रवेके प्रतिमुच्य शाणके.
[ T2 प्रवेशे (for प्रवेके). ]

— c) K D8 T2 G1 खंजं; B Dn D5–7.9–12 Ca.c.n.r.s खजां (Dn1 खंजां); D1 खड्गं; D4 खर्वं; Cv as in text. — After 1c, T G ins.:

182* त्वचं च गोचर्ममयीं सुमर्दितां
समुक्षितां पानकरागषाडवैः ।
कीलासमालम्ब्य करेण चायसं
सश्रृङ्गिबेरार्द्रकभूस्तृणाङ्कुरम् ।

Thereafter T2 G1 *repeat* 1c. — T1 G2.3 om. 1d. — d) Dn2 D9.11 कालाननकोशम°; D4 मिकोशभीषणं; D12 T2 G1 कालायसकोशम°; M कालाशनिकाशम°. Cc.n.r.s.v cite कालाङ्गम् (as in text), Cn.s अकोशम् (as in text), Cv अकोशं and भीषणम् (cf. D4 above).

2 B2 om. 2ab (cf. v. l. 1). — a) K D9 (m as in text) असूद°; D8 सुसूद°; S Cv गंभीर°. T G तेजसा; Cv वर्चसा (as in text). — b) B (B2 om.) D (except D4) T2 G1 प्रकाशयन्; M विभासयन्. — c) K1 अकृष्ण°; K2 B (except B5) D (except D2.4.7.9) G2.3 स कृष्ण°; T2 सुश्लक्ष्ण°. Cs गिरिराजसारः (cf. also Ca.n.v). — d) B (except B3) Dn D1.5.6.11.12 तं (for स). — After 2, S ins.:

183* सभां हि तां वारणयूथपोपम-
स्तमिस्रहा रात्रिविवावभासयन् ।
सहस्रनेत्रावरजान्तकोपम-
स्त्रिलोकपालाधिपतिर्यथा हरिः ।
तमाव्रजन्त गजयूथपोपमं
निरीक्षमाणो नवसूर्यवर्चसम् ।
भयात्समुद्विग्नविषण्णचेतनो
दिशश्च सर्वाः प्रसमीक्ष्य चासकृत् ।
तमकवस्त्र परसन्यवारण
सभाविदूरान्नृपतिर्नृपात्मजम् ।
समीक्ष्य वैक्लव्यमुपेयिवाञ्शनै-
र्जनाश्च भीताः परिसर्पिरे भृशम् ।

[ M transp. lines 1–4 and 5–8. — (L. 1) M °यूथपाकृतिः. — (L. 7) M1.2 समुदीक्ष्य (for °द्विग्न-). M °लोचनो (for °चेतनो). — (L. 12) T1 G2.3 परितः ससर्पिरे; M1–3 प्रससर्पिरे भृशं. ]

3 For S see below. — a) B1 Dn1 D1.3.8 रमयन् (for वरयन्). B2.3 D5–7.10 राजानमिवांतिकागतं; B3 m D4 राजा रमयंतमागतं; B4 राजाकसमीपमागतं; B5 राजार्कमिवांतिकागतं; Dn2 D9.11.12 राजा सभयोंतिकागतं; D2 राजा वरजं ह्युपा° (m राजा रमणीयमा वा). — b) D4.5

C 4 233
B. 4 8.3
K. 4 10 7

ततोऽब्रवीज्जानपदान्समागतान् ।
सिंहोन्नतांसोऽयमतीव रूपवा-
न्प्रदृश्यते को नु नरर्षभो युवा ॥ ३
अदृष्टपूर्वः पुरुषो रविर्यथा
वितर्कयन्नास्य लभामि संपदम् ।
तथास्य चित्तं ह्यपि संवितर्कय-
न्नरर्षभस्याद्य न यामि तत्त्वतः ॥ ४
ततो विराटं समुपेत्य पाण्डवः
सुदीनरूपो वचनं महामनाः ।
उवाच सूदोऽस्मि नरेन्द्र बल्लवो

(m as in text) गतो (for ततो). — For 3, S subst.:

184* अथाब्रवीन्मत्स्यपतिः सभागता-
न्भृशातुरोष्णं परिनिःश्वसन्निव ।
योऽयं युवा वारणराजसंनिभः
सभामभिप्रैति हि मामिकामिमाम् ।

[ (L. 1) $T_2$ $M_{1-3}$ मात्स्य°. — (L. 3) $T_2$ G को (for यो). $T_1$ °राजसंमतः; G °यूथपोपमः. — (L. 4) M इमामभिप्राप्स्यति मामिकां सभां. ]

S cont.:

185* को वा विजानाति पुरास्य दर्शनं
मृगेन्द्रशार्दूलगतेर्हि मामकः ।
व्यूढान्तरांसो मृगराडिवोत्कटो
य एष दिव्यः पुरुषः प्रकाशते ।
राजश्रिया ह्येष विभाति राजव-
द्विरोचते रुक्मगिरिप्रभोपमः ।
नाक्षत्रियो नूनमयं भविष्यति
सहस्रनेत्रप्रतिमस्तथा ह्यसौ ।
रूपेण यश्चाप्रतिमो ह्ययं महा-
न्महीमिमां शक्र इवाभिपालयेत् ।
नाभूमिपोऽयं हि मतिर्ममेति च
च्युतः समृद्ध्या नभसीव नाहुषः ।
वैशंपायनः ।
वितर्कमाणस्य च तस्य पाण्डवः
सभामतिक्रम्य वृकोदरोऽब्रवीत् ।
जयेति राजानमभिप्रमोदय-
न्सुखेन सभ्यं च समागतं जनम् ।

[ (L. 6) $G_2$ विराजते (for विरो°). — (L. 7) $T_2$ G $M_{2.4}$ (*sup. lin.*) असौ (for अयं). — (L. 9) $M_{1.2}$ रूपेण यस्य प्रतिमो न विद्यते. — (L. 16) T $G_{2.3}$ $M_{1.3}$ समागतं. ]

4 S om. 4. — [a]) $D_{4.6.10}$ अदृष्टरूपः. K दधिर् (for रविर्). — [b]) $D_{n1}$ $D_1$ लभाम; $D_8$ लभेद्य; Cc लभामि (as in text). B D (except $D_{1-4}$) निश्चयं; Cv संपदम् (as in text). — [c]) $D_{n1}$ $D_{11.12}$ चित्ते; Cv चित्तं (as in text). K ह्यविसं°; $B_{3.4}$ ह्यनिशं वि°; $D_8$ ह्यनिसं°; $D_4$ ह्युपसं°; $D_{7.9}$ ह्यपि संप्र°. Cv cites ह्यपि. — [d]) B $D_{n1}$ $D_{1.2.10-12}$ अस्य; $D_5$ अनु (for अद्य). Cap.rp (Dev.) संपदः; Ca.r.s.v तत्त्वतः (as in text). — After 4, N ins.:

186* दृष्ट्वैव चैनं तु विचारयाम्यहं
गन्धर्वराजं यदि वा पुरंदरम् ।
जानीत कोऽयं मम दर्शने स्थितो
यदीप्सितं तल्लभतां च माचिरम् ।
विराटवाक्येन तु तेन चोदिता
नरा विराटस्य सुशीघ्रगामिनः ।
उपेत्य कौन्तेयमथाब्रुवंस्तदा
यथा स राजावदताच्युतानुजम् ।

[ (L. 1) $D_{7.9}$ रूपं; $D_{12}$ चैवं. $K_1$ $B_{1.3}$ $D_8$ च; $B_{4.5}$ $D_{3-7.10}$ Cc न; $D_{9.11.12}$ नु (for तु). $B_4$ Cc विभावयामि (for विचा°). Cr परिभाव २ (sic). — (L. 2) B (except $B_3$) Dn $D_{5-7.9.11.12}$ °राजो, and पुरंदरः. — (L. 4) $B_3$ यदीप्सिते; $D_{5.7}$ यदिच्छते; $D_{6.9}$ यदीच्छते; $D_{10}$ यदिप्सते. — (L. 5) $B_{1.2}$ Dn $D_{7.9.11.12}$ च (for तु). $B_{2.3}$ $D_{5-7.9}$ ते प्रचोदि°; $D_{1-3}$ तेन नोदिता. $D_4$ विराटराजेन तु चोदिता नरा. — (L. 6) $D_3$ जना (for नरा). $D_{n2}$ $D_{11.12}$ समीपगामिनः; $D_{2.3}$ तु शीघ्र°; $D_8$ च शीघ्र°. $D_1$ विराटराजस्य तु शीघ्र°; $D_4$ गताश्च वेगे सुशीघ्रकारिणः. — (L. 7) $B_{2.4}$ $D_{1-3.5.6.10-12}$ तथा (for तदा). — (L. 8) $B_{3.4}$ $D_{5.6}$ अवदत् (for अवदत). K अच्युताग्रजः ($K_2$ °तः); $B_{2.3}$m Cap.rp अर्जुनानुजं. Ca.c.r.v as in text. Cs cites only अच्युत-. $D_{2.9}$ यथैव राज्ञो वदनाच्युता गिरः. ]

5 [a]) S ततो नृपं वाक्यमुवाच पांडवः ($G_1$ पार्थिवः). — [b]) $B_1$ $D_{n1}$ $D_{4.7.9.10}$ त्व($D_4$ ह्य)दीनरूपं ($D_{9.10}$ °पो); $D_8$ ह्यदीनसत्वः. $B_4$ सुशील°; $D_{n2}$ $D_{11.12}$ स भीमरूपो. $D_3$ महातपाः. S यथानुपूर्व्यात् ($T_2$ °तुष्येत्; $M_{1-3}$ °पूर्व्यं; $M_{4.5}$ °पूर्व्या) कृपयान्वितोत्तरं ($T_2$ $G_1$ °तो नृपः; $M_1$ °तोक्षरं; $M_{2-4}$ °तातुरं; $M_5$ °यत्ननातुरः). — [c]) $K_1$ $D_{3.4.6}$ वल्लभो; Cv वल्लवो; Cc as in text. — For 5[cd], S subst.:

187* त्वां जीवितुं शत्रुदमागतोऽस्म्यहं
त्वमेव लोके परमो हि संश्रयः ।

6 S om. विराट उ° and reads 6[ab] after 190*.

भजस्व मां व्यञ्जनकारमुत्तमम् ।। ५

विराट उवाच ।

न सूदतां मानद श्रद्दधामि ते
सहस्रनेत्रप्रतिमो हि दृश्यसे ।
श्रिया च रूपेण च विक्रमेण च
प्रभासि तातानवरो नरेष्विह ।। ६

भीम उवाच ।

नरेन्द्र सूदः परिचारकोऽस्मि ते
जानामि सूपान्प्रथमेन केवलान् ।
आस्वादिता ये नृपते पुराभव-
न्युधिष्ठिरेणापि नृपेण सर्वशः ।। ७
बलेन तुल्यश्च न विद्यते मया
नियुद्धशीलश्च सदैव पार्थिव ।
गजैश्च सिंहैश्च समेयिवानहं
सदा करिष्यामि तवानघ प्रियम् ।। ८

विराट उवाच ।

ददामि ते हन्त वरं महानसे
तथा च कुर्याः कुशलं हि भाषसे । C 4 241 B 4 8. 11

— $^{a}$) $B_1$ Dn $D_{7.9.11.12}$ बल्लव (for मानद). S न शूद्रतां कांचन लक्षयामि ते. — $^{b}$) $B_1$ Dn $D_{7.9.11.12}$ विराजसे; $B_2$ -सि दृश्यते; $B_{3.5}$ $D_3$ हि दृश्यते. S कुबेरचंद्रेंद्र-दिवाकरप्रभ ($T_1$ $G_1$ °करोपम; $G_3$ $M_{1.2}$ °प्रभः). — S om. $6^{cd}$. — $^{c}$) $Dn_2$ $D_{7.11.12}$ om. the last च. — $^{d}$) $K_1$ प्रभासितामानवरो; $K_2$ °सि वाचानवमो; B Dn $D_{5-7.9.11.12}$ प्रभाससे त्वं नृवरो; $D_1$ प्रशासितातातॊ°; $D_2$ प्रशासि(m प्रभासि)ता तेन°; $D_3$ प्रशासि मत्वं नृवरे; $D_8$ °सि ताराधिपतिर्; $D_{10}$ °सि राजेव वरो. $Dn_2$ °ष्विव; $D_8$ तथा भवान्. Cc cites प्रभाससे.

7 $T_1$ M om. भीम उ°. $B_2$ $D_{4.6.11.12}$ भीमसेन उ°. — $^{a}$) $D_{1.7.9}$ om. ते. — For $7^{a}$, S subst.:

188* नरेन्द्र शूद्रोऽस्मि चतुर्थवर्णभा-
ग्गुरूपदेशात्परिचारकर्मकृत् ।

— $^{b}$) $K_2$ $D_{3.5}$ पृथिवीश; B Dn $D_{6.7.9.11.12}$ प्रथमं न ($B_{1.5}$ Dn $D_{11.12}$ च; $D_{7.9}$ हि). $B_2$ केवलम्. Cc cites न केवलम्, Cr न केवलान्, Cv प्रथमेन and केवलान्. Cf. Ca न केवलं प्रथममहं सामान्यसूपाञ्जानामि. — For $7^{b}$, S subst.:

189* जानामि सूपांश्च रसांश्च संस्कृता-
न्मांसान्यपूपांश्च पचामि शोभनान् ।

S cont.:

190* रागप्रकारांश्च बहून्फलाश्रया-
न्महानसे मे न समोऽस्ति सूपकृत् ।
वैशंपायनः ।
तमब्रवीन्मत्स्यपतिः प्रहृष्टव-
त्प्रियं प्रगल्भं मधुरं विनीतवत् ।

[ (L. 4) $G_2$ प्रधृष्टं; $M_5$ प्रहृष्टं (for प्रगल्भं). ]

Then follows $6^{ab}$, after which S cont.:

191* हुताशनाशीविषतुल्यतेजसो
न कर्म ते योग्यमिदं महानसे ।
न सूपकारी भवितुं त्वमर्हसि
सुपर्णगन्धर्वमहोरगोपमः ।
अनीककर्णाग्रधरो ध्वजी रथी
भवाद्य मे वारणवाहिनीपतिः ।
न नीचकर्मा भवितुं त्वमर्हसि
प्रशासितुं भूमिमिमां त्वमर्हसि ।
भीमः ।
चतुर्थवर्णोऽस्म्यहमित्युवाच तं
न वै वृणे त्वामहमीदृशं पदम् ।
जात्यास्मि शूद्रो वललेति नाम्ना
जिजीविषुस्त्वद्विषयं समागतः
युधिष्ठिरस्यास्मि महानसे पुरा
बभूव सर्वप्रभुरन्नपानदः ।
अथापि मामुत्सृजसे महीपते
व्रजाम्यह यावदितो यथागतम् ।
त्वमन्नसंस्कारविधौ प्रशाधि मां
भवामि तेऽहं नरदेव सूपकृत् ।

[ After line 3, $G_2$ reads line 8 (for the first time). — $G_1$ om. lines 4–7, $M_3$ om. 4–8. — (L. 16) M व्रजामि या($M_2$ ता)वद्विषयं ($M_1$ °याद्). ]

8 $^{a}$) K $B_3$ transp. च and न. $D_{3.4.7.9}$ न हि (for च न). — $^{b}$) S अस्मि (for च). K न च; $D_{7.9.12}$ तथा (for सदा). S (except $T_2$) हि (for एव). — $^{c}$) S गजांश्च सिंहांश्च. K $B_2$ $D_6$ Cc समीयिवान्. — $^{d}$) $D_{1-3}$ च ते नृप (for तवानघ). Cv cites अनघ. — After 8, S ins.:

192* न नीचकर्मा तव मादृशः प्रभो
बलस्य नेता त्वबलो भवेदिति ।
स्वकर्मतुष्टाश्च वयं नराधिप
प्रशाधि मां सूदपदे यदीच्छसि ।
ये सन्ति मल्ला बलवीर्यसंमता-

6

एहि तत्र मया सार्धं पिबस्व मधुमाधवीम् ॥ ३

द्रौपद्युवाच ।

अप्रैषीद्राजपुत्री मां सुराहारीं तवान्तिकम् ।
पानमानय मे क्षिप्रं पिपासा मेति चाब्रवीत् ॥ ४

कीचक उवाच ।

अन्या भद्रे नयिष्यन्ति राजपुत्र्याः परिस्रुतम् ॥ ५

वैशंपायन उवाच ।

इत्येनां दक्षिणे पाणौ सूतपुत्रः परामृशत् । C 4 456 B 4.16.5 K 4.19.21

माल्यं धूपशुद्धां च वारुणीं. — After 2, S ins.:

302* प्रतिगृह्णीष्व भद्रं ते विहरस्व यथेच्छसि ।
प्रीत्या मे कुरु पद्माक्षि प्रसादं प्रियदर्शने ।

3 $^{ab}$) B D दिव्यं (for शुभ्रं). S स्वास्तीर्णमस्त्रच्छयनं सितसूक्ष्मोत्तरच्छदं. — $^{c}$) S अत्रारुह्य (for एहि तत्र). — $^{d}$) S पिबेमां वरवारुणीं. — After 3, S ins.:

303* वैशंपायनः ।
स मूढः कीचकस्तत्र प्राप्तां राजीवलोचनाम् ।
अब्रवीद्द्रौपदीं दृष्ट्वा दुरात्मा ह्यात्मसंमतः ।
कीचकः ।
भजस्व मां विशालाक्षि भर्ता ते सदृशो ह्यहम् ।
उपसर्प वरारोहे मेरुमर्कप्रभा यथा ।
वैशंपायनः ।
कीचकेनैवमुक्ता तु पाञ्चाली वरभाषिणी ।
अब्रवीन्न ममाचारमीदृशं वक्तुमर्हसि ।
नाहं शक्या त्वया स्प्रष्टुं श्वपाकेनेव ब्राह्मणी ।
मा गमिष्यसि दुर्बुद्धे गतिं दुर्गान्तरान्तराम् ।
यत्र गच्छन्ति बहवः परदाराभिमर्शकाः ।
नराः संभिन्नमर्यादाः कीटवच्च गुहाशयाः ।

[ (L. 2) M कृष्णां (for दृष्ट्वा). — (L. 5) T1 G2 सा (for तु). G1.3 द्रौपदी (for पाञ्चाली). — (L. 6) M साब्रवीन्न. — (L. 7) T G1 श्वपचेनेव. — (L. 8) T1 G2 गंतुमिच्छसि; G1 नागमिष्यति. T1 G2 दुर्गांतरान्त्वरन्; T2 दुर्गतरांतरां; G1 दुर्गांतरांतरं; M5 दुर्गगतांतरां. — (L. 9) M2.3 तत्र (for यत्र). ]

4 S om. the ref.; Dn1 om. 4. — $^{a}$) D5 साप्रैषीत्; D7 अप्रेक्षीत्; Ca.r अप्रैषीत् (as in text). S मां सुराहारीं (for राजपुत्री मां). — $^{b}$) Ś1 K सुराहारी. Ś1 तवांतिके. S सुदेष्णा त्वन्निवेशनं. — After 4$^{ab}$, S ins.:

304* तस्यै नयिष्ये मदिरां भगिनी तृषिता हि ते ।
[ T2 G2 तव (for हि ते). ]

— $^{cd}$) B1.2.5 Dn2 D1.2.4.7.9.11.12 पानमाहर. D4.7.9 transp. मे and क्षिप्रं. K चेति; Cn.r मेऽस्ति. Ś1 K साब्रवीत्. B4 D1–3.6 मां (B4 मे) प्रबाधते; D8 तां च साब्रवीत् (for मेति चाब्र°). S पिपासिता च कैकेयी तूर्णमामादिशत्ततः. — After 4$^{cd}$, S ins.:

305* दीयतां मे सुरा शीघ्रं सूतपुत्र व्रजाम्यहम् ।

5 $^{a}$) D9.10 S हरिष्यंति (for नयि°). — $^{b}$) Ca सुदेष्णायाः (for राज°). Ś1 B1.3.5 D4–9.11.12 परिश्रुतं; K2 परिस्कृतं; B4 Dn D5.10 प्रतिश्रुतं; D1–3.7 (*inf. lin.*) सुरादि(D2 °वि)कं; S सुराभिमां; Cc परिस्रुतां; Ca.v परिस्रुतं (as in text). — After 5, S ins.:

306* किं त्वं यास्यसि सुश्रोणि मदर्थं त्वमिहागता ।
[ M ममार्थमिह चागता. ]

6 N om. the ref. — $^{a}$) B1.3 (m as in text) इत्येवं; B2 D3.4.7 इत्येतां; D1.2 इति तां; D6.9 S इत्युक्त्वा. — $^{b}$) Ś1 K परामृषत्. — After 6$^{ab}$, N (Ś1 K B2–5 D1.3.5–7.9.10 om. lines 1–4; D2 reads lines 1–8 in marg.) ins.:

307* द्रौपद्युवाच ।
यथैवाहं नाभिचरे कदाचि-
त्पतीन्मदाढ्ढे मनसापि जातु ।
तेनैव सत्येन वशीकृतं त्वां
द्रष्टास्मि पापं परिकृष्यमाणम् ।
वैशंपायन उवाच ।
स तामनुप्रेक्ष्य विशालनेत्रां
जिघृक्षमाणः परिभर्त्सयन्तीम् ।
जग्राह तामुत्तरवस्त्रदेशे
स कीचकस्तां सहसाक्षिपन्तीम् ।
प्रगृह्यमाणा तु महाजवेन
मुहुर्विनिःश्वस्य च राजपुत्री ।
तया समाक्षिप्ततनुः स पापः
पपात शाखीव निकृत्तमूलः ।

[ Cf. B. 3. 268. 21, 23$^{ab}$, 24, 25$^{ab}$. — (L. 1) D4.8 यथा हि नाहं व्यभिचारयुक्ता. — (L. 2) D4 कदापि नो वै; D8 कदाचिदासं (for पतीन्मदाढ्ढे). D4.8 Cv राजन् (for जातु). — (L. 3) D4.8 वशीकृतापि (for °कृतं त्वां). — (L. 4) D4.8 मुच्ये यथा(D8 हि चा)नेन विकृष्यमाणा. — (L. 5) B1 Dn D11.12 अभिप्रेक्ष्य. D10 विलोलनेत्रां. — (L. 6) K जिघृक्षमाणां (K2 °णं). — (L. 7) Ś1 K उत्तमवस्त्रदेशे. — (L. 8) B2 D5 सा कीचकं. K B2 D5.10 तं (for तां). Ś1 K °क्षिपत्सा; D4.8 चंचलमुत्क्षिपंतीं (for तां सहसाक्षि°). — (L. 10) B2.3 D5.7.9 मुहुर्निशश्वास. Cr cites विनिःश्वस्य (as in text). Ś1 K1 B4 D6.7.9 तु (for च). — After line 10, B2.4 D6 ins.:

308* चिक्षेप तं गाढममृष्यमाणा

C. 4. 460
B. 4 16. 9
K. 4. 19. 21

सा गृहीता विधुन्वाना भूमावाक्षिप्य कीचकम् ।
सभां शरणमाधावद्यत्र राजा युधिष्ठिरः ॥ ६
तां कीचकः प्रधावन्तीं केशपक्षे परामृशत् ।
अथैनां पश्यतो राज्ञः पातयित्वा पदावधीत् ॥ ७
ततो योऽसौ तदार्केण राक्षसः संनियोजितः ।
स कीचकमपोवाह वातवेगेन भारत ॥ ८
स पपात ततो भूमौ रक्षोबलसमाहतः ।
विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुमः ॥ ९
तां चासीनौ ददृशतुर्भीमसेनयुधिष्ठिरौ ।
अमृष्यमाणौ कृष्णायाः कीचकेन पदा वधम् ॥ १०
तस्य भीमो वधप्रेप्सुः कीचकस्य दुरात्मनः ।
दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामनाः ॥ ११

---

प्रवेपमानातिरुषा शुभाङ्गी ।

— (L. 11) Ś$_1$ तथा; $B_4$ भयात् (for तया). $B_2$ समाक्षिप्तवपुः; $D_8$ समुत्क्षिप्ततनुः. Ś$_1$ K समंतात् (for स पापः). ]

— $^{c}$) Ś$_1$ गृहीत्वा. S विधून्वंती. — $^{d}$) S भूमौ निक्षिप्य भाजनं. — $^{e}$) $B_{1\ 2.5}$ Dn $D_{6.11.12}$ शरणमागच्छद्.

7 $^{a}$) M transp. तां and कीचकः. — $^{b}$) Ś$_1$ $B_2$ $Dn_2$ $D_{2.4.11.12}$ केशपाशे; Ca.c as in text. Ś$_1$ K परामृषत्. — $^{c}$) T G पातयित्वा च ($T_2$ तु) तां भूमौ. — $^{d}$) T G सूतपुत्रः (for पात°). Ś$_1$ परामृषत्; K $D_{1-3.6.10}$ पदाहनत्. — After 7, S (M om. line 1) ins.:

309* सभायां पश्यतो राज्ञो विराटस्य महात्मनः ।
ब्राह्मणानां च वृद्धानां क्षत्रियाणां च पश्यताम् ।
तस्याः पादाभितप्ताया मुखाद्रुधिरमास्रवत् ।

[ (L. 3) $M_3$ शोणितम् (for रुधिरम्). $T_2$ आप्लवत्; M आसृजत् ($M_3$ उद्वहत्) (for आस्रवत्). ]

8 $^{a}$) B Dn $D_{5-12}$ तस्या; $D_{1-3}$ युक्तो (for ततो). $D_8$ किल (for तदा). S ततो दिवाकरेणाशु. — $^{cd}$) S (except $G_{1.3}$) वायुवेगेन. $D_{1-3}$ अदृश्यो वायुरूपेण अपोवाहत भारत.

9 $^{a}$) $B_4$ D (except $Dn_2$ $D_{11.12}$) तदा; $G_2$ हतो (for ततो). — $^{b}$) $B_2$ $D_{1-3}$ °समाहितः; T G °समीरितः. — $^{c}$) $G_1$ विवर्णमानो; $G_3$ विकीर्ण°. B $Dn_2$ $D_{4.8.10-12}$ निश्चेताः (for निश्चेष्टः). — After 9, S ins.:

310* तां दृष्ट्वा तत्र ते सभ्या हाहाभूताः समन्ततः ।
न युक्तं सूतपुत्रेति कीचकेति च मानवाः ।
किमियं वध्यते बाला कृपणा वाप्यबान्धवा ।

[ (L. 1) $T_2$ $G_2$ तं (for तां). — (L. 2) $T_1$ तेब्रुवन् (for मानवाः). — (L. 3) $M_5$ बाध्यते बाला. $T_2$ $G_2$ $M_4$ च (for वा). ]

10 $^{a}$) $K_2$ तत्रासीनौ; $D_{7.9}$ सभासीनौ. T $G_2$ तस्यामासन्हि ते पार्थाः. — $^{b}$) T $G_2$ सभायां भ्रातरस्तदा; $G_{1.3}$ M युधिष्ठिरवृकोदरौ. — $^{d}$) $D_9$ $M_1$ कीचकस्य. $B_1$ Dn $D_{11.12}$ $G_1$ पराभवं; $B_{2.3}$ $D_{5.8}$ पदाहतं ($B_3$ °भवं). — After 10, S ins.:

311* तां दृष्ट्वा भीमसेनस्य क्रोधादस्नमवर्तत ।

S cont.: $B_2$ Dn $D_{6.11.12}$ ins. after 11:

312* धूमोच्छ्वासः समभवन्नेत्रे चोच्छ्रितपक्ष्मणी ।
सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्तत ।

[ (L. 1) $B_2$ Dn $D_{6.11.12}$ धूमच्छाया ह्यभजतां. $D_6$ चोत्फुल्लपक्ष्मणी. — (L. 2) $M_5$ संरंभात् (for सस्वेदा). ]

11 $^{a}$) $D_4$ ततो (for तस्य). N (except Ś$_1$ $K_1$ $D_{4.5}$) $M_1$ वधं प्रेप्सुः. — $^{cd}$) $D_{7-9}$ तथा (for तदा). Ś$_1$ K $D_{4.8}$ महाबलः. $D_{1-3}$ दंतैर्दंतांतरान् ($D_3$ °रं) स्पृष्ट्वा क्रोधाद्भ्रुकुटिमानयत्. — After 11, $B_2$ Dn $D_{6.11.12}$ ins. 312*; and cont.:

313* हस्तेन ममृदे चैव ललाटं परवीरहा ।

$B_2$ Dn $D_{6.11.12}$ cont.: S ins. after 11:

314* भूयश्च त्वरितः क्रुद्धः सहसोत्थातुमैच्छत ।
[ S सहसोत्थाय चासनात्. ]

S cont.:

315* निरैक्षत द्रुमं दीर्घं राजानं चान्ववैक्षत ।
वधमाकाङ्क्षमाणं तं कीचकस्य दुरात्मनः ।
आकारेणैव भीमं स प्रत्यषेधद्युधिष्ठिरः ।
तस्य राजा शनैः संज्ञां कुर्वन्कुन्तीसुतोऽनघः ।
चकार भीमसेनस्य रोषाविष्टस्य धीमतः ।
उपाख्यानं तदा चाह कङ्कनामा युधिष्ठिरः ।
कङ्कः ।
सूद मा साहसं कार्षीः फलितोऽयं वनस्पतिः ।
नात्र शुष्काणि काष्ठानि साधनीयानि कानिचित् ।
यदि ते दारुकृत्यं स्यान्निष्क्रम्य नगराद्बहिः ।
समूलं शातयेर्वृक्षं श्रमस्ते न भविष्यति ।
यस्य चार्द्रस्य वृक्षस्य शीतां छायां समाश्रयेत् ।
न तस्य पर्णं द्रुह्येत पूर्ववृत्तमनुस्मरन् ।
न क्रोधकालसमयः सूद मा चापलं कृथाः ।
अपूर्णोऽयं द्विपक्षो नो नेदं बलवतां बहु ।

[ (L. 3) M आकारेण तु भीमस्य. — (L. 4) $T_1$ $G_1$ कुन्तीपुत्रो युधिष्ठिरः (for the posterior half). — (L. 5) $T_1$ $G_1$ पांडुपुत्रस्य (for रोषाविष्टस्य). M चकार पांडुपुत्रस्य भीमस्यामिततेजसः. — (L. 14) $G_{1.3}$ विपक्षो नो. M नैतत् (for नेदं). ]

12 $^{ab}$) $D_8$ पदांगुष्ठेन. B $D_{5.7.9}$ अवमृद्नन्; $D_8$

अथाङ्गुष्ठेनावमृद्नादङ्गुष्ठं तस्य धर्मराट् ।
प्रबोधनभयाद्राजन्भीमस्य प्रत्यषेधयत् ॥ १२
सा सभाद्वारमासाद्य रुदती मत्स्यमब्रवीत् ।
अवेक्षमाणा सुश्रोणी पतींस्तान्दीनचेतसः ॥ १३
आकारमभिरक्षन्ती प्रतिज्ञां धर्मसंहिताम् ।
दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ॥ १४

द्रौपद्युवाच ।

येषां वैरी न स्वपिति पदा भूमिमुपस्पृशन् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ १५
ये दद्युर्न च याचेयुर्ब्रह्मण्याः सत्यवादिनः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ १६
येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयतेऽनिशम् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ १७
ये ते तेजस्विनो दान्ता बलवन्तोऽभिमानिनः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ १८
सर्वलोकमिमं हन्युर्धर्मपाशसितास्तु ये । C 4. 477 B 4 16 26 K. 4. 20. 23

---

अवगृह्णात्; T1 G2 चामृद्नात्; G3 मृद्नात्तं. S तत्र (for तस्य). Dn D11.12 अथावमृद्नादंगुष्ठमंगुष्ठेन युधिष्ठिरः; D1–3 अंगुष्ठेनावमृद्नात्तु अंगुष्ठं तस्य ध°; D4 अंगुष्ठेनाथ तद्गात्रमंगुष्ठं तस्य ध°. — $^{cd}$) B (B3 transp. राजा and भीमं) D (except D5) राजा (for राजन्). K2 B (B3 transp. राजा and भीमं) Dn D5.6.8.11.12 भीमं तं; D1–4.7.9 भीमं स. Dn2 D11.12 प्रत्यषेधत. — After 12, D7 ins.:

316* त्रिशंकोर्द्वादशाङ्गस्य चतुर्विंशतिपर्वणः ।
यस्त्रिषष्टिशतारस्य एकांशं न क्षमी कथम् ।

[Commented on by Cv only! — (L. 1) Cvp त्रिशकद्वादशां°.]

On the other hand, after 12, D8.11 (marg. *sec. m.*) ins.:

317* तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम् ।
स तमावारयामास भीमसेनं युधिष्ठिरः ।
आलोकयसि किं वृक्षं सूद दारुकृतेन वै ।
यदि ते दारुभिः कृत्यं बहिर्वृक्षान्निगृह्यताम् ।;

while S ins.:

वैशंपायनः ।

318* भीमसेनस्तु तद्वाक्यं श्रुत्वा परपुरंजयः ।
सहसोत्पतितं क्रोधं न्ययच्छद्धृतिमान्बलात् ।
इङ्गितज्ञः स तु भ्रातुस्तूष्णीमासीद्वृकोदरः ।
भीमस्य च समारम्भं दृष्ट्वा राज्ञश्च चेष्टितम् ।
द्रौपद्यभ्यधिकं क्रुद्धा प्रारुदत्सा पुनः पुनः । [5]
कीचकेनानुगमनात्कृतताम्रायतेक्षणा ।

[(L. 1) M स भीमसेनस्तद्वाक्यं. — (L. 2) M2.3 नियच्छन् (for न्ययच्छत्). — (L. 3) M च पांडवः (for वृकोदरः). — (L. 4) M तु (for च both times). — (L. 6) M कृष्णा (for कृत-).]

13 $^{a}$) Dn2 D1–4.11.12 °मागत्य; D8.10 °मागम्य (for °मासाद्य). S सभाद्वारमुपागम्य. — $^{b}$) K2 D1–5.8.9 T2 रुदंती. S वाक्यम् (for मत्स्यम्). — $^{d}$) D7.9 स्वान् (for तान्). D1–3 M4.5 तौ पती (M4 *inf. lin.* 5 पती तौ) दीनमानसौ.

14 $^{a}$) D6.8.10 अभिवीक्षंती; S परिरक्षंती. — $^{b}$) B (except B2) Dn D5.7.11.12 Cr प्रतिज्ञा; Crp as in text. B1.2.5 Dn1 Cn °संहिता; B3 (m as in text) °संश्रयां; B4 °संश्रयं; Dn2 D5.7.9.11.12 °संयमात्; G1 °संश्रितां; G2 °संज्ञितां; G3 M (M4 *sup. lin.*) °संयुतां; Ca °संहितं; Cr °संश्रयात्; Crp (Dev.) as in text. D6 धर्मज्ञानसमाहिता. — $^{c}$) D1.4.6 दहमानेव (D6 °न); D7.9 निर्दहंतीव; D8 दहंतीवाति- (for दह्यमानेव). D5 रोषेण; Cr रौद्रेण (as in text). — $^{d}$) D4m कोपेन (orig. चक्षुषा as in text). — After 14, D2 marg. ins.:

319* इदं ब्रुवन्ती सा देवी राजानं च वशं नयेत् ।;

while S ins. a passage given in App. I (No. 16), which is followed by st. 24–27.

15 D1.3 om. the ref.; D2 ins. it in marg. M5 सैरंध्री (for द्रौपदी). — $^{a}$) B1.3 D5 अरिः (for वैरी). S transp. वैरी and न. D1–3 येषामवध्यो नैवारिः; Ca as in text. — $^{b}$) B2 D7 सुखं (for पदा). B4.5 Dn D4–6.9 (*sup. lin.* as in text).11.12 Cc.s.v.ap.rp (Cat.) षष्ठेपि (D9 सुखं स्व-) विषये वसन् (Cc.s do not cite वसन्); Ca.r.cp सुखं भूमिमुपस्पृशन्. — 15$^{cd}$ = 16$^{cd}$, 17$^{cd}$ etc. — $^{c}$) M3 दयितां (for मानिनीं); cf. v. l. 16, 17 etc.

16 Ś1 D1–3 (? hapl.) om. 16; D10 transp. 16 and 17. — $^{a}$) S ये च (G1.3 वै; M ते) दद्युर्न. — 16$^{cd}$ = 15$^{cd}$, 17$^{cd}$ etc. — $^{c}$) T1 G1 M5 दयितां (for मानिनीं); cf. v. l. 17, 18 etc.

17 B2 D3.4.8 G3 M3 om. 17; Ś1 transp. 17 and 18. — $^{ab}$) M1.2 तेषां (for येषां). M1 महान्; M2 भृशं (for ऽनिशं). D10 श्रूयते हि अहर्निशं. — After 17$^{ab}$, Ś1 K ins.:

C. 4.477 B. 4.16.26 K. 4 20.20 तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ १९
शरणं ये प्रपन्नानां भवन्ति शरणार्थिनाम् ।
चरन्ति लोके प्रच्छन्नाः क्व नु तेऽद्य महारथाः ॥ २०
कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीम् ।
मर्षयन्ति यथा क्लीबा बलवन्तोऽमितौजसः ॥ २१
क्व नु तेषाममर्षश्च वीर्यं तेजश्च वर्तते ।
न परीप्सन्ति ये भार्यां वध्यमानां दुरात्मना ॥ २२
मयात्र शक्यं किं कर्तुं विराटे धर्मदूषणम् ।
यः पश्यन्मां मर्षयति वध्यमानामनागसम् ॥ २३
न राजन्राजवत्किंचित्समाचरसि कीचके ।
दस्यूनामिव धर्मस्ते न हि संसदि शोभते ॥ २४
न कीचकः स्वधर्मस्थो न च मत्स्यः कथंचन ।
सभासदोऽप्यधर्मज्ञा य इमं पर्युपासते ॥ २५
नोपालभे त्वां नृपते विराट जनसंसदि ।

---

320* येषां ज्यातलनिर्घोषात्समकम्पत मेदिनी ।
— $^{cd}$) = $15^{cd}$, $16^{cd}$ etc. S ($G_3$ $M_3$ om.) दयितां (for मानिनीं); cf. v. l. 15, 16 etc. — After 17, $K_1$ *repeats* 15.

18 $D_{3.12}$ $G_1$ om. 18; $Ś_1$ transp. 17 and 18. — $^{a}$) $B_{2.4}$ $Dn_1$ $D_{4.5\ 7.9.10}$ च (for ते). $D_{1.2}$ ये लोकपूज्याः सततं; S ($G_1$ om.) तेजस्विनः सदा क्षान्ताः. — $^{b}$) $B_{1.5}$ Dn $D_{7-10}$ -तिमानिनः; $B_2$ मनस्विनः; T $G_{2.3}$ च मानिनः. — S (except $G_1$) ins. after $18^{ab}$ ($M_3$ subst. for $18^{ab}$):

321* महेष्वासा रणे शूरा गर्विता मानतत्पराः ।
— $18^{cd}$ = $15^{cd}$, $16^{cd}$ etc. — $^{c}$) S ($G_1$ om.) दयितां (for मानिनीं); cf. v. l. 15–17. — $T_2$ ins. after 18: $T_1$ ins. after 19:

322* येषां नास्ति समः कश्चिद्वीर्ये सत्ये बले दमे ।
तेषां मां दयितां भार्यां सूतपुत्रः पदावधीत् ।
येषां न सदृशः कश्चिद्धनौघैर्भुवि मानवः ।
तेषां मां दयितां भार्यां सूतपुत्रः पदावधीत् ।
तवाग्रतो विशेषेण प्रजानां च हितैषिणः । [5]
पश्यतो निहता राजंस्तेनेह जगतीपते ।

19 $K_1$ om. 19; $B_2$ subst. $20^{ab}$ for $19^{ab}$. — $^{a}$) $D_5$ $G_2$ सर्वं लोकं. $M_5$ सर्वान् लोकानिमान्हन्युः. — $^{b}$) $D_{1-4}$ धर्मपाशस्थि($D_{2.4}$ °ह)तास्तु. $Ś_1$ $D_{1-4.9}$ च (for तु). S यदि क्रुद्धा महाबलाः. — $19^{cd}$ = $15^{cd}$, $16^{cd}$ etc. — $^{c}$) $M_2$ दयितां (for मानिनीं); cf. v. l. 15–18. — After 19, $D_6$ repeats 18; while $T_1$ ins. 322*.

20 $B_2$ subst. $20^{ab}$ for $19^{ab}$. — $^{a}$) $D_{1.3}$ शरणाय (for शरणं ये). Ca. c cite शरणं, Cc also ये. — $^{d}$) $B_2$ वै (for ऽद्य). $B_1$ S महाबलाः (for °रथाः).

21 $^{a}$) $Ś_1$ तु (for ते). — $^{b}$) $D_{7.9}$ दुरात्मना; $M_5$ अनागसीं (for प्रियां सतीम्). — $D_7$ ins. after $21^{ab}$: $D_{1.3}$ (both om. line 2), after 22: $D_2$ (om. line 2).$_4$ (in reverse order), after $23^{ab}$:

323* धर्मवैतंसिको नूनं न धर्ममपि पूजयेत् ।
पश्यन्मां मर्षयति यो वध्यमानां दुरात्मना ।

— $^{c}$) $Dn_1$ भर्त्सयंती; $D_2$ पर्तयंति (for मर्षयन्ति). — $^{d}$) $D_5$ S -तितेजसः; $D_8$ महौजसः (for ऽमितौजसः).

22 $D_7$ reads 22 in marg. — $^{b}$) $D_1$ बलं (for वीर्यं). K तच्चाद्य (for तेजश्च). $D_{6.7m.9}$ प्र- (for च). S तद्बलं (for वर्तते). — $^{c}$) $D_8$ ते (for ये). — $^{d}$) $Ś_1$ K $D_{1-3}$ प्रियां सतीं (cf. $21^{b}$); $D_4$ दुरात्मभिः (for दुरात्मना). — After 22, $D_{1.3}$ (which om. $23^{ab}$) ins. (line 1 of) 323* (omitting line 2 altogether).

23 $D_{1.3}$ om. $23^{ab}$. — $^{a}$) $Ś_1$ $B_{4.5}$ $D_{4-7.9}$ तु; $B_3$ $D_{10}$ S अपि; $D_2$ न; $D_8$ नु (for अत्र). $D_4$ transp. शक्यं and कर्तुं. $D_8$ कार्यं (for कर्तुं). — $^{b}$) $B_2$ $Dn_1$ $D_4$ $M_{1.4.5}$ धर्मदूषके; $Dn_2$ $D_{11.12}$ T $G_1$ $M_{2.3}$ °दूषणे; $G_2$ °भूषणे; $G_3$ °दूषिणि. — After $23^{ab}$, $D_2$ (om. line 2).$_4$ (in reverse order) ins. 323* (cf. v. l. 21). — $^{c}$) Cv मा (for मां). $D_9$ मर्षयते; Cv °यति (as in text). $D_{1-3}$ पश्यन्मां मर्षयति यो; S मां मर्षयति यः ($G_{1.3}$ सं-) पश्यन्. — $^{d}$) $D_7$ दुरात्मना; S अनागसीं (for अनागसम्). — After 23, S ins.:

324* धर्मो विद्धो ह्यधर्मेण सभां यत्रोपतिष्ठति ।
न चेद्विशल्यः क्रियते सर्वे विद्धाः सभासदः ।
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ।

24 For the sequence of S cf. v. l. 14. Before 24, S ins. द्रौपदी. — $^{a}$) $B_2$ $Dn_1$ $D_{2.8}$ न राजा; $D_6$ राजन्न (by transp.). $G_1$ इह यत्; $G_3$ नृपवत् (for राजवत्). — $^{b}$) $Ś_1$ $Dn_1$ $D_{2.8}$ समाचरति; $D_{1.3.4}$ त्वमाचरसि. — $^{c}$) $B_2$ $D_{1-3.8}$ S ते धर्मो (by transp.). — $^{d}$) $D_8$ यत् (for न). K $D_{5.10}$ शोभसे; $D_1$ शस्यते. S न सत्सु परिवर्तते. — After 24, $B_{1.5}$ Dn $D_{2.7.11.12}$ read $26^{cdef}$.

25 For the sequence of S cf. v. l. 14. — $^{a}$) $B_{2.3}$ $D_{7.9}$ च; $B_4$ सु-; $D_{10}$ तु (for स्व-). Dn $D_{11.12}$ कीचको न च धर्मज्ञः. — $^{b}$) S (except $T_2$ $G_2$ $M_5$) मात्स्यः. $D_{8.10}$ कदाचन. — $^{c}$) $M_2$ हि (for अपि). $D_8$ अधर्मस्थाः;

नाहमेतेन युक्ता वै हन्तुं मत्स्य तवान्तिके ।
सभासदस्तु पश्यन्तु कीचकस्य व्यतिक्रमम् ॥ २६

विराट उवाच ।

परोक्षं नाभिजानामि विग्रहं युवयोरहम् ।
अर्थतत्त्वमविज्ञाय किं नु स्यात्कुशलं मम ॥ २७

वैशंपायन उवाच ।

ततस्तु सभ्या विज्ञाय कृष्णां भूयोऽभ्यपूजयन् ।
साधु साध्विति चाप्याहुः कीचकं च व्यगर्हयन् ॥ २८

सभ्या ऊचुः ।

यस्येयं चारुसर्वाङ्गी भार्या स्यादायतेक्षणा । C. 4. 488 B. 4. 16. 37 K. 4. 20. 32

---

Cv as in text. — $^{d}$) Ś1 K2 Dn1 D10 एनं; K1 एवं; Dn2 D11. 12 इमे (for इमं). — After 25, S ins..

325* न धर्मं कीचको वेत्ति राजभृत्यास्तथैव च ।
न राजा विनयं ब्रूते अमात्याश्च न जानते ।

26 For the sequence of S cf. v. l. 14. — $^{ab}$) S (except G1. 3) नृपसंसदि (for जन°). For 26$^{ab}$, N (except K; Ś1 damaged) subst.:

326* वैशंपायन उवाच ।
एवंविधैर्वचोभिः सा तदा कृष्णाश्रुलोचना ।
उपालभत राजानं मत्स्यानां वरवर्णिनी ।

[ B1–4 D1. 4. 6 om. the ref.; B5 reads वैशं° in marg. — (L. 1) D1–3 एवंविधं विलपती वचोभिः कटुकाक्षरैः. ] — Ś1 om. 26$^{cd}$; B1. 5 Dn D2. 7. 11. 12 read 26$^{cdef}$ after 24. — $^{e}$) Dn1 D1. 3. 8 युक्तं; Cr युक्ता (as in text). — $^{d}$) B4 D1. 3 T2 वस्तुं; M2 गंतुं; Cr हंतुं (as in text). S मात्स्य. — $^{e}$) K Dn1 अस्य; Dn2 D1–4. 6. 7. 9. 11. 12 च; D5 प्र- (for तु). — $^{f}$) S कीचकं धर्मलंघकं (G3 M1 °लंघिनं; M2. 3. 5 °लंघनं). — After 26, D9 ins.:

327* यत्पार्थिवस्तु भयकृद्विषयस्य लोके
यद्वै पितापि जननी नु विषं ददाति ।
ते ते शरीरवरुणो ज्वलते महान्तं
तत्कस्य यातु शरणं भयवत्स लोकः ॥;

while S ins.:

328* विराट नृपते पश्य मामनाथामनागसीम् ।

T G2 cont.:

329* न साम फलते दुष्टे दुष्टे दण्डः प्रयुज्यते ।
अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
स राजा न भवेल्लोके राजशब्दस्य भाजनम् ।
दीनान्धकृपणानाथपङ्गुकुब्जजडादिकान् ।
अनाथबालवृद्धांश्च पुरुषान्वा स्त्रियोऽपि वा ।
दुष्टचोराभिभूतांश्च पालयेदवनीपतिः ।
अनाथानां च नाथः स्यादपितॄणां पिता नृपः ।
माता भवेदमातॄणामगुरूणां गुरुर्भवेत् ।
अगतीनां गती राजा नृणां राजा परायणम् ।
विशेषतः परैर्दुष्टैः परामृष्टां नरोत्तम ।
स्त्रियं साध्वीमनाथां च पालयेत्स्वसुतामिव ।
त्वद्गृहे वसतिं राजन्नेतावत्कालपर्ययम् ।
अधिकां त्वत्सुतायाश्च पश्य मां कीचकाहताम् ।

27 For sequence of S, cf. v. l. 14. — $^{a}$) D5 परोक्षे. — $^{b}$) D1–3 विवादं; Cc विग्रहं (as in text). M2 अपि; M5 इति (for अहम्). — $^{c}$) D1. 3 कार्यस्यार्थम्; D6 अथ तत्वम्. B4 D10 अभिज्ञाय. — $^{d}$) D9. 10 तु (for नु). B Dn D5. 10–12 Cs कौशलं (B4 शोभनं) (for कुशलं). D6 S किं स्यादकुशलं.

28 Ś1 om. 28 (with the ref.). D1–4. 8 om. the ref. — After the ref., T1 ins.:

330* तस्यास्तत्कृपणं श्रुत्वा सैरन्ध्र्याः परिदेवितम् ।

— $^{ab}$) D1. 3 transp. तु and सभ्याः. K सर्वे (for भूयो). D1–3 कृष्णावाक्यमपूजयन्. Cc. v cite भूयः. S ततः सभ्यास्तु ते सर्वे भूयः कृष्णामपूजयन्. — $^{c}$) D1–4 ते सर्वे (for चाप्याहुः). — $^{d}$) B2. 5 D9. 11. 12 च विगर्हयन्; S चाप्य(G3 °प)गर्ह°. — After 28, S ins.:

331* केचित्कृष्णां प्रशंसन्ति केचिन्निन्दन्ति कीचकम् ।
केचिन्निन्दन्ति राजानं केचिद्देवीं च ते नराः ।

29 $^{a}$) Dn2 D6. 11. 12 एषा (for इयं). T G2 M3–5 चारुपीनांगी. — $^{b}$) B2 भार्या परमशोभना. — $^{c}$) M1. 2 वरो (for परो). D10 लोकश्च (for लाभश्च). Ś1 Dn1 तु; D1. 2. 4 अद्य (for च). K तस्य च स्यात्परो लाभो. — $^{d}$) Ś1 Dn D3. 7–9 च (for स). B4 T G2 M2 स शोच्यः (M2 *inf. lin.* जीवेत्); D5 शोच्यः स (for स शोचेत्). Ś1 B3. 4 Dn D1. 2. 4. 7. 9. 11. 12 कथंचन. — After 29, K2 B Dn D2. 3. 5. 6. 10–12 ins.:

332* न हीदृशी मनुष्येषु सुलभा वरवर्णिनी ।
नारी सर्वानवद्याङ्गी देवीं मन्यामहे वयम् ।

[ (L. 1) B4 वनिता (for सुलभा). — (L. 2 D2. 3. 10 देवी. ]

On the other hand, S ins. after 29:

333* यस्या गात्रं शुभं पीनं मुखं जयति पङ्कजम् ।
गतिर्हंसं स्मितं कुन्दं सैषा नार्हति पद्वधम् ।
द्वात्रिंशद्दशना यस्याः श्वेता मांसनिबन्धनाः ।
स्निग्धाश्च मृदवः केशाः सैषा नार्हति पद्वधम् ।
पद्मं चक्रं ध्वजं शङ्खं प्रासादो मकरस्तथा ।
यस्याः पाणितले सन्ति सैषा नार्हति पद्वधम् ।
आवर्ताः खलु चत्वारः सर्वे चैव प्रदक्षिणाः ।

C. 4. 488 B. 4. 16 37 K. 4. 20 32 परो लाभश्च तस्य स्यान्न स शोचेत्कदाचन ॥ २९

वैशंपायन उवाच ।

एवं संपूजयंस्तत्र कृष्णां प्रेक्ष्य सभासदः ।
युधिष्ठिरस्य कोपात्तु ललाटे स्वेद आसजत् ॥ ३०
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ।
गच्छ सैरन्ध्रि मात्र स्थाः सुदेष्णाया निवेशनम् ॥ ३१
भर्तारमनुरुध्यन्त्यः क्लिश्यन्ते वीरपत्नयः ।
शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत ॥ ३२
मन्ये न कालं क्रोधस्य पश्यन्ति पतयस्तव ।
तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्यवर्चसः ॥ ३३
अकालज्ञासि सैरन्ध्रि शैलूषीव विधावसि ।
विघ्नं करोषि मत्स्यानां दीव्यतां राजसंसदि ।
गच्छ सैरन्ध्रि गन्धर्वाः करिष्यन्ति तव प्रियम् ॥ ३४

द्रौपद्युवाच ।

अतीव तेषां घृणिनामर्थेऽहं धर्मचारिणी ।
तस्य तस्येह ते वध्या येषां ज्येष्ठोऽक्षदेविता ॥ ३५

---

समं गात्रं शुभं स्निग्धं यस्या नार्हति पद्वधम् ।
अच्छिद्रहस्तपादा च अच्छिद्रदशना च या ।
कन्या कमलपत्राक्षी कथमर्हति पद्वधम् ।
सेयं लक्षणसंपन्ना पूर्णचन्द्रनिभानना ।
सुरूपिणी सुवदना नेयं योग्या पदा वधम् ।
देवदेवीव सुभगा शक्रदेवीव शोभना ।
अप्सरा इव सौरूप्यान्नेयं योग्या पदा वधम् ।

[ $M_5$ reads lines 7–8 *before* line 1. — (L. 1) $G_2$ स्फीतं (for पीनं). — $G_3$ om. lines 5–6. — (L. 6) $M_3$ सा वधं (for पद्वधं). — (L. 8) $G_3$ $M_4$ सैषा (for यस्या). $M_3$ सा वधं (for पद्वधं). — (L. 10) M सा वधं (for पद्वधं). ]

30 S om. the ref. — $^{a}$) S इति (for एवं). Ś$_1$ $B_{1.3.5}$ Dn $D_{5-9.11.12}$ संपूजयंतस्ते; $B_4$ संपूजयंति स्म; $D_{1-4}$ पूजयतस्तां तु; T $G_2$ M स्मा($T_2$ $M_3$ स्म)पूजयंस्तत्र; $G_1$ तां पूजयामासुः. — $^{b}$) Ś$_1$ वीक्ष्य (for प्रेक्ष्य). $D_4$ transp. कृष्णां and प्रेक्ष्य. — $^{c}$) $D_6$ कोपेन (for कोपात्तु). $B_4$ च; $D_5$ वै (for तु). — $^{d}$) Ś$_1$ आभजत्; B Dn $D_{5.6.9-12}$ आगमत्; $D_{1-3}$ आगतः; $D_4$ आविशत्; S आस्रवत् (for आसजत्).

31 $^{ab}$) S अब्रवीद्धर्मपुत्रोथ सैरन्ध्रीं etc. — After $31^{ab}$, S ins.:

334* कृष्णां तत्र नृपाभ्याशे परिव्राजकरूपधृक् ।

— Before $31^{cd}$, S ins. युधिष्ठिरः. — $^{c}$) $B_4$ $D_6$ सैरिंध्रि. $D_{1-4}$ मुक्तासि; S मा भैस्त्वं; Cc.s as in text. — After 31, S ins.:

335* राजा ह्ययं धर्मशीलो विराटः परलोकभीः ।
यतस्त्वां न परित्राति सत्ये धर्मव्रते स्थितः ।

[ (L. 1) M (except $M_3$) परलोकवित्. — (L. 2) $M_2$ यत्र (for यतस्). $G_3$ न परित्राता. T $G_2$ $M_{4.5}$ सत्यधर्मव्यव($M_4$ °पथ)स्थितः. ]

32 $^{a}$) Ś$_1$ B $D_{5.6.8-12}$ Ca.c अनुरुंधं($D_{10.12}$ °ध्यं)त्यः; $D_{1-4}$ °वर्तत्यः. S भर्तारस्तव पश्यंति. — $^{b}$) $D_{7.9}$ वीरयोषितः; Ca.r °पत्नयः (as in text). S क्लिश्यंतो धीर($T_2$ दीन)चेतसः. — $^{c}$) $D_8$ पत्युरर्थे (for क्लिश्य°). — $^{d}$) $B_{3.4}$ $D_{5-7.10}$ $M_3$ पतिलोकान्; $D_8$ पत्युर्लोकं; $T_2$ $M_1$ परलोकं. $D_{1.3}$ व्रजंति (for जयन्ति). — After 32, $T_1$ (om. lines 1–8) ins. a passage given in App. I (No. 17); cf. v. l. 33.

33 $T_1$ om. 33. — $^{a}$) $G_2$ M (except $M_4$) कालः. $D_5$ कोपस्य. — $^{b}$) K पश्यंते. — $^{c}$) $D_{1.3}$ येन; $G_3$ अतः (for तेन). Ś$_1$ K त्वा. $G_1$ नाभिजानंति. — After 33, S (for $T_1$ cf. v. l. 32) ins. a passage given in App. I (No. 17).

34 S transp. $34^{ab}$ and $34^{cd}$, and om. $34^{ef}$. — $^{a}$) $B_4$ $D_6$ सैरिंध्रि. T G तस्मात्त्वमपि ($G_{1.3}$ °सि) सुश्रोणि; M तस्मात्त्वं मन्यसे सर्वैः ($M_5$ तस्मात्त्वमद्य सर्वेषां). — $^{b}$) Ś$_1$ $B_4$ Dn $D_{5.6.10.11}$ (orig.) वि($Dn_1$ च)रोदिषि; $D_{1-3.7-9.11}$ (marg. *sec. m.*).$_{12}$ प्रधावसि; $D_4$ प्रभाषसे; S विभासि नः (for विधावसि). — $^{c}$) T $G_2$ दुःखं करोषि भद्रं ते; $G_{1.3}$ M दुःखं रोदिषि वै भद्रे. — $^{d}$) $G_{1.3}$ दीना त्वं; M निर्लज्जा (for दीव्यतां). — S (which om. $34^{ef}$) ins. after $34^{cd}$:

336* वैशंपायनः ।
एवमुक्ता तु सा भद्रा समुद्वीक्ष्याब्रवीदिदम् ।

— $^{e}$) $B_4$ $D_6$ सैरिंध्रि; $D_{1-4}$ गच्छेति. — $^{f}$) $D_{1.2}$ transp. तव and प्रियम्. — After 34, $K_2$ B Dn $D_2$ (marg.).$_{5-7.9-12}$ ins.:

337* व्यपनेष्यन्ति ते दुःखं येन ते विप्रियं कृतम् ।

35 N (except $D_{1-3}$) सैरं($B_4$ $D_6$ °रिं)ध्री (for द्रौपदी). — $^{ab}$) $D_{1-3}$ बहुदुःखान्विता येषां; $D_6$ अतीव घृणिनां तेषां (by transp.). $B_{2.3}$ $D_6$ मन्ये (for अर्थे). S सत्यमुक्तं त्वया विद्धञ्शैलूषीं विद्धि मां पुनः. — $^{c}$) $B_2$m $D_{6.9}$ कस्य कस्य; Cc.rp यस्य तस्य; Cr.s.v.ap.cp तस्य तस्य

वैशंपायन उवाच ।

इत्युक्त्वा प्राद्रवत्कृष्णा सुदेष्णाया निवेशनम् ।
केशान्मुक्त्वा तु सुश्रोणी संरम्भाल्लोहितेक्षणा ॥ ३६

शुशुभे वदनं तस्या रुदन्त्या विरतं तदा ।
मेघलेखाविनिर्मुक्तं दिवीव शशिमण्डलम् ॥ ३७

सुदेष्णोवाच ।

कस्त्वावधीद्वरारोहे कस्माद्रोदिषि शोभने ।
कस्याद्य न सुखं भद्रे केन ते विप्रियं कृतम् ॥ ३८

द्रौपद्युवाच ।

कीचको मावधीत्तत्र सुराहारीं गतां तव ।
सभायां पश्यतो राज्ञो यथैव विजने तथा ॥ ३९

सुदेष्णोवाच ।

घातयामि सुकेशान्ते कीचकं यदि मन्यसे ।
योऽसौ त्वां कामसंमत्तो दुर्लभामभिमन्यते ॥ ४० C. 4. 501 B 4 16. 50 K. 4. 20 69

---

(as in text). K2 B (except B4) Dn D4.10–12 एव; D6.9 न (for इह). B4 वै राध्या; D9 वध्याहं (for ते वध्या). D5m.7 तेषां साधु शुभं किं नु; S शैलूषकस्य तस्याहं. Ca कस्य कस्यैव तेऽवध्या. — d) Ca श्रेष्ठो (for ज्येष्ठो). K अक्षवेदिता; S अक्षकोविदः; Ca as in text.

36 For S cf. v. l. 37. — c) Ś1 B1.5 Dn D11.12 च; D8 अथ (for तु). D6 सैरिंध्री (for सुश्रोणी). — d) D10 सैरंध्री (for संरम्भात्).

37 For S, see below. — b) Cv रुदितात् (for रुदन्त्या). B1.3–5 Dn2 D3.6.11.12 रुदितायाश्चिरं; D2.10 रुदत्या(D10 °दिता)वनतं; D8 रुदितोपरमं (for रुदन्त्या विरतं). Ś1 विनदं; B2 Dn1 सुचिरं; D1 सांबकं; D5.7.9 रुचिरं; Ca.v विरतं (as in text). — c) D1.3 मेघलेखा(D3 °षा)द्; Cr मेघलेखा- (as in text). — d) D1–3 रवि° (for शशि°).

☞ For st. 36–37, S subst.:

338* वैशंपायनः ।
एवमुक्त्वा वरारोहा परिमृज्याननं शुभम् ।
केशान्प्रमुक्तान्संयम्य रुधिरेण समुक्षितान् ।
पांसुकुण्ठितसर्वाङ्गी गजराजवधूरिव ।
प्रतस्थे नागनासोरूर्भर्तुराज्ञाय शासनम् ।
विमुक्ता मृगशावाक्षी निरन्तरपयोधरा ।
प्रभा नक्षत्रराजस्य कालमेघैरिवावृता ।
यस्या ह्यर्थे पाण्डवेयास्त्यजेयुरपि जीवितम् ।
तां ते दृष्ट्वा तथा कृष्णां क्षमिणो धर्मचारिणः ।
समयं नातिवर्तन्ते वेलामिव महोदधिः ।
सा प्रविश्य प्रवेपन्ती सुदेष्णाया निवेशनम् ।
रुदन्ती चारुसर्वाङ्गी तस्यास्तस्थावथाग्रतः ।
तामुवाच विराटस्य महिषी शाठ्यमास्थिता ।

38 After the ref., S ins.:

339* किमिदं पद्मसंकाशं सुदन्तोष्ठाक्षिनासिकम् ।
रुदन्त्या अवसृष्टास्रं पूर्णेन्दुसमवर्चसम् ।
बाष्पोष्णं कृष्णताराभ्यामत्यर्थं रुचिरप्रभम् ।
नयनाभ्यामजिह्माभ्यां मुखं ते मुञ्चते जलम् ।

— a) K कस्त्वा (K2 °स्त्वां) वदेत्; B5 Dn D6.11.12 कस्त्वां वधीत्; D1–3 समाश्वस. Cc cites त्वा. B4 D7 दुरारोहे (for वरा°). D4 आश्वासयद्वरारोहां. — b) B5 D5 सुप्रभे; D1.4 भामिनि (for शोभने). D2.3 कस्मात्त्वं रोदिषि शुभे. — After 38ab, S ins.:

340* को विप्रयुज्यते दारैः सपुत्रपशुबान्धवैः ।

— cd) D4 कः स्याद्याकुलितो भद्रे. D7.9 येन (for केन). K असि (for ते). S कस्याद्य राजा कुपितो वधमाज्ञापयिष्यति. — After 38, S ins :

341* ब्रूहि किं ते प्रियं कुर्मि कं त्यजे घातयामि वा ।
वैशंपायनः ।
तां निःश्वस्याब्रवीत्कृष्णा जानन्ती नाम पृच्छसि ।
भ्रात्रे त्वं मामनुप्रेष्य किमेवं त्वं विकत्थसे ।

39 S om. the ref. — a) B4 D2.4.11.12 मां (B4 मा also) वधीत्. Cc cites मा. B5 मां कीचकोवधीत्तत्र. — b) S इतो गतां (for गतां तव). K1 तथा (for तव). — d) Ś1 तदा; B4 Dn D11.12 वने (for तथा). S यथा वै निर्जने वने.

40 a) S सुदंतोष्ठि (for सुकेशान्ते). — b) D1 transp. यदि and मन्यसे. — After 40ab, S ins.:

342* भ्राता यद्येष मे व्यक्तं योनितो धर्मचारिणीम् ।

— cd) Ś1 K1 त्वा (for त्वां). D8 कामेषु (for त्वां काम-). Ś1 °संपन्नो; D4.5.10 °संतप्तो (for °संमत्तो). S यस्त्वां कामाभिभूतात्मा; Crp (Dev.) यस्त्वानवरतं मत्तः; Cr as in text. Ś1 अपि मन्यसे; K B Dn D6.8.11.12 T G (except G1) Ca अव(B2 अपि)मन्यते (K2 °से); Crp (Dev.) अभिमन्यते (as in text). D4 सुलभामिति मन्यते. D1–3 गृहं गताया मद्वाक्याद्येन ते विप्रियं कृतं.

41 Ś1 om. the ref. Dn D4.8.10–12 सैरंध्री (for द्रौपदी). — a) S अद्यैव (for अन्ये वै). Ś1 वा तं; K2 D8 चैनं; B2.5 D6.7.9.10 तं वै; B4 चैवं; Dn1 चैव; Dn2 D11.12 तस्य; D1–4 अपि तं (for वै तं). D1–3.8.10 S हनिष्यंति (for वधि°). — b) T G येषामागस्करो हि सः; M विप्रकर्तारमव्ययं. — c) B1.2.5 Dn D11.12 चैवाद्य (for

C. 4. 502
B. 4. 16. 51
K. 4. 20. 70

द्रौपद्युवाच ।

अन्ये वै तं वधिष्यन्ति येषामागः करोति सः ।
मन्ये चाद्यैव सुव्यक्तं परलोकं गमिष्यति ॥ ४१

इति श्रीमहाभारते विराटपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

## १६

वैशंपायन उवाच ।

सा हता सूतपुत्रेण राजपुत्री समज्वलत् ।
वधं कृष्णा परीप्सन्ती सेनावाहस्य भामिनी ।
जगामावासमेवाथ तदा सा द्रुपदात्मजा ॥ १
कृत्वा शौचं यथान्यायं कृष्णा वै तनुमध्यमा ।
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ॥ २
चिन्तयामास रुदती तस्य दुःखस्य निर्णयम् ।
किं करोमि क्व गच्छामि कथं कार्यं भवेन्मम ॥ ३
इत्येवं चिन्तयित्वा सा भीमं वै मनसागमत् ।
नान्यः कर्ता ऋते भीमान्ममाद्य मनसः प्रियम् ॥ ४
तत उत्थाय रात्रौ सा विहाय शयनं स्वकम् ।
प्राद्रवन्नाथमिच्छन्ती कृष्णा नाथवती सती ।
दुःखेन महता युक्ता मानसेन मनस्विनी ॥ ५
सा वै महानसे प्राप्य भीमसेनं शुचिस्मिता ।
सर्वश्वेतेव माहेयी वने जाता त्रिहायनी ।
उपातिष्ठत पाञ्चाली वाशितेव महागजम् ॥ ६

---

चाद्यैव). S मन्येहमद्य वा श्वो वा. — $^{d}$) Ś1 Dn1 D5 यम° (for पर°). — After 41, S (M2–5 om. lines 13–19) ins. a passage given in App. I (No. 18).

Colophon om. in D1.3; D2.7 read it in marg. — *Sub-parvan*· K1 B2.4.5 Dn D2.5.11.12 G2 M1–3 कीचकवध. — *Adhy. name*: B1.3.4 D9 सुदेष्णावाक्यं; D4 द्रुपदीवाक्यं; M1–3 द्रौपदीप्रलापः. — *Adhy. no.* (figures, words or both): B4 D2.6.10 15; D5 16; S 19 (T2 20).

☞ After adhy. 15, S (except M2.3.5; M4 marg. ins. lines 1–3 here and the whole adhy. after the last adhy. of this parvan) ins. an (addl.) adhy. given in App. I (No. 19), followed by (an addl.) colophon.

### 16

1 $^{a}$) S सा सूतपुत्राभिहता. — $^{b}$) Ś1 B2 Dn D11.12 राजपत्नी. B2.4 Dn D6–8.11.12 यशस्विनी; D1–4 सुदुःखिता; Cv समज्वलत् (as in text). — $^{c}$) Ś1 एवं (for वधं). — $^{d}$) S सूतपुत्रस्य (for सेना°). K1 भाषिणी; B3.4 D5.6 भाविनी. — $^{e}$) D1–3 एवं सा (for एवाथ). — $^{f}$) D1–3 शोकादुद्विग्नमानसा.

2 $^{b}$) B2 Dn D1.3.5–7.9 T G सा; M अपि (for वै). — $^{d}$) D1.3 वै; T G M3 च (for सा).

3 $^{b}$) Dn1 स्वस्य; D2 वन- (for तस्य). D10 T G2 निश्चयं; Cr निर्णयं (as in text). — $^{c}$) Dn1 कथं कार्यं (for क्व गच्छामि). — $^{d}$) Dn1 सौख्यं (for कार्यं). Ś1 K D1.2.8 मया (for मम).

4 $^{b}$) S तं (for वै). — $^{cd}$) B कर्तास्त्यृते भीमात् (B4 भीमं); D7 कर्तास्ति वै भीमात्. S अन्यः कर्ता विना भीमं न मेद्य मनसेप्सितं.

5 $^{a}$) D8 transp. रात्रौ and सा. Dn2 D11.12 तदुत्थाय च रात्रौ सा; S प्रादुर्भूते क्षणे रात्रौ. — $^{b}$) K1 B4 सुखं; D3 स्वयं; D6 M1.5 शुभं; M2 शुभे; M3.4 शुभा (for स्वकम्). — S transp. $5^{cd}$ and $5^{ef}$. — $^{d}$) S (except M2.4.5) तथा (for कृष्णा). D2 बाष्प° (for नाथ°). — After $5^{cd}$, N ins.:

343* भवनं भीमसेनस्य क्षिप्रमायतलोचना ।

[ D4.9 जगाम (for क्षिप्रम्). ]

— $^{e}$) D1.2.5 आविष्टा; D9 तप्ता (for युक्ता). — $^{f}$) D1.2 यश° (for मन°). — After 5, B D5–7.9 read st. 10 (with 349*).

6 $^{a}$) D2.3 तं (for वै). Ś1 B (except B4) Dn D1.8.10–12 S Cv महानसं; Ca as in text. Ś1 D7.9 प्राप्ता; Ca v प्राप्य (as in text). — S transp. $6^{cd}$ and $6^{ef}$ (G1 om. $6^{cdef}$); K2 om. $6^{cd}$. — $^{d}$) T G (G1 om.)

सा लतेव महाशालं फुल्लं गोमतितीरजम् ।
बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता ।
सिंहं सुप्तं वने दुर्गे मृगराजवधूरिव ॥ ७
वीणेव मधुराभाषा गान्धारं साधु मूर्च्छिता ।
अभ्यभाषत पाञ्चाली भीमसेनमनिन्दिता ॥ ८
उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः ।
नामृतस्य हि पापीयान्भार्यामालभ्य जीवति ॥ ९
तस्मिञ्जीवति पापिष्ठे सेनावाहे मम द्विषि ।
तत्कर्म कृतवत्यद्य कथं निद्रां निषेवसे ॥ १०
स संप्रहाय शयनं राजपुत्र्या प्रबोधितः । C 4. 517 B. 4. 17. 16 K. 4. 22. 16

M4.5 वृद्धा; M1-3 विद्धा (for जाता). B2.4.5 Dn1 D5 T1 M Ca. c. n. r (first time) त्रिहायणी; Cr (second time). v as in text. — After 6^cd, S (except G1; T om. line 1) ins.:

344* उपातिष्ठत पाञ्चाली भीमं कौरव्यमच्युतम् ।
मृगर्षभं यथा दृप्तं गन्धिनी वननिर्झरे ।

[ (L. 2) T1 G2 महर्षभं. T1 G2.3 सुप्तं (for दृप्तं). T1 G2 अर्थिनी (for गन्धिनी). ]

— ^e) T1 G3 M उपासर्पत. — ^f) N वासितेव (K1 corrupt वाशिवते). B3 m.5 D1-5 Ca. r. vp महावृषं; Dn D11.12 Cc वरर्षभं; D7.8.10 Cv महर्षभं; D9 नरर्षभं; Ccp. rp as in text.

7 S reads 7^ef, 7^cd then 7^ab. — ^ab) K1 महासालं. S सुजातं गोमतीतीरे सालं (G1 जाती-) वल्लीव पुष्पिता. — After 7^ab, N (except K D8.10) ins.:

345* परिष्वजत पाञ्चाली मध्यमं पाण्डुनन्दनम् ।

[ D1-3.7 पर्यष्वजत; Ca परिष्वजति. D4 बाहुभ्यां (for पाञ्चाली). D2 सा भीमं; Ca. r मध्यमं (as above). ]

— ^cd) D1-4 om. 7^cd. D6 सुप्तं प्राबोधयत्पतिं; D8 वायोः सुतमबोधयत् (for ^d). S अभिप्रसार्य बाहुभ्यां पतिं सुप्तं समाश्लिषत्. — ^e) S सं- (T1 G2 सा) प्रसुप्तं तदा (T G1.2 °था) स्थाने (T1 G2 सिंहं). — After 7, N ins.:

346* भीमसेनमुपाश्लिष्यद्धस्तिनीव महागजम् ।

[ K2 B2.4 D5.6.8.10 उपाश्लिष्य ह°; D1-4.9 समाश्लिष्य ह°. ]

— T G M4.5 ins. after 7; B4 D2.6 (all om. line 6) M1-3, after 8 (!):

347* परिस्पृश्य च पाणिभ्यां पतिं सुप्तमबोधयत् ।
श्रीरिवान्या महोत्साहं सुप्तं विष्णुमिवार्णवे ।
क्षौमावदाते शयने शयानमृषभेक्षणम् ।
यथा शची देवराजं रुद्राणी शंकरं यथा ।
ब्रह्माणमिव सावित्री यथा षष्ठी गुहं यथा । [5]
दिक्सागजसमाकारं गजं गजवधूरिव ।
भीमं प्राबोधयत्कान्ता लक्ष्मीर्दामोदरं यथा ।

[ (L. 1) B4 D2.6 परिसंस्पृश्य; M परिष्वज्य च. B4 D2.6 सुप्तं प्राबोधयत्प्रियं (B4 °त्तदा) (for पतिं सुप्तम°). — (L. 2) B4 श्रीनिवेशं (for श्रीरिवान्या). B4 D2.6 कृष्णम् (for विष्णुम्), and महा- (for इव). — (L. 3) B4 श्यामा सुकेशी (for क्षौमावदाते). — (L. 4) B4 D2.6 सा शचीव सहस्राक्षं रुद्राणीव च शंकरं (B4 महेश्वरं). — (L. 5) B4 D2.6 सावित्री चैव (B4 °त्रीव च) ब्रह्माणं गुहं षष्ठीव भाविनी. — (L. 7) B4 D2.6 M1 कृष्णा; G1 कान्तं (for कान्ता). ]

B4 D2.6 cont.:

348* देवगर्भसमाभासं प्रियं प्रियमुदा प्रिया ।

[ D2 °वचः; D6 °वचा (for °मुदा). ]

8 ^a) D1.3 वाणी च (for वीणेव). Ś1 Dn D11.12 मधुरालापा; D1-4 स्वरसंपन्ना; S मधुरा(T G1.2 °रं)रक्ता; Ca as in text. — ^b) Ś1 Dn D11.12 Cc मूर्छती; Cr मूर्च्छिता (as in text). B1-3 Cap साधु गांधारमूर्छिता (cf. Cv); D1-5 गांधारस्वर(D4 °ग्राम)मूर्छिता; S स्वरं गांधार(G3 गांधर्वं)माश्रिता; Ca as in text. — ^d) D10 भीमसेनसमीपगा; S कौरव्यं पांडुनंदनं. — After 8, B4 D2.6 M1-3 ins. 347*.

9 Before 9, T G3 ins. द्रौपदी. — ^b) G1 यथालसः. — ^c) D5.10 इह; D7 अपि (for हि). K ना मृतः स हि पापेयो; T G न मृतस्ते स (T2 हि) पापीयान्. — ^d) S भार्यामालंब्य.

10 B D5-7.9 read (like the older printed ed.) 10 (with 349*), after 5. — Before 10, B D5-7.9 ins. द्रौपद्युवाच; Dn D3.8 सैरंध्र्युवाच. — ^b) D7 सेनानाथे; D8 सेनाध्यक्षे. D3.8 महद्द्विषि. — ^c) Ś1 B1.5 Dn2 D1.7.11.12 Cn कृतवानद्य; G1.3 कृतवत्येव (G1 °वं). — ^d) K तत्त्वं (for निद्रां). — After 10, N ins.:

349* वैशंपायन उवाच ।
एवमुक्त्वाथ तां शालां प्रविवेश मनस्विनी ।
यस्यां भीमस्तदा शेते मृगराज इव श्वसन् ।
तस्या रूपेण सा शाला भीमस्य च महात्मनः ।
संमूर्छितेव कौरव्य प्रजज्वाल च तेजसा ।

[ (L. 1) K1 B2 D8 तु (for अथ). D8 शयने (for तां शालां). D8 Cv संविवेश. D2 यश° (for मन°). — (L. 2) Dn1 तथा; D1-4 सदा (for तदा). — (L. 3) K2 D10 शय्या. Ca cites whole line as in text. — (L. 4) K1

C. 4. 517 B. 4. 17. 16 K. 4. 22. 16 उपातिष्ठत मेघाभः पर्यङ्के सोपसंग्रहे ॥ ११
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ।
केनास्यर्थेन संप्राप्ता त्वरितेव ममान्तिकम् ॥ १२
न ते प्रकृतिमान्वर्णः कृशा पाण्डुश्च लक्ष्यसे ।
आचक्ष्व परिशेषेण सर्वं विद्यामहं यथा ॥ १३
सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियम् ।
यथावत्सर्वमाचक्ष्व श्रुत्वा ज्ञास्यामि यत्परम् ॥ १४
अहमेव हि ते कृष्णे विश्वास्यः सर्वकर्मसु ।
अहमापत्सु चापि त्वां मोक्षयामि पुनः पुनः ॥ १५
शीघ्रमुक्त्वा यथाकामं यत्ते कार्यं विवक्षितम् ।
गच्छ वै शयनायैव पुरा नान्योऽवबुध्यते ॥ १६

इति श्रीमहाभारते विराटपर्वणि षोडशोऽध्यायः ॥ १६ ॥

इव; B3 अति-; D8 अथ (for च). K1 ओजसा (for तेजसा). D4 प्रज्वलत्स्वेन तेजसा (for posterior half). Ca cites whole line as in text. ]

— On the other hand, S ins. after 10:

350* वैशंपायनः ।
सुखसुप्तश्च तं शब्दं निशम्य स वृकोदरः ।
संवेदितः कुरुश्रेष्ठस्तोत्रैरिव महागजः ।

11 a) S स वै विहाय. — b) S यस्मिन्सुप्तः (for राजपुत्र्या). D6 अवबोधितः; D7. 9 विबोधितः. — c) K1 उपायामृदद (sic). K D8. 10 मोघाशः; B3. 4 D5. 6 सोभ्यासे; D7 बाहुभ्यां; D9 वाभ्यासं (for मेघाभः). D1–4 उद(D4 °पा)तिष्ठत्तदा तूर्णं; S उदतिष्ठदमेयात्मा. — d) D6 पर्यंकात्. S सोत्तरच्छदे. Cv cites सोपधाने. — After 11, S ins.:

351* उपविश्य च दुर्धर्षः पाञ्चालकुलवर्धिनीम् ।
[ T G2. 3 उपवेश्य. G पंचालीं कुल°. ]

12 b) D8 बीभत्सुर् (for कौरव्यो). — Before 12cd, T M1. 2 ins. भीमः. — c) Ś1 K D3. 8 अपि (for असि). D5 केनात्र हेतुना प्राप्ता; T केनार्थेन च सं°. — d) D8 M3 ममांतिके.

13 a) D1. 3 transp. न and ते. — b) S त्वं भीरु (T G2 त्वमभि-) (for पाण्डुश्च). — After 13ab, S ins.:

352* प्रकाशं यदि वा गुह्यं सर्वमाख्यातुमर्हसि ।

— c) D5 अद्य विशेषेण; S (except G1. 3) त्वमशेषेण; Ca परिशेषेण (as in text). — d) Ś1 D8 विद्यामहे; D1–3 विंद्यामहे (for विद्यामहं). Ca. v cite विद्यां.

14 b) B1. 3. 5 प्रियं; D1–3. 8. 10 S शुभं; Cc द्वेष्यं (as in text). B1. 3. 5 अप्रियं; D1–3. 8. 10 S अशुभं (for प्रियम्). — cd) Ś1 B2. 3. 5 D5–7. 9 ध्या(Ś1 B3 धा; D9 ध्य)स्यामि; Cv ज्ञास्यामि (as in text). D1–3 अहं; D8 Cv तत् (for यत्). B2. 3. 5 Dn D5. 7. 9. 11. 12 क्षमं; Cv परं (as in text). S यद्यप्यसुकरं कर्म कृतमित्युपधारय.

15 a) D3 कृष्णेति (for ते कृष्णे). — b) D4 विश्वास्यः; Ca विश्वास्यः (as in text). D1–3 सर्ववस्तुषु. — c) D7. 9 अहमापद्गतां च त्वां. — d) D8 मोचयामि; D10 मोक्ष्यामि च. D1–3 मोक्षयिष्याम्यसंशयं.

16 a) D3 यथाकार्यं. — b) B3 M2 कामं (for कार्यं). — c) Ś1 K D4 M5 त्वं; D1–3. 8 स्वं (for वै). D1. 3. 4. 8 शयनं चैव. — d) Ś1 K B2 यथा (for पुरा). D2 तु; D7–9 च (for न). Ś1 नान्येन बुध्यसे. B1. 3–5 D5. 6 S यावदन्यो न (B1 नु; G1 हि) बुध्यते. Cv cites अन्योऽवबुध्यते. — After 16, S ins.:

353* वैशंपायनः ।
सा लज्जमाना भीता च अधोमुखमुखी ततः ।
नोवाच किंचिद्वचनं बाष्पदूषितलोचना ।
अथाब्रवीद्भीमपराक्रमो बली
वृकोदरः पाण्डवमुख्यसंमतः ।
प्रब्रूहि किं ते करवाणि सुन्दरि [5]
प्रियं प्रिये वारणखेलगामिनि ।

[ (L. 2) T1 बाष्पवारितलोचना; T2 बाष्पपूरित°; G1 बाष्पलोलेक्षणा तदा. — (L. 6) T2 °राज°; G1 °वाम°; M3 °मत्त° (for °खेल°). ]

Colophon om. in D7 S; D9 reads it in marg. — *Sub-parvan.:* K1 B2. 4. 5 Dn D4. 6. 8. 10–12 कीचकवध. — *Adhy. name:* B1. 3 भीमानुमंत्रणं; B4 भीमाभिमंत्रणः; D1–4 भीम(D2 भीमसेन)प्रबोधः. — *Adhy. no.* (figures, words or both): K1 B4 D6. 10 16; D5. 9. 11 17.

## 17

1 a) B Dn D5–7. 9–12 अशोच्यत्वं; T G अशोच्यता (for अशोच्यं नु). Ś1 K1 D1–4 तु; K2 न; D8 वै (for नु). — After अशोच्यं नु, Ś1 *collations up to 4. 18. 24 are not available, as the pages of the MS. are stuck together.* T2 G1. 2 तस्य (for तस्याः). — b) D1

१७

द्रौपद्युवाच ।
अशोच्यं नु कुतस्तस्या यस्या भर्ता युधिष्ठिरः ।
जानन्सर्वाणि दुःखानि किं मां त्वं परिपृच्छसि ॥ १
यन्मां दासीप्रवादेन प्रातिकामी तदानयत् ।
सभायां पार्षदो मध्ये तन्मां दहति भारत ॥ २
पार्थिवस्य सुता नाम का नु जीवेत मादृशी ।
अनुभूय भृशं दुःखमन्यत्र द्रौपदीं प्रभो ॥ ३
वनवासगतायाश्च सैन्धवेन दुरात्मना ।
परामर्शं द्वितीयं च सोढुमुत्सहते नु का ॥ ४
मत्स्यराज्ञः समक्षं च तस्य धूर्तस्य पश्यतः ।
कीचकेन पदा स्पृष्टा का नु जीवेत मादृशी ॥ ५
एवं बहुविधैः क्लेशैः क्लिश्यमानां च भारत ।
न मां जानासि कौन्तेय किं फलं जीवितेन मे ॥ ६
योऽयं राज्ञो विराटस्य कीचको नाम भारत । C 4 529 B 4. 18. 7 K. 4. 22. 42

राजा (for भर्ता). — [d]) D4 कथं मां परि°; S किं मां (M मा) भीमानुपृच्छसि.

2 Ś1 missing. — [a]) T2 G3 M यन्मा. Cc cites मा. D4.10 °प्रमादेन; Cv as in text. — [b]) K1 D3.4 प्रतिकामी; T1 प्रतिगामी; Cc.s.v as in text. K2 D7 पदाहनत्. — [c]) K1 D7.9 M4 पर्षदो मध्ये; B1.3.5 T G M1-3.5 परिषन्मध्ये; B2 D1.3 Cc परिषदो मध्ये. B4 Dn D8.10 सभा(B4 D8.10 °भां)परिषदो (cf. Cs.v) मध्ये. — [d]) M मा (for मां). T G तन्मे मर्माणि कृंतति. — After 2, S ins.:

354* विकृष्टा हास्तिनपुरे सभायां राजसंसदि ।
दुःशासनेन केशान्ते परामृष्टा रजस्वला ।
क्षत्रियैस्तत्र कर्णाद्यैर्दृष्टा दुर्योधनेन च ।
श्वशुराभ्यां च भीष्मेण विदुरेण च धीमता ।
द्रोणेन च महाबाहो कृपेण च परंतप । [5]
साहं श्वशुरयोर्मध्ये भर्तृमध्ये च पाण्डव ।
केशे गृहीत्वैव सभां नीता जीवति वै त्वयि ।

[(L. 7) G1.3 M केशे गृह्य सभां नीता त्वयि जीवति पांडव (M3-5 भारत). ]

T1 cont.:

355* विप्रमुक्ता ततश्चाहं नवे राज्याद्वनं गता ।
साहं वने दुर्वसतिं वसन्ती चाध्वकर्शिता ।
जटासुरपरिक्लेशात्प्राप्तापि सुमहद्भयम् ।

☞ The sequence of st. 3-6 in B2.5 is 5, 6, 3, 4; while in D5.6.9 it is 5, 4, 3, 6.

3 Ś1 missing. — [a]) Dn2 D11.12 नाथ (for नाम). — [b]) B1.2.5 Dn D5.7.10-12 जीवति; G1.3 जीवेच्च. — [c]) B Dn D5-7.9-12 ईदृशं; D1-4 महद् (for भृशं). — [d]) B4 D5.7.9 अत्यंतं; D6 अन्या तु; Cv अन्यत्र (as in text). B4.5 D5-7.9 ऋते (for प्रभो).

4 Ś1 missing; D7 om. 4-5. — [a]) T G2 M (except M3) वनवासगता चाहं. — [c]) Dn D4.11.12 परामर्शः (some MSS. °र्षः); S परामृष्टा; Ca °मर्षं; Cc as in text. B4 द्वितीयस्य; Dn D11.12 °यो वै. D1-3 तत्; D4 तु (for च). — [d]) B4 D9 अत्र; Dn1 D1-3.10 तु (for नु). — After 4, S ins.:

356* पद्भ्यां पर्यचरं चाहं देशान्विषमसंस्थितान् ।
दुर्गांश्श्वापदसंकीर्णांस्त्वयि जीवति पाण्डव ।
ततोऽहं द्वादशे वर्षे वन्यमूलफलाशना ।
इदं पुरमनुप्राप्ता सुदेष्णापरिचारिका ।
परस्त्रियमुपातिष्ठे सत्यधर्मपथे स्थिता । [5]
गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ।
नित्यं पिंषे विराटस्य त्वयि जीवति पाण्डव ।
साहं बहूनि दुःखानि गणयामि न ते कृते ।

[(L. 1) M5 विषमसंश्रितान्. — (L. 5) M4.5 पुरस्त्रीमुपतिष्ठामि. — (L. 7) All MSS. पिङ्क्षे (for पिंषे)! — (L. 8) M1.2.5 कृते न ते (for न ते कृते). ]

5 Ś1 missing, D7 om. 5 (cf. v. l. 4). — [a]) B1 D4 S मत्स्यराजसमक्षं; D10 °राजसमीपं. B3.5 Dn D2 S तु (for च). — [c]) Dn1 D2.3 10 M1.5 परामृष्टा; Dn2 D11.12 पदा मृष्टा. — [d]) Dn D5.8.11.12 जीवति.

6 Ś1 missing. — [a]) D5.8.10 S दुःखैः (for क्लेशैः). D1-3 एवं सुबहुभिः क्लिष्टां. — [b]) S पांडव (for भारत). — [cd]) D7 transp. न and मां. D8 तव जानामि दुःखार्ता (for [c]). M2 साहं बहूनि दुःखानि गणयामि न ते कृते (=line 8 of 356*). — After 6, S ins.:

357* द्रुपदस्य सुता चाहं धृष्टद्युम्नस्य चानुजा ।
अग्निकुण्डात्समुद्भूता नोर्व्यां जातु चरामि भोः ।
कीचकं चेन्न हन्यास्त्वं शिलां बद्ध्वा जले म्रिये ।
विषमालोड्य पास्यामि प्रवेक्ष्याम्यथवानलम् ।
आत्मानं नाशयिष्यामि वृक्षमारुह्य वा पते । [5]
शस्त्रेणाङ्गं च भेत्स्यामि किं फलं जीवितेन मे ।

[(L. 1) M5 प्रिया पुत्री (for सुता चाहं). — (L. 2) M1.5 समुत्पन्ना. M1 नोर्वां; M5 उर्वां. T G2 चराम्यहं; G1

C. 4. 4. 529 B. 4. 18. 7 K. 4. 22. 42 सेनानीः पुरुषव्याघ्र स्यालः परमदुर्मतिः ॥ ७
स मां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि ।
नित्यमेवाह दुष्टात्मा भार्या मम भवेति वै ॥ ८
तेनोपमन्त्र्यमाणाया वधार्हेण सपत्नहन् ।
कालेनेव फलं पक्वं हृदयं मे विदीर्यते ॥ ९
भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम् ।
यस्यास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम् ॥ १०
को हि राज्यं परित्यज्य सर्वस्वं चात्मना सह ।
प्रव्रज्यायैव दीव्येत विना दुर्द्यूतदेविनम् ॥ ११
यदि निष्कसहस्रेण यच्चान्यत्सारवद्धनम् ।
सायंप्रातरदेविष्यदपि संवत्सरान्बहून् ॥ १२
रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकम् ।
अश्वाश्वतरसंघांश्च न जातु क्षयमावहेत् ॥ १३
सोऽयं द्यूतप्रवादेन श्रिया प्रत्यवरोपितः ।

चरामहे. — (L. 3) T1 G2 M5 ग्रीवां (for शिलां). — (L. 5) M4 पातये (for वा पते). — (L. 6) G2 छेत्स्यामि (for भेत्स्यामि). ]

7 Ś1 missing. — b) B2 सारथिः; D1–3 नामतः (for भारत). — d) N (except K1 D10; Ś1 missing) श्यालः (for स्यालः).

8 Ś1 missing. — a) K1 B2.5 °वेशेन; B4 सैरिंध्रि°. — b) K2 B2.3m.5 D1.3.5.7.10 M2 चरंतीं (for वसन्तीं). — d) B2 D1–4.6.8 S (except T2 M5) transp. मम and भव.

9 Ś1 missing. — a) T G तेनैवमुच्यमानायाः; M तेनैवं (M3 °व) चोद्यमानायाः. — b) B (except B4) D5.7 सपत्नजित्; D1.3 सपत्नहा; S अरिसू(G3 °षू)दन. — c) B5 एवं; D10 च; S (except T2) एव (for इव). — d) B1.3 व्यदीर्यत. — After 9, S ins.:

358* शरणं भव कौन्तेय मा संगच्छ युधिष्ठिरम् ।
निरुद्योगं निरामर्षं निर्वीर्यमरिमर्दन ।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ।
विजानामि तवामर्षं बलं वीर्यं च पाण्डव ।
ततोऽहं परिदेवामि चाग्रतस्ते महाबल ।
यथा यूथपतिर्मत्तः कुञ्जरः षाष्टिहायनः ।
भूमौ निपतितं बिल्वं पद्भ्यामाक्रम्य पीडयेत् ।
तथैव च शिरस्तस्य निपात्य धरणीतले ।
वामेन पुरुषव्याघ्र मर्द पादेन पाण्डव ।
स चेदुद्यन्तमादित्यं प्रातरुत्थाय पश्यति ।
कीचकः शर्वरीं व्युष्टां नाहं जीवितुमुत्सहे ।
शापितोऽसि मम प्राणैः सुकृतेनार्जुनेन च ।
युधिष्ठिरस्य पादाभ्यां यमयोर्जीवितेन च ।
यत्कीचकवधं नाद्य प्रतिज्ञास्यसि भारत ।

[ (L. 1) T1 G2 स्म गच्छेर्; M1.2 स्म गच्छ (for संगच्छ). — (L. 2) G2 M1.5 °नंदनं (for °मर्दन). — (L. 5) G2 M5 वृकोदर (for महा°). — (L. 7) T1 G1.3 आक्षिप्य (for आक्रम्य). — (L. 8) M2.5 तथोपमं (for तथैव च). — (L. 12) T2 G2 M5 अर्जुनस्य (for अर्जुनेन). — (L. 14) T2 G2 M2.3 °जानासि (for °ज्ञास्यसि). ]

10 Ś1 missing. — a) D7 ते; D8 वै (for च). D1.3 विगर्ह स्वं; D5–7 विगर्हेयं (D6 °हं). — b) D4 दुर्द्यूत-देवनं; D10 °वादिनं; Ca as in text. — D4 (hapl.) om. 10c–11d. — c) D8 कारणात् (for कर्मणा). — d) B2 D8 T1 M2 अनंतरं; D7 अनर्थकं (for अनन्तकम्). — After 10, T1 ins.:

359* एषां मुख्यतमो ज्येष्ठो भवेत्तु कुलपांसनः ।
भ्रातरं त्वरमन्वीयुस्तेऽपि शालीनबुद्धयः ।

11 Ś1 missing; D4 om. 11 (cf. v. l. 10). — b) B2 सर्वस्वमनुजैः सह; S सपुत्रपशुबांधवं. — c) K प्रव्रज्यायै नु; D5 °यै च (for °यैव). Ca cites प्रव्रज्याय (cf. Cr). D5 m.7 प्रव्रज्यामुपसेवेत; D8 प्रव्रज्यायै प्रदीप्येत; S प्रव्रजेत महारण्यं (M1–4 °ण्ये). — d) S अजिनैः (T G2 अनुजैः) परिवारितः (T1 G3 °तं).

12 Ś1 missing. — a) K D1–3.7 °सहस्रस्य; B2.5 S Cap °सहस्राणि; Ca (cf. Cv) as in text. — b) Dn2 D11.12 यथा; Ca यच्च (as in text). G3 M2.3 वा (for च). K2 D2.4.8 G2 M2.3.5 सारवर्धनं; Ca.v °वद्ध-नम् (as in text). D1.3 बंधनात्सारयेद्धनं. — c) Ca.rp (Arj.) प्रातर्देयम्; Cr (cf. Cv) सायंप्रातर् (as in text). d) S अपि संवत्सरायुतं.

13 Ś1 missing. — a) K रत्नं; D5 रूप्यं; D6 वस्त्रं; Ca.v रुक्मं (as in text). K सुवर्णं; Ca.r.s.v हिरण्यं (as in text). — b) D1–4 दासीदासम्; D7.9 M यान-युग्यम्; Ca.c यानं युग्यम् (as in text). Cs cites युग्यं. — c) K2 B (except B4) Dn D6.9–12 °संघाश्च; D1.2.7 °संघातं; D3 °संधानं; D8 °संघाता; S अश्वाश्च रथसंघाश्च; Ca as in text. — d) D1–4 M आनयेत्; T G आव्रजेत्; Crp (Arj.) आवहेत् (as in text). D8 क्षयं ननु समा-विशेत्; Ca as in text.

14 Ś1 missing. — a) T G2 योयं. D1–4 °प्रमा(D4 °प्रसा)देन; G1.3 °प्रसंगेन; M1 °प्रभावेन; Ca as in text. b) B2 D7–10 T G M5 Cv श्रियः (G2 °यं). T G

तूष्णीमास्ते यथा मूढः स्वानि कर्माणि चिन्तयन् ॥ १४
दश नागसहस्राणि पद्मिनां हेममालिनाम् ।
यं यान्तमनुयान्तीह सोऽयं द्यूतेन जीवति ॥ १५
तथा शतसहस्राणि नृणाममिततेजसाम् ।
उपासते महाराजमिन्द्रप्रस्थे युधिष्ठिरम् ॥ १६
शतं दासीसहस्राणि यस्य नित्यं महानसे ।
पात्रीहस्तं दिवारात्रमतिथीन्भोजयन्त्युत ॥ १७
एष निष्कसहस्राणि प्रदाय ददतां वरः ।
द्यूतजेन ह्यनर्थेन महता समुपावृतः ॥ १८
एनं हि स्वरसंपन्ना बहवः सूतमागधाः ।
सायंप्रातरुपातिष्ठन्सुमृष्टमणिकुण्डलाः ॥ १९
सहस्रमृषयो यस्य नित्यमासन्सभासदः ।
तपःश्रुतोपसंपन्नाः सर्वकामैरुपस्थिताः ॥ २०
अन्धान्वृद्धांस्तथानाथान्सर्वान्राष्ट्रेषु दुर्गतान् ।
बिभर्त्यविमना नित्यमानृशंस्याद्युधिष्ठिरः ॥ २१
स एष निरयं प्राप्तो मत्स्यस्य परिचारकः । C. 4. 547 B. 4. 18. 25 K. 4. 22. 69

चैवाव°; M पर्यैव° (for प्रत्यव°). D1–3 ऐश्वर्यादवरोपितः. — $^{d}$) K D7 कार्याणि (for कर्माणि). K G2 M (except M5) अचिंतयन्.

15 Ś1 missing. — $^{a}$) S पुरा शत(M दश)सहस्राणि. — K2 (hapl.) om. 15$^{b}$–16$^{a}$. — $^{b}$) B1 Dn D11.12 हयानां; S दंतिनां; Cc.r.v पद्मिनां (as in text). D8 पद्मिनो हेमशालिनः; Ca as in text. — $^{c}$) B1.3 अनुगच्छंति (for अनुयान्तीह). S स्म (for इह).

16 Ś1 missing. — $^{a}$) K2 om. 16$^{a}$ (cf. v. l. 15). Dn D11.12 G1 रथाः; T1 M3 यथा (for तथा). M1.4 दश° (for शत°). — $^{b}$) B1.3–5 D6 राज्ञाम्; S स्त्रीणाम् (for नृणाम्). B2 Dn1 नृपाणाममितौजसां; Dn2 D3.8.11.12 नृपाणामति(D3 °पि)तेजसां. — B4 om. 16$^{c}$–18$^{d}$. — $^{c}$) B Dn D5.9–12 उपासंत; D1–4 °संते; D7 °संति. D4 महात्मानं; S स राजानं (for महाराजम्).

17 Ś1 missing; B4 om. 17 (cf. v. l. 16). — $^{a}$) B (B4 om.) Dn D5–7.11.12 S °सहस्राणां. — $^{b}$) B3.5 D5.8 transp. यस्य and नित्यं. D1–4 यस्य विप्रानुपासते. — $^{c}$) K1 पात्रीहस्तां; K2 B1 Dn1 D1–3.6.8 °हस्ताः; S पात्रहस्ताः (T1 °स्तं). D1–4 दिवा रात्रौ; T2 यथान्यायं. — $^{d}$) D3.7.9 G2 भोजयत्युत.

18 Ś1 missing; B4 om. 18 (cf. v. l. 16). — $^{a}$) D4 एवं; D6 एको; D8 हेम- (for एष). B5 D4.7.9 °सहस्राणां. — $^{b}$) B5 प्रदात्वा; D2.6.9 प्रदाता; D4 प्रादाच्च; D5 प्रददे (for प्रदाय). S दत्वा प्रातर्दिने दिने. — $^{d}$) K समुपाहृतः; B2 Dn D8.11.12 Cvp(?) °श्रितः; D8 °क्रुतः; Cv as in text.

19 Ś1 missing. — $^{a}$) K B2 D4 एवं हि; T यमेनं; G M एनं सु- (for एनं हि). K रससंपन्ना. — $^{c}$) S सुसं (for सायं-). — After 19, T1 ins. a passage of 9 lines given in App. I (No. 20).

20 Ś1 missing. — $^{c}$) D1–3 वृत्त- (for तपः-). — $^{d}$) B4 प्रपूजिताः; D1.2 सुपूजिताः; D3 तु पूजिताः (for उपस्थिताः). D7.9.10 सर्वकामसुखोचिताः; D8 सर्वे कामैरुपाश्रिताः. — After 20, B Dn D2(marg.).4(om. lines 5–6).5–7.9–12 ins.:

360* अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ।
अप्रतिग्राहिणां चैव यतीनामूर्ध्वरेतसाम् ।
दश चापि सहस्राणि सोऽयमास्ते नरेश्वरः ।
आनृशंस्यमनुक्रोशं संविभागस्तथैव च । [5]
यस्मिन्नेतानि सर्वाणि सोऽयमास्ते नरेश्वरः ।

[(L. 1) Cc.r cite स्नातकाः. — (L. 2) B (except B1) D2.6 °द्दासीकमेकैकं. — (L. 4) Cr cites दश चापि सहस्राणि. — (L. 5) B3.4 D5.7.10 अनुक्रोशः; D2 अनुप्राप्तः. D6 संविभागित्वमेव च. Cc cites संविभागः. — (L. 6) D2 युधिष्ठिरः (for नरे°).]

21 Ś1 missing. B (except B1) D5.7.9 transp. 21$^{ab}$ and 21$^{cd}$. — $^{a}$) K आर्तान् (for अन्धान्). B4 D1.3.9 बालान्; D3 सर्व- (for अनाथान्). — $^{b}$) B1 Dn2 D6.8.11.12 बालान्; D1–4 S सर्व- (for सर्वान्). D2.4 S दुःखितान्; D8 निर्गतान् (for दुर्गतान्). B3–5 D5.7.9 स्वराष्ट्रे सर्वदुर्गतान्. — $^{c}$) B1 om. 21$^{c}$. K2 अविधिना; D4 मतिमान्; S अन्नार्थिनो (for अविमना). B2–5 Dn D5.7.9.11.12 बिभर्ति विविधान्राजा (D7.9 °धाकारान्). — B Dn D5.7.9.11.12 ins. after 21$^{c}$ (B1, which om. the first line also, ins. after 21$^{ab}$):

361* धृतिमान्सत्यविक्रमः ।
संविभागमना नित्यं.

[(L. 2) B D5 यः संविभज्य विनयाद्. Cf. Cc.]

22 Ś1 missing. K G1 om. 22; D4 (hapl.) om. 22–25. — $^{a}$) M2 एव (for एष). D1.3 निलयं; Ca.s.v निरयं (as in text). — $^{b}$) T2 M मात्स्यस्य. — $^{c}$) S (G1 om.) विदितो (G3 विहिता) (for देविता). B D (except

C 4. 7?0 B. 4. 22. 73 K. 4. 23. 37

शार्दूलः पिशिताकाङ्क्षी गृहीत्वेव महामृगम् ॥ ५८
तस्य पादौ च पाणी च शिरो ग्रीवां च सर्वशः ।
काये प्रवेशयामास पशोरिव पिनाकधृक् ॥ ५९
तं संमथितसर्वाङ्गं मांसपिण्डोपमं कृतम् ।
कृष्णायै दर्शयामास भीमसेनो महाबलः ॥ ६०
उवाच च महातेजा द्रौपदीं पाण्डुनन्दनः ।
पश्यैनमेहि पाञ्चालि कामुकोऽयं यथा कृतः ॥ ६१
तथा स कीचकं हत्वा गत्वा रोषस्य वै शमम् ।
आमन्त्र्य द्रौपदीं कृष्णां क्षिप्रमायान्महानसम् ॥ ६२
कीचकं घातयित्वा तु द्रौपदी योषितां वरा ।
प्रहृष्टा गतसंतापा सभापालानुवाच ह ॥ ६३
कीचकोऽयं हतः शेते गन्धर्वैः पतिभिर्मम ।
परस्त्रीकामसंमत्तः समागच्छत पश्यत ॥ ६४
तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः ।

($M_{1.4}$ *inf. lin.* °पोतकं). — After 58, N ins. a passage given in App. I (No. 24), while S ins.:

448* पुनश्चातिबलस्तत्र कीचको बलदर्पितः ।
व्यायच्छन्नेव दुर्धर्षः पाण्डवेन तरस्विना ।
मुष्टिना भीमसेनेन शिरस्यभिहतो भृशम् ।
कीचको वृत्तरक्ताक्षो गतासुरपतद्भुवि ।

[ (L. 3) $M_{1.4}$ अभ्याहतो (for अभिहतो). — After line 3, T $G_2$ ins. a passage given in App. I (No. 25). ]

59 $^{a}$) $B_2$ $D_{3.8}$ $M_5$ पाणी च पादौ च (by transp.). — $^{b}$) $D_{2.8}$ कटि- (for शिरो). Ś$_1$ शिरोग्रीवे; T $G_2$ शिरश्चैव; $G_1$ $M_1$ शिरोग्रीवं. S सकुंडलं (for च सर्वशः). — $^{c}$) K $D_{4.7}$ कायं (for काये). Ś$_1$ कायं च पेषयामास; Cr पादेन पीडयामास; Crp (Dev.) पादाष्ठीलैर्जघानाथ. Cc cites पादाष्ठीलैः. — $^{d}$) Ś$_1$ पिनाकधृत्; K °भृत्. S मृदित्वांगानि सर्वशः.

60 $^{a}$) $B_2$ तमुन्मथित°; $B_4$ S स तं मथित°. — $^{b}$) Ś$_1$ स्थितं (for कृतं). S मांसपिंडमथा(T $G_2$ °मिवा)करोत्. — After $60^{ab}$, S ins.:

449* तत्राग्निं स्वयमुज्वाल्य दर्शयामास कीचकम् ।

— $M_5$ om. $60^{cd}$. — $^{c}$) Ś$_1$ B (except $B_3$) $Dn_1$ $D_{1.3.5.7.9.11.12}$ Cn कृष्णायाः. T G कृष्णां प्रोवाच भीमस्तु ($T_1$ $G_{2.3}$ °स्तं). — $^{d}$) S ($M_5$ om.) पश्येमं ($M_{1-4}$ पश्यैनं) सुभ्रु कामुकं.

61 $^{a}$) $D_{2.4.7.8}$ स (for च). $D_3$ महाबाहो; $D_{10}$ महत्तेजा. — $^{b}$) Dn $D_{7.11.12}$ योषितां वरां (for पाण्डु°). — After $61^{ab}$, $D_4$ ins. वैशंपायन उ°. — $^{c}$) $K_1$ $D_{1.3}$ इमम् (for एनम्). Ś$_1$ K इह (for एहि). — $^{d}$) $D_2$ (*inf. lin.*)$._8$ कीचको (for कामुको). Ś$_1$ हतः (for कृतः). S कामुकोयं (T $G_2$ कामक्रोध-; $M_5$ कामुकं ते) कृतागसः (T $M_5$ °सं). — After 61, N (except K $D_{1.4.8}$; $B_2$ om. lines 4–7; $D_2$ marg.; $D_3$ om. line 7) ins. the foll. passage, of which T G ins. at the same point lines 5–6 only:

450* एवमुक्त्वा महाराज भीमो भीमपराक्रमः ।
पादेन पीडयामास तस्य कायं दुरात्मनः ।
ततोऽग्निं तत्र प्रज्वाल्य दर्शयित्वा तु कीचकम् ।
पाञ्चालीं स तदा वीर इदं प्रोवाच तां पुनः ।
प्रार्थयन्ति सुकेशान्ते ये त्वां शीलगुणान्विताम् ।
एवं ते भीरु वध्यन्ते कीचकः शोभते यथा ।
तत्कृत्वा दुष्करं कर्म कृष्णायाः प्रियमुत्तमम् ।

[ (L. 1) $B_3$ $D_5$ °तेजाः; $D_6$ °बाहुः (for °राज). — (L. 2) $B_{1.3.5}$ पादाष्ठीलैर्जघानाथ; $D_6$ पादेन घट्टयामास (for prior half). $D_{7.9}$ महाम($D_7$ °त्म)नाः (for दुरात्मनः). — (L. 3) Cf. 449*. — (L. 4) Ś$_1$ $B_{1.5}$ Dn $D_{3.5.11.12}$ इदं वचनमब्रवीत् (for posterior half). — (L. 5) $D_3$ T G प्रार्थयंते. T G °समन्वितां (for °गुणान्विताम्). — (L. 6) $D_{2.3.6}$ Crp (Cat. Dev.) शोभने; Cr शोभते (as in text). T G एवं स्वपंति ते भीरु शेतेयं कीचको यथा. — After line 6, T ins.:

451* यस्त्वामभ्यहनन्रुद्रे पदा भूमौ निपात्य च ।
एवमुक्त्वा महाबाहुर्गन्धर्वेण हतं तदा ।
विज्ञापनार्थमन्येषां विरराम महाहवात् ।

62 Before 62, $K_2$ $D_2$ (marg.) $T_2$ G $M_5$ ins. वैशं°. — $^{a}$) $D_6$ $T_2$ च; $G_1$ तु (for स). $M_3$ transp. हत्वा and गत्वा (in $^{b}$). — $^{b}$) $D_{1.3}$ S निष्कृतिं (for वै शमम्). Cc cites शमम्. — $^{c}$) $B_4$ भीमः; $D_{1.3}$ भूयः; S पश्चात् (for कृष्णां). — $^{d}$) $G_3$ प्रायात् (for आयात्). — After 62, S (except $M_3$) ins.:

452* स्नात्वानुलेपनं कृत्वा ह्यापूर्य च मनोरथम् ।
सुखोपविष्टः शयने भीमो भीमपराक्रमः ।
ततः कृष्णा यदा मेने गतं भीमं महानसम् ।

[ (L. 1) $G_{2.3}$ M (except $M_3$) महा° (for मनो°). ]

63 $^{a}$) $B_4$ $D_9$ $M_2$ पातयित्वा; $G_{1.3}$ योधयित्वा. $K_1$ transp. घात° and तु. T $G_{1.3}$ $M_{1-4}$ च; $G_2$ अथ (for तु). — $^{c}$) $D_6$ S गतसंत्रासा. — $^{d}$) G $M_{2-4}$ सा (for ह).

64 $^{c}$) $B_4$ °कामसंमूढः; $Dn_1$ S °संतप्तं ($Dn_1$ T $G_2$ °प्तः); $D_3$ °संमत्तं; $D_{10}$ °कामुकं मत्तं. — $^{d}$) Ś$_1$ $B_{1.2.5}$ Dn $D_{11.12}$ तत्रा°; $B_3$ तमा°; $B_4$ $D_{5.10}$ तदा° (for समा°).

सहसैव समाजग्मुरादायोल्काः सहस्रशः ॥ ६५
ततो गत्वाथ तद्वेश्म कीचकं विनिपातितम् ।
गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितम् ॥ ६६
क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरस्तथा ।
इति स्म तं परीक्षन्ते गन्धर्वेण हतं तदा ॥ ६७

इति श्रीमहाभारते विराटपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## २२

वैशंपायन उवाच ।
तस्मिन्काले समागम्य सर्वे तत्रास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्य समन्ततः ॥ १
सर्वे संहृष्टरोमाणः संत्रस्ताः प्रेक्ष्य कीचकम् ।
तथा सर्वाङ्गसंभुग्नं कूर्मं स्थल इवोद्धृतम् ॥ २
पोथितं भीमसेनेन तमिन्द्रेणेव दानवम् । C 4.795 B. 4. 23. 3 K. 4. 27. 3

G1.3 पश्यतैनं हतं भुवि.

65 Before 65, G M2 ins. वैशं°. — a) D1.3 श्रुत्वा तु (for तच्छ्रुत्वा). — b) In M3, the portion from 4. 21. 65e to 4. 22. 25c is lost on a missing fol. — c) S (except M2.4; M3 missing) तदा° (for समा°). — d) S (M3 missing) उल्कामा(M1.4 °श्चा-; M5 आ)दाय सर्वशः. — After 65, T1 G3 M (M3 missing) ins.

453* तस्यास्तं निनदं श्रुत्वा कीचकस्य सहोदराः ।
[ G3 तस्य तन्निधनं; M1.2 तत्र तं निनदं. ]

66 M3 missing; D3 om. 66ab. — a) B3 M2 च; D1-3 तु (for अथ). Dn2 D11.12 वेगेन (for तद्वेश्म). T1 सर्वे चागम्य तद्वेश्म. — After 68, D2 (marg.) ins.:

454* नास्य ग्रीवा न चरणौ न पाणी न शिरस्तथा ।,

repeating thereafter 67cd (v. l. निरीक्षंते for परी°). On the other hand, B2 (om. lines 2-3).4 Dn1 D6.11.12 S (om. lines 2-3) ins. after 66: D2, after 454*:

455* पाणिपादविहीनं तु दृष्ट्वा ते व्यथिताभवन् ।
निरीक्षन्ति ततः सर्वे परं विस्मयमागताः ।
अमानुषं कृतं कर्म तं दृष्ट्वा विनिपातितम् ।

[ (L. 1) S (M3 missing) पाणिपादशिरोहीनं (for prior half). S (M3 missing) विस्मिताभवन् (T2 विस्मयं गताः) (for व्यथिताभवन्). — After line 1, B2.4 D2 (marg.).6 ins.:

456* ततो भयं ययुः शीघ्रं सायुधा भरतर्षभ ।
अथैनं हृष्टरोमाणो विस्मिताः प्रेक्ष्य कीचकम् ।

(B2 D2 सर्वे for शीघ्रं). — (L. 2) B4 निरीक्षंतः; Dn2 D11.12 निरीक्षंत. — (L. 3) D2 अहो कष्टं (for अमानुषं). ]

67 b) D1.3.4 बाहू (for पाणी). S क्व दृक् (for तथा). — c) T G2.3 M3 transp. स्म and तं. K D1.3.4 परीप्संतो; B D5.6.10 निरीक्षंते (for परीक्षन्ते). Dn2 D7.9.11.12 इति तां पर्यपृच्छंत. — d) B5 D1.3.4.8.10 तथा (for तदा). D6 गंधर्वैर्निहतं तथा. — After 67, K2 D1-4.7-9 ins.:

457* हतं हि दृष्ट्वा निशि सैन्यनाथं
राज्ञो विराटस्य बलाभिमुख्याः ।
कीलालमिश्रं पिशितस्य पिण्डं
तं मेनिरे दत्तमुपाधिदेव्याः ।
[ Cv explains lines 3-4. ]

Colophon is lost in M3 on a missing fol. — *Sub-parvan:* All MSS. (M3 missing) कीचकवध. — *Adhy. name:* M2 कीचकहननं. — *Adhy. no.* (figures, words or both): Ś1 K1 B4 D6.10 21, D3 23; D5.11 22; T G M1 25; M2.4.5 24. — *S'loka no.:* G3 46.

### 22

In M3, 1-25c are lost on a missing folio.

1 K1 reads 2bcd before 1. — a) D1-3.8.10 G3 M1.2.4 ततः (for तस्मिन्). D2 कालं; D10 कल्यं (for काले). T G2 तत्काले तु (for तस्मिन्काले). B2 समाक्रम्य; D4 समागत्य. — b) D1.3.4 ते तत्र (for तत्रास्य). — d) K1 समं तथा; D1.3 T2 G M1.2.4 उपतस्थिरे; T1 M5 अभितः स्थिताः (for समन्ततः).

2 T1 om. 2-8. — a) B4 संत्रस्तमनसः; D5 (m as in text) संतप्तमनसः (for संहृष्टरोमाणः). — b) B4 D5 (m as in text) संतप्ताः (for संत्रस्ताः). K1 विस्मिता व्याकुलास्तथा. — c) D4 M1 ततः (for तथा). Ś1 K B Dn D5.7.9.11.12 संभिन्नसर्वांगं; D1-4.6.8.10 T2 G2.3 M4.5 सर्वांगसंभग्नं; G1 सर्वांगसंलग्नं; text as in M1.2! — d) K2 D1.2.9.10 M5 कूर्म(D9.10 M5 °र्मं)स्थलमिव; D3 कूर्मजाल-

C 4.736 B. 4.23 3 K. 4.27 4 संस्कारयितुमिच्छन्तो वहिर्नेतुं प्रचक्रमुः ॥ ३
ददृशुस्ते ततः कृष्णां सूतपुत्राः समागताः ।
अदूरादनवद्याङ्गीं स्तम्भमालिङ्ग्य तिष्ठतीम् ॥ ४
समवेतेषु सूतेषु तानुवाचोपकीचकः ।
हन्यतां शीघ्रमसती यत्कृते कीचको हतः ॥ ५
अथवा नेह हन्तव्या दह्यतां कामिना सह ।
मृतस्यापि प्रियं कार्यं सूतपुत्रस्य सर्वथा ॥ ६
ततो विराटमूचुस्ते कीचकोऽस्याः कृते हतः ।
सहाद्यानेन दह्येत तदनुज्ञातुमर्हसि ॥ ७
पराक्रमं तु सूतानां मत्वा राजान्वमोदत ।
सैरन्ध्याः सूतपुत्रेण सह दाहं विशां पते ॥ ८
तां समासाद्य वित्रस्तां कृष्णां कमललोचनाम् ।
मोमुह्यमानां ते तत्र जगृहुः कीचका भृशम् ॥ ९
ततस्तु तां समारोप्य निबध्य च सुमध्यमाम् ।

---

मिव. Ś1 K2 उद्गतं (for उद्धृतम्). K1 कूर्मं स्थलगतं तथा.

3 T1 om. 3 (cf. v. l. 2). — $^{a}$) D3 प्रोज्झितं; D10 पातितं; T2 G2 M (M3 missing) तं हतं; G1.3 हतं तं; Ca.rp (Dev.) प्रोक्षितं; Cr पोथितं (as in text). D3 (corrupt) पीष्पितं भीमं (for भीमसेनेन). — $^{b}$) S (T1 om.; M3 missing) महेंद्रेण (for तमिन्द्रेण). D3.10 च (for इव). M1 शंबरं (for दानवम्). — After 3$^{ab}$, S (T1 om.; M3 missing) ins.:

458* कीचकं बलसंमत्तं दुर्धर्षं येन केनचित् ।
गन्धर्वेण हतं श्रुत्वा कीचकं पुरुषर्षभम् ।
[ (L. 2) G3 पुरुषाधमं (for पुरुषर्षभम्). ]

4 T1 om. 4 (cf. v. l. 2). — $^{a}$) Ś1 K1 B2 D5 तदा; K2 तथा (for ततः). S (T1 om.; M3 missing) अपश्यन्नथ ते कृष्णां. — $^{c}$) B1 D11.12 ins. च before अनवद्याङ्गीं. — $^{d}$) Ś1 आश्रित्य; K आलंब्य (for आलिङ्ग्य).

5 T1 om. 5 (cf. v. l. 2). — $^{a}$) G2 समुपेतेषु (for समवे°). Dn D11.12 G3 M1.2 सर्वेषु (for सूतेषु). K2 समवेक्ष्य तदा सर्वे; D1.3.4.8 समवेक्ष्यैव ते सर्वे; D7.9 समवेतास्तदा सर्वे. — $^{b}$) Ś1 तम् (for तान्). K1 एक- (for उप-). K2 B D (except D2) तामू(B2 D5 तत्रो)चुरुप(K2 °स्तेथ)कीचकाः. — After 5$^{ab}$, T2 G ins.:

459* हसन्निव तदामर्षान्निर्दहन्निव चक्षुषा ।

— Before 5$^{cd}$, M4 ins. उपकीचकः. — $^{c}$) K D (except D5.11.12) G1.3 असतीं (reading originally, perhaps, हन्म तां for our हन्यतां). — $^{d}$) D2.8 यस्यार्थे (for यत्कृते).

6 T1 om. 6 (cf. v. l. 2). — $^{a}$) Ś1 B1.2.5 Dn2 D11.12 नैव; Dn1 वै न; D7.9 इयं न; M (M3 missing) एषा न (for नेह). D6 सहाद्यानेन हंतव्या. — $^{b}$) Ś1 दहतां सह कामिना. — After 6, S (T1 om.; M3 missing) ins.:

460* इयं हि दुष्टचारित्रा मम भ्रातुरमित्रिणी ।
यत्कृते मरणं प्राप्तो नेयं जीवितुमर्हति ।
सहेयं दह्यतां सूता आपृच्छ्य च जनाधिपम् ।
हतस्यापि हि गन्धर्वैः कीचकस्य प्रियं भवेत् ।
[ (L. 2) G3 व्यसनं (for मरणं). — (L. 3) T2 G M1.4.5 आपृच्छत (G3 °थ) (for आपृच्छ्य च). ]

7 T1 om. 7 (cf. v. l. 2). — $^{c}$) Ś1 B1.2.5 Dn D2.4.7–9.11.12 सहानेनाद्य (D2.8 °न तु); B3 D5 सहानयैव; B4 D10 सहैवा(D10 °षा)नेन (for सहाद्यानेन). D7.9 दाह्यैषा (for दह्येत). — $^{d}$) K D1.3.4 ताम् (for तद्). D10 अनुज्ञातुं त्वमर्हसि. — For 7, S (T1 om.; M3 missing) subst.:

461* वैशंपायनः ।
ततो विराटमागम्य सूताः प्राञ्जलयोऽब्रुवन् ।
सूताः ।
कीचकोऽयं हतः शेते गन्धर्वैः कामरूपिभिः ।
सैरन्ध्या घातितो रात्रौ तं दहेम सहानया ।
मानिता हि त्वया राजंस्तदनुज्ञातुमर्हसि ।
[ (L. 4) T2 G स्म (for हि). M (M3 missing) वीर (for राजन्). ]

8 T1 om. 8 (cf. v. l. 2). Before 8, S (T1 om.) ins. वैशं°. — $^{a}$) K2 तं; D1.3.6 च (for तु). — $^{b}$) D1.3 तच्च; T2 G2.3 M (M3 missing) ज्ञात्वा (for मत्वा). D1.3 अन्वमोदयत्; D6 अनुमोदते; T2 G2.3 M4 अन्वमन्यत; G1 अन्वपद्यत; M1 अनुमन्यत; M2 अवमन्यत. — $^{c}$) Ś1 K D1–4.8 प्रेक्ष्य(K D2 °क्ष-; D4 °ष्य)माणायाः (for सूत°). — $^{d}$) T2 सह दग्धुं (for सह दाहं). B1 D4.11.12 विशां पतिः; T2 G2.3 M (M3 missing) जनाधिपः (M4.5 °प).

9 D9 om. 9. For S see v. l. 10. — $^{a}$) B4 D5 समादाय (for °साद्य). — $^{b}$) D5 कन्यां (for कृष्णां). — $^{c}$) Ś1 K संमुह्यमानां; D2.8 रोरूयमाणां (D2 °णास्); Cc मोमुह्यमानां (as in text). B2.4 D1.3–5 तां (for ते). — $^{d}$) K बलात् (for भृशम्).

10 For S see below. — $^{a}$) D1 तु ते; D10 तां च (for तु तां). — $^{b}$) B3 निबध्य तनुमध्यमां. — $^{c}$) Ś1 K1 D10 जहुर् (for जग्मुर्). B4 उत्पद्य; D1.3 उद्दिश्य; D6 उद्गम्य; Cc उद्यम्य (as in text). D2 ते वै तदा (for उद्यम्य ते). — $^{d}$) K D4 श्मशानाभिमुखास् (for °नम-

जग्मुरुद्यम्य ते सर्वे श्मशानमभितस्तदा॥ १०
ह्रियमाणा तु सा राजन्सूतपुत्रैरनिन्दिता ।
प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ॥ ११

द्रौपद्युवाच ।

जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥ १२
येषां ज्यातलनिर्घोषो विस्फूर्जितमिवाशनेः ।
व्यश्रूयत महायुद्धे भीमघोषस्तरस्विनाम् ॥ १३
रथघोषश्च बलवान्गन्धर्वाणां यशस्विनाम् ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥ १४

वैशंपायन उवाच ।

तस्यास्ताः कृपणा वाचः कृष्णायाः परिदेविताः ।
श्रुत्वैवाभ्यपतद्भीमः शयनादविचारयन् ॥ १५

भीमसेन उवाच ।

अहं शृणोमि ते वाचं त्वया सैरन्ध्रि भाषिताम्
तस्मात्ते सूतपुत्रेभ्यो न भयं भीरु विद्यते ॥ १६ C. 4. 803 B. 4. 23. 16 K. 4. 27. 25

भितस्). B2 D8.12 तथा (for तदा).

For 9–10, S (M8 missing) subst.:

462* ततस्ते समनुज्ञाताः सर्वे तत्रास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिचार्याभितः स्थिताः ।
आरोप्य कृष्णामथ कीचकेन
निबध्य केशेषु च पादयोश्च ।
ते चापि सूता वचनैरवोच- [5]
न्नुद्दिश्य कृष्णामभिवीक्ष्य चैनाम् ।
यस्याः कृतेऽयं निहतो महात्मा
तस्माद्धि सा कीचकमार्गगास्तु ।
अनार्यसत्त्वेन च कीचकेन
गतासुना सुन्दरी स्वर्गलोकम् । [10]
वैशंपायनः ।
साशेत कृष्णा शयने निबद्धा
मनस्विनी चैव यशस्विनी च ।
विलम्बमाना विवशा हि दुष्टै-
स्तत्रैव पर्यङ्कवरे शुभाङ्गी ।

[ (L. 2) T2 M2 परिवार्योपतस्थिरे (for posterior half). — (L. 9) G3 M (M8 missing) सहायसत्वा (for च कीचकेन). — (L. 10) G3 M (M8 missing) कीचकेन (for स्वर्गलोकम्). ]

11 Before 11, K2 ins. वैशं° उ°. — [a]) D6 च; T G2 M (M8 missing) अथ (for तु). D1.3.4 सा तत्र; S (M8 missing) सुश्रोणी (for सा राजन्). — [c]) B4 आक्रोशत्. D3 मोक्षम् (for नाथम्). — [d]) Ś1 K1.2 B4 D7.9 10 तदा (for कृष्णा). — After 11, T ins.:

463* मृतेन सह बद्धाङ्गी निराशा जीविते तदा ।
श्मशानाभिमुखं नीता करेणुरिव रौति सा ।

☞ Ś1 missing from 4. 22. 12 up to 4. 25. 10.

12 $12^{ab}$=4. 5. $30^{ab}$. — [a]) S (M8 missing) जयेशो (for जयन्तो). — [b]) D1–3 जयसेनो; D7 जयावहः. D4 बृहद्बलः. — [c]) K1 ये ते; K2 एते (for ते मे). D1.3.4 विश्रृण्वंतु (for विजानन्तु). — [d]) T2 हरंति (for नयन्ति). — After 12, T G2 M1 4 ins.:

464* येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयते महान् ।,
repeating thereafter $12^{cd}$.

13 B3 (hapl.) om. 13–14 and the ref. before 15. D10 repeats 13–14 thrice (with corrupt v. l.). — [a]) B4 ज्याघातनिर्घोषो. — [b]) G M4.5 विस्फूर्जितम्. — [c]) K2 S (M8 missing) अश्रूयत. S (except G3; M8 missing) महान्यु(G1 महद्यु)द्धे.

14 B3 om. 14 (cf. v. l. 13); D4 G (? hapl.) om. $14^{ab}$. — [b]) B (B3 om.) Dn D7.9.11.12 T1 तरस्विनां; D5 महौजसां (for यश°). — [c]) D1.3 विश्रृण्वंतु; G3 विजानंति. — After 14, S (except M2; M8 missing) ins.:

465* येषां वीर्यमतुल्यं तु शक्रस्येव बलं यशः ।
राजसिंहा इवाग्र्यास्ते मां जानन्तु सुदुःखिताम् ।

[ (L. 1) T येषां तु (T2 हि) वीर्यमतुलं (for prior half). G3 बलीयसः (for बलं यशः). ]

15 B3 S (except T1) om. the ref. — [a]) D1.3 4 एवं सु (D4 स-); S (M8 missing) इत्यस्याः (for तस्यास्ताः). — [b]) D6 T1 G2 द्रौपद्याः; G3 कृष्णया (for कृष्णायाः). B1 Dn D10–12 G3 परिदेवितं. — [c]) B Dn D7.8.11 12 अभ्यापतद् (B4 अभ्यद्रवद्); S (M8 missing) अभ्युत्थितो. D2 श्रुत्वोत्तस्थौ तदा भीमः. — [d]) K अवधारयन् (for अविचारयन्).

16 D1 om. 16 (with the ref.). D8 G1.3 M (M8 missing) om. the ref. B1–3 D4.5.9 T G2 भीमः (for भीमसेनः). — [ab]) N (except K B4 D5–7) भाषितं. S (M8 missing) अहं सैरंध्रि ते वाचः (G3 M5 °चं) शृणोमि तव (T G2 परि-; M1 मयि) भाषिताः (T2 G3 M2 °तं). — [d]) S (M8 missing) जातु (for भीरु). B (except B4) Dn D6.10–12 भयं भीरु न विद्यते; D3.4 न भयं विद्यते

C. 4. 809 B. 4. 22. 17 K. 4. 27. 26

वैशंपायन उवाच ।
इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया ।
ततः स व्यायतं कृत्वा वेषं विपरिवर्त्य च ।
अद्वारेणाभ्यवस्कन्द्य निर्जगाम बहिस्तदा ॥ १७
स भीमसेनः प्राकारादारुज्य तरसा द्रुमम् ।
श्मशानाभिमुखः प्रायाद्यत्र ते कीचका गताः ॥ १८
स तं वृक्षं दशव्यामं सस्कन्धविटपं बली ।
प्रगृह्याभ्यद्रवत्सूतान्दण्डपाणिरिवान्तकः ॥ १९
ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः ।
भूमौ निपतिता वृक्षाः संघशस्तत्र शेरते ॥ २०
तं सिंहमिव संक्रुद्धं दृष्ट्वा गन्धर्वमागतम् ।
वित्रेसुः सर्वतः सूता विषादभयकम्पिताः ॥ २१
तमन्तकमिवायान्तं गन्धर्वं प्रेक्ष्य ते तदा ।
दिधक्षन्तस्तदा ज्येष्ठं भ्रातरं ह्युपकीचकाः ।
परस्परमथोचुस्ते विषादभयकम्पिताः ॥ २२
गन्धर्वो बलवानेति क्रुद्ध उद्यम्य पादपम्

क्वचित्. — After 16, D8 ins an additional colophon.

17 D3 M1. 5 om. the ref. — $^{b}$) K2 D1. 10 विजिजृंभे; D2 विजृंभित-; D7. 9 G2 व्यजृंभत; T1 G1 विजृंभेन (G1 °त); Ca. c as in text. — $^{c}$) Dn1 संख्यायतं (analysis of Cv points to an original संख्यायतिं); T1 G3 स व्यावृतं; T2 G2 सोप्यायतं; Ca सव्यायनं; Cc ap सव्यायतं; Cap स व्यायतं (as in text). ❀ Cr: [स]व्यायतं वामं २ [स]व्यायनं दक्षिणं(दे)।❀ Cc cites व्यायतं (cf. Cs). S (M3 missing) बध्वा (for कृत्वा). K तस्मात्साध्वायतं कृत्वा; D1. 3 स व्यायतं वपुः कृत्वा. — $^{d}$) S (M3 missing) वस्त्रं च परिवेष्ट्य च. — $^{e}$) D2. 6. 8 वि(D6 अभि)निष्क्रम्य; Ca अभ्यवस्कन्द्य (as in text). Cc cites अवस्कन्द्य.

18 S om. $18^{ab}$. — $^{a}$) B3. 4 D5–7. 9 प्राकारम् (for प्राकाराद्). — $^{b}$) K1 आसज्य; K2 आदाय; B Dn D2. 5–7. 9–12 Cr. s आरुह्य; D1. 3 उत्पाट्य; Ca. c. v. rp (Dev.) as in text. B2 D5 सहसा; Cv तरसा (as in text). B (except B3) D5–7. 9 -द्रवत्; D2. 6 द्रुतं (for द्रुमम्). D4. 8 अधिरुह्य (D8 अविमज्य) महाद्रुमं. — $^{d}$) T G M5 यतस्ते (for यत्र ते). — After 18, B Dn (Dn2 om. lines 1–2) D2 (marg.). 4 (om. lines 3. 4). 5 (om. line 1). 6. 7. 9–12. (D11. 12 om. lines 1–2) S (om. line 1; M3 missing) ins.:

466* स लङ्घयित्वा प्राकारं निःसृत्य च पुरोत्तमात् ।
जवेनोत्पतितो भीमः सूतानामग्रतस्तदा ।
चितासमीपे गत्वा स तत्रापश्यद्वनस्पतिम् ।
तालमात्रं महास्कन्धमूर्ध्वशुष्कं विशां पते ।
तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च ।
स्कन्धमारोपयामास दशव्यामं परंतपः ।

[ (L. 2) B Dn1 D2. 4. 5. 7. 9 पतितो; D6 आपतितो (for उत्पतितो). — (L. 3) D8. 10 S (M3 missing) °समीपं (for °समीपे). S (M3 missing) तु (for स) and महाबलः (for वनस्पतिम्). — (L. 4) B Dn D11. 12 मूर्धं°; D2. 5. 7. 9. 10 अर्धं° (for ऊर्ध्व°). S (M3 missing) वनस्पतिं (for विशां पते). — (L. 5) B4 D2. 4 T G2. 3 उपाक्रम्य; Cr as in text. B3 परिरुज्य; G1. 3 M1 परिगृह्य (for परिरभ्य). — (L 6) D2 सप्त°; D7 m शत° (for दश°). S (M3 missing) वृक्षमुत्पाटयामास भीमो भीमपराक्रमः ]

19 $^{a}$) S (M3 missing) ततो (M1 तं तु) (for स तं). — $^{b}$) D1. 3. 9 सुस्कंध° (for सस्कन्ध°). S (M3 missing) निष्पत्रमकरोत्तदा. — After $19^{ab}$, S (M3 missing) ins.:

467* तं महाकायमुद्यम्य भ्रामयित्वा च वेगितः ।

[ M4 उत्पाट्य (for उद्यम्य). G3 M1 वेगतः (for वेगितः). ]
— $^{c}$) S (except G2; M3 missing) अभ्यपतत् (T2 अपातयत्; M4 अभ्यगमत्; M5 प्राद्रवत्) (for अभ्यद्रवत्).

20 $^{a}$) D4 ते भग्ना; G1 तस्यास्य (for तस्याथ). — $^{c}$) B4 Dn1 निपातिता (for निप°). — $^{d}$) Dn2 D11. 12 संहतास्; D7 शतशस्; S (M3 missing) सं(T3 सु-; G1 ते)भग्नास् (for संघशस्).

21 $^{a}$) D9 ते (for तं). D9 क्रुद्धं तं; M1 संभग्नं (for संक्रुद्धं). — $^{b}$) D2 गंधर्वं प्रेक्ष्य ते तदा. — $^{c}$) D3 दुद्रुवुः (for वित्रेसुः). B4 Dn1 D5 G2 M1. 2 सर्वशः (for सर्वतः). — $^{d}$) = $22^{f}$. B1. 3 °कर्षिताः; D1. 3. 4 °मोहिताः; S (M3 missing) °पीडिताः.

22 B1. 2. 5 Dn1 D10 M2 (? hapl.) om. 22; M1 om. $22^{ab}$. — $^{a}$) D2. 8 T G M4. 5 क्रुद्धं (for आयान्तं). — $^{b}$) D2 दृष्ट्वा गंधर्वमागतं; D4 दृष्ट्वा भीमपराक्रमं; T G M4. 5 गंधर्वभयशंकिताः. — $^{c}$) B3 D5. 6 T G M1. 4. 5 तथा (for तदा). D3 श्रेष्ठं (for ज्येष्ठं). — $^{d}$) D2. 8 कीचकं तदा; T1 G2. 3 M1. 4. 5 चोपकीचकाः; T2 G1 चापि की°. — $^{f}$) = $21^{d}$. B4 क उपायो भवेदिति; D1. 3. 4. 8 गंधर्वभयशंकिताः; D2 पश्य पश्यत कीचकाः; D7 °शंकिताः; S (except M2; M3 missing) °मोहिताः (M5 °पीडिताः).

23 After $23^{ab}$, S (M3 missing) ins.:

सैरन्ध्री मुच्यतां शीघ्रं महन्नो भयमागतम् ॥ २३
ते तु दृष्ट्वा तमाविद्धं भीमसेनेन पादपम् ।
विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति ॥ २४
द्रवतस्तांस्तु संप्रेक्ष्य स वज्री दानवानिव ।
शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनम् ॥ २५
तत आश्वासयत्कृष्णां प्रविमुच्य विशां पते ।
उवाच च महाबाहुः पाञ्चालीं तत्र द्रौपदीम् ।
अश्रुपूर्णमुखीं दीनां दुर्धर्षः स वृकोदरः ॥ २६
एवं ते भीरु वध्यन्ते ये त्वां क्लिश्यन्त्यनागसम्
प्रैहि त्वं नगरं कृष्णे न भयं विद्यते तव ।
अन्येनाहं गमिष्यामि विराटस्य महानसम् ॥ २७
पञ्चाधिकं शतं तच्च निहतं तत्र भारत । C. 4. 826 B. 4. 23. 32 K. 4. 27. 61

468* प्रबुद्धाः सुमहाभागा गन्धर्वाः सूर्यवर्चसः ।

— d) Dn D1. 7. 11 12 यतो; D3 महान् (for महत्). S (M3 missing) transp महत् and भयं. B (except B4) D6 वो (for नो). D1 3 भय आगतः.

24 Before 24, S (M3 missing) ins. वैशं°. — a) B2 Dn1 D5 7–9 M2 तदाविद्धं; B4. 5 तथाविद्धं; D1–3. 10 समाविद्धं. — c) K आविध्यन्; D10 आमुच्य; Cs विमुच्य (as in text). D1. 3. 4 तूर्णं; S (M3 missing) त्रस्ताः (for तत्र). — After 24, T G2 (which both om. 25ab) ins.:

469* अथ भीमः समुत्पत्य द्रवतां पुरतोऽपतत् ।
ते तं दृष्ट्वा भयोद्विग्ना निश्चेष्टाः समवस्थिताः ।
दृष्ट्वा ताञ्शतसंख्यानान्स वज्री दानवानिव ।
एकेनैव प्रहारेण दश सप्त च विंशतिः ।
त्रिंशच्चत्वारिपञ्चाशाञ्जघान स वृकोदरः ।

[ (L. 1) G2 समुत्प्लुत्य (for °त्पत्य). T1 -भवत् (for ऽपतत्). — (L. 3) T2 शतसंख्याकान्. — (L. 5) T1 अष्टादश च (for त्रिंशच्चत्वारि-). ]

25 T G2 om. 25ab. — a) D8 स; G1. 3 M1. 4. 5 च (for तु). M2 समालक्ष्य (for तु संप्रेक्ष्य). — b) M2 वृत्रहा (for स वज्री). B4 दानवानिव वासवः. — M3 resumes from 25d. — After 25, K2 B1. 4. 5 Dn D2 (marg.). 6. 11. 12 ins.:

470* वृक्षेणैतेन राजेन्द्र प्रभञ्जनसुतो बली ।;

while S ins.:

471* वायुवेगसमः श्रीमान्सर्वान्सूतानशेषतः ।
तान्निहत्य महाबाहुर्भीमसेनो महाबलः ।

[ (L. 2) T G2 तान्निहत्य महान्भीमः शतं पंच च कीचकान्. ]

26 a) D6 ततश्चाश्वासयत्; S (by transp.) आश्वासयत् (M5 °यन्) ततः (G1. 3 तदा). — b) K विमुच्यैव; B1. 2. 5 Dn2 D11. 12 स विमुच्य; B4 D6. 10 प्रतिमुच्य; Dn1 संविमुच्य. S प्रतिमुच्य च बंधनात्. — c) D3. 7–9 स (for च). T G2 उवाच श्लक्ष्णया वाचा. — d) B2. 4. 5 D5 पांडुनंदनः; D1. 3 4 रहसि (D4 रहिते) त(D1 स्त)दा; S भरतर्षभः (T2 जनमेजय) (for तत्र द्रौपदीम्). — e) D4 दृष्ट्वा; D7. 9 देवीं; T1 G M3. 4 भीतां (for दीनां). — f) G1. 3 M उद्धरन् (for दुर्धर्षः). T G2 केशग्रहणवेपितां — After 26, T G2 ins. a passage given in App. I (No. 26).

27 b) B3 D2. 5 (m as in text) G1. 3 M हिंसंति; D8. 10 हिंस्यंति; T G2 कांक्षंति (for क्लिश्यन्ति). D2 अनिंदिते; S मानवाः (for अनागसम्). — c) D3. 6 प्रेहि; S गच्छ; Cc as in text. D1–3. 8 भद्रे (for कृष्णे). — After 27cd, D7 (marg.) S ins.:

472* अन्येन त्वं पथा शीघ्रं सुदेष्णाया निवेशनम् ।

— e) D5. 9 अज्ञातोहं; G1 अनेनाह (for अन्येनाहं). Cc r cite अन्येन (as in text). — f) D1. 2. 4 महानसे (for °नसम्). — K subst. for 27cdef: D1–4. 5 (marg.). 7–9 ins. after (the interpolated) वैशं° उ° of 28 (cf. v. l. 28):

473* इत्युक्ता भीमसेनेन अदृश्या सा च तत्क्षणात् ।
अपसर्पत मा कश्चित्पश्येदित्यभिशङ्कया ।

[ (L. 1) K1 इत्युक्त्वा स च तत्रान्यैरदृष्टः स च तत्क्षणात्. ]

— After 27, S ins.:

474* यथा नौ नावबुध्येरन्नात्रावेवं व्यवस्थितौ ।
वैशंपायनः ।
सागच्छन्नगरं कृष्णा भीमेनाश्वासिता सती ।
कृतकृत्या सुदेष्णाया भवनं शुभलक्षणा ।
शचीव नहुषे शस्ते प्रविवेश त्रिविष्टपम् ।
भीमोऽप्यमितवीर्यस्तु बलवानरिमर्दनः । [5]
सर्वांस्तान्कीचकान्हत्वा तत्र धर्मात्मजानुजः ।
निःशेषान्कीचकान्हत्वा रामो रात्रिंचरानिव ।
जितशत्रुरदीनात्मा प्रविवेश पुरं ततः ।

28 All MSS. except K M1. 4. 5 (Ś1 missing) ins. वैशं° उ° (resp. वैशं°) before 28. — After the ref., D1–4. 5 (marg.). 7–9 ins. 473*. — D2 om. from 4. 22. 28 up to 4. 23. 22. — a) G1. 3 पंचाधिकशत. B4 D4. 6. 10 T G M1. 4 तत्र; Dn2 D11. 12 यच्च; D5 तत्तु; D8 हत्वा; D3 m M5 तेषां; M2 चैव (for तच्च). — b) B2. 4 S तेन (M2 तत्तु) (for तत्र). D4 निहतं तत्पतन्महीं; D8 वृक्षेण स महाभुजः (m as in text). — c) D8 जगाम नगरं भूयः (m as in text). — d) K चक्रे; D1. 3. 4. 7. 8 m.

C. 4. 826
B. 4. 23. 32
K. 4. 27. 61

महावनमिव छिन्नं शिश्ये विगलितद्रुमम् ॥ २८
एवं ते निहता राजञ्शतं पञ्च च कीचकाः ।
स च सेनापतिः पूर्वमित्येतत्सूतषट्शतम् ॥ २९
तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च संगताः ।
विस्मयं परमं गत्वा नोचुः किंचन भारत ॥ ३

इति श्रीमहाभारते विराटपर्वणि द्वाविंशोऽध्यायः ॥ २२

## २३

वैशंपायन उवाच ।
ते दृष्ट्वा निहतान्सूतान्राज्ञे गत्वा न्यवेदयन् ।
गन्धर्वैर्निहता राजन्सूतपुत्राः परःशताः ॥ १
यथा वज्रेण वै दीर्णं पर्वतस्य महच्छिरः ।
विनिकीर्णं प्रदृश्येत तथा सूता महीतले ॥ २
सैरन्ध्री च विमुक्तासौ पुनरायाति ते गृहम् ।
सर्वं संशयितं राजन्नगरं ते भविष्यति ॥ ३
तथारूपा हि सैरन्ध्री गन्धर्वाश्च महाबलाः ।

9 शेते; Ca शिश्ये (as in text). K1 विचलित°; K2 विवसित°. D8 सिंहो हत्वा मृगानिव.

29 D2 om. 29 (cf. v. l. 28). — b) D4 पंचाधिकीचकाः; S पंचोपकी°. — c) S सूतः (G1 चापि) (for पूर्वम्). — d) G1 पातितः (for इत्येतत्). — After 29, T G ins.:

475* न गन्धर्वभयाच्छेकुर्वक्तुं कीचकबान्धवाः ।
अशक्नुवन्तस्तां तत्र भयादप्यभिवीक्षितुम् ।

T G cont.: M ins. after 29:

476* विराटनगरे चापि सर्वे मात्स्याः समागताः ।
काल्यं पञ्चशतं चैतानपश्यन्सारथीन्हतान् ।
[ (L. 2) G1 चैव; M1–4 सूतान् (for चैतान्). ]

30 D2 om. 30 (cf. v. l. 28). — a) D10 तं (for तत्). D10 निहतं तत्र; T1 तु महाश्चर्यं (for महदाश्चर्यं). — b) S (except M3) नागराः (G1 नागताः; M5 संयुताः) (for संगताः). — After 30ab, M5 ins.:

477* नागराश्च तथा राजन्विस्मयं परमं गताः ।

— c) D4.6 जग्मुर् (for गत्वा). M5 विस्मिताश्च तथा राजन्. — d) G1.3 किंचिच्च (for किंचन). D4 सूतपुत्रैर्हतैस्तथा.

Colophon. Ś1 missing; D2 om. colophon. — *Sub-parvan:* K B1.3–5 Dn D7.8.11.12 T1 M1.2.4 कीचकवध. — *Adhy. name:* B2 D5 G2.3 M3.5 उपकीचकवधः; B5 कीचकवधः; D1.4.9 कीचकभ्रातृवधः; D6.10 कीचकानां वधः. — *Adhy. no.* (figures, words or both): K1 B4 D6.10 22; D5.9 23; S 26 (M2–5 25). — *S'loka no.:* G3 50.

### 23

☞ In Ś1 the whole adhy. is lost on a missing fol. (cf. v. l. 4. 22. 12). D2 om. up to 22 (cf. v. l. 4. 22. 28).

1 After the ref., D7 (marg.) ins.:

478* ततो रजन्यां व्युष्टायामुत्थाय सगणो नृपः ।
कल्ये शतं षडधिकं हताञ्शुश्राव कीचकान् ।

— a) B4 D9 तान् (for ते). D4 अभि° (for नि°). T2 सर्वान् (for सूतान्). — After 1a, T G ins.:

479* भीमसेनेन भारत ।
पौराश्च सहिताः सर्वे.

— b) D1.3.4.10 गत्वा राज्ञे (D3 °ज्ञो) (by transp.). D5 G1 राज्ञो (for राज्ञे). B4 पौरा (for गत्वा). — c) K1 T1 गंधर्वेण हता राजन्. — d) K D8.10 परंतपाः; B8 m महारथाः; B4 Dn D11.12 महाबलाः; B5 परं गताः; D1.3–7.9 परं शताः; T G2.3 M4 (*inf. lin.*) परःशतं; G1 च षट्शतं; M1.5 शतात्परं; M2.3 परं शतं (for परःशताः).

2 a) S भिन्नं (M1.2 छिन्नं) (for दीर्णं). — c) K2 B1.4 D4–6.11.12 T G3 Cc विनिकीर्णाः; Dn D9 व्यतिकीर्णाः; D7 विनिदी(m °की)र्णाः; Cv विनिकीर्णं (as in text). K2 B (except B3) Dn D3–9.11.12 T G प्रदृश्यंते (K2 °त; D3 °तः) (for प्रदृश्येत).

3 a) K2 प्रविमुच्य; S चापि मुक्ता (for च विमुक्ता). B4 D3.8 विनिर्मुक्ता (for विमुक्तासौ). D6.10 S सा (for असौ). — b) K गृहान् (for गृहम्).

4 a) K Dn D1.3.4.8–12 यथारूपा. K Dn D4.6.11.12 G1.3 M5 च (for हि). — b) T G2 बलोत्कटाः

पुंसामिष्टश्च विषयो मैथुनाय न संशयः ॥ ४
यथा सैरन्ध्रिवेषेण न ते राजन्निदं पुरम् ।
विनाशमेति वै क्षिप्रं तथा नीतिर्विधीयताम् ॥ ५
तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः ।
अब्रवीत्क्रियतामेषां सूतानां परमक्रिया ॥ ६
एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
दह्यन्तां कीचकाः शीघ्रं रत्नैर्गन्धैश्च सर्वशः ॥ ७
सुदेष्णां चाब्रवीद्राजा महिषीं जातसाध्वसः ।
सैरन्ध्रीमागतां ब्रूया ममैव वचनादिदम् ॥ ८
गच्छ सैरन्ध्रि भद्रं ते यथाकामं चराबले ।
बिभेति राजा सुश्रोणि गन्धर्वेभ्यः पराभवात् ॥ ९
न हि तामुत्सहे वक्तुं स्वयं गन्धर्वरक्षिताम् ।
स्त्रियस्त्वदोषास्तां वक्तुमतस्त्वां प्रब्रवीम्यहम् ॥ १०
अथ मुक्ता भयात्कृष्णा सूतपुत्रान्निरस्य च ।
मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ ११
त्रासितेव मृगी बाला शार्दूलेन मनस्विनी ।
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ॥ १२
तां दृष्ट्वा पुरुषा राजन्प्राद्रवन्त दिशो दश । C 4. 841. B. 4. 24 13 K 4 28 17

(for महाबलाः).

5 $^{a}$) $K_1$ °वेशेन; B Dn $D_{3-9.11.12}$ $M_{1-3}$ °दोषेण; $D_{10}$ °रूपेण (for °वेषेण). — $^{b}$) S नेदं (for न ते). $D_4$ राज्यं; $G_1$ राष्ट्रं (for राजन्). $D_4$ न ते पुरं; S पुरं तव (for इदं पुरम्). — $^{c}$) $D_6$ एष्यति (for एति वै). $D_8$ transp. वै and क्षिप्रं. $D_{10}$ शीघ्रं (for क्षिप्रं). — $^{d}$) $G_{1.3}$ M साधु (for नीतिर्). — After 5, T $G_2$ ins.:

480* सर्वाङ्गसौष्ठवयुतां रूपलावण्यशालिनीम् ।
पश्यतामनिमेषेण चक्षुषा वनितां शुभाम् ।
मनसश्चक्षुषश्चैव प्रतिबन्धो न विद्यते ।
तस्मात्तां यः पुमान्दृष्ट्वा रूपेणाप्रतिमां भुवि ।
गच्छेत्कामवशं मूढः गन्धर्वैः स निहन्यते । [5]
निष्कासयैनां भवनात्पुराच्चैव विशेषतः ।
कामः प्रविश्य सैरन्ध्रीं पुरं नाशयते ध्रुवम् ।
[ (L. 7) $T_2$ कालः (for कामः). ]

6 Before 6, $G_{1.3}$ $M_{2-5}$ ins. वैशं°. — $^{a}$) $G_{1.3}$ $M_5$ तु (for तद्). — $^{b}$) $G_1$ विराटोप्याकुलेंद्रियः. — $^{c}$) $D_{1.3}$ परमां; $D_8$ कृपया (for क्रियताम्). $D_8$ $M_5$ तेषां (for एषां). — $^{d}$) **Ca** मृतानां (for सूतानां). $B_{1.2.4}$ $D_{5.6}$ $M_4$ **Ca.c** चरम($D_6$ °मा)क्रिया; Dn $D_{4.8.9.11.12}$ परमा ($D_8$ °माः) क्रिया ($D_8$ °याः); $D_{1.3}$ क्रियतां क्रिया; $D_{10}$ परिसत्क्रिया; T G अ($G_{1.3}$ चा)परक्रिया.

7 $^{a}$) $B_3$ अपि (for एव). $G_1$ सर्वेषु; $M_4$ (*inf. lin.*) ते देशे (for ते सर्वे). — $^{c}$) $B_2$ S सर्वे (for शीघ्रं). — $^{d}$) K माल्यैर्गंध°; $B_3$ घृतैर्गंधै°; $D_{1.3}$ एधैर्गंधै°; $D_4$ वस्त्रैर्गंधै°; $D_5$ गंधैरर्घ्यै°; S सर्वगंधै°. — After 7, T $G_2$ ins.:

481* एकस्मिन्नेव तान्सर्वे सुसमिद्धे हुताशने ।
अदहन्कीचकान्सर्वान्संस्कारैश्चैव सर्वशः ।

8 $^{a}$) B (except $B_4$) Dn $D_{7.8.11.12}$ $T_2$ om. च. — $^{b}$) T $G_2$ $M_{1.3.5}$ °संभ्रमः; $M_2$ °साध्वसां. — $^{c}$) $D_{10}$ ब्रूहि (for ब्रूया). — $^{d}$) $D_3$ वचनादिकं. S इह (for इदम्).

9 $^{b}$) $B_{1.4}$ Dn $D_{3.10-12}$ वरानने; $G_{1.3}$ M चराधुना (for चराबले). **Cc** cites अबले. — $^{c}$) $D_{1.3.4}$ $M_{1.2}$ transp. बिभेति and राजा. $B_4$ $D_{10}$ S सैरंध्रि (for सुश्रोणि). — $^{d}$) $Dn_1$ $D_3$ पराभवन्; $D_8$ पराक्रमात्; $G_{1.3}$ $M_3$ पराभवं.

10 $^{a}$) $D_{1.3}$ च (for हि). N ($Ś_1$ missing; $D_2$ om.) त्वाम्; **Cv** त्वा (for ताम्). ❀**Cn**: हित्वाम् हातुं योग्यां।❀ $D_{1.3.5.6.10}$ उत्सहेद्. $B_4$ न त्वामुत्सहते वक्तुं. — $^{b}$) $D_{1.3.4}$ °शंकितः (for °रक्षिताम्). — $^{c}$) B Dn $D_{4.11.12}$ **Cs** स्त्रियास्. $K_2$ B Dn $D_{1.3.5-9.11.12}$ **Cs** त्वदोषः (cf. **Cv**). K $Dn_1$ $D_{5-7.9}$ $M_4$ त्वां; $D_{1.3.8.10}$ तद् (for तां). $D_4$ त्वदोषतो (for त्वदोषास्तां). $M_5$ स एष दोषस्तां वक्तु.

11 Before 11, all MSS. ($Ś_1$ missing; $D_2$ om.) ins. वैशं°. — $^{a}$) $B_2$ corrupt. $G_1$ अभि- (for अथ). $M_{1.2}$ transp. मुक्ता and कृष्णा. $D_{3.4}$ भयं (for भयात्). — $^{b}$) T G $M_5$ तु (for च). $D_4$ सूतपुत्रकृताद्भयात्. — $^{c}$) $D_3$ रक्षिता; $D_4$ मोचिता (for मोक्षिता).

12 $^{a}$) $D_3$ शंकिता (for त्रासिता). — $^{b}$) $D_4$ तप° (for मन°). — $^{c}$) S सा तु गात्राणि वासश्च. — $^{d}$) $D_8$ च (for सा). S प्रक्षाल्य प्रविवेश ह.

13 $^{a}$) $D_{1.3.5}$ m दूरात् (for राजन्). — $^{b}$) $D_8$ T G $M_{1.2}$ प्राद्रवंति. $D_{1.3.4.8}$ दिशः (for दश). — $^{c}$) $B_3$ $D_{10}$ भयात्रस्ताः. $D_6$ गंधर्वभयवित्रस्ताः; T $G_2$ गंधर्वेभ्यश्च ते त्रस्ताः. — $^{d}$) K $B_2$ $Dn_2$ $D_{4.7}$(m as in text)$_{.8.11.12}$ दृष्ट्वा; $B_4$ $T_2$ $G_2$ $M_4$ दृष्टिं (for दृष्टीर्). $D_{1.3}$ केचिन्नेत्राण्यमीलयन्. — After 13, $T_1$ ins.:

482* प्रदुद्रुवुश्चाप्यपरे तथा जना
हस्तैश्च चक्षूंषि पिधाय मोहिताः ।
मा पश्यत स्मेति च तां ब्रुवन्त-

15

C. 4. 641 B. 4. 24. 13 K. 4. 28. 17

गन्धर्वाणां भयत्रस्ताः केचिद्दृष्टीर्न्यमीलयन् ॥ १३

ततो महानसद्वारि भीमसेनमवस्थितम् ।
ददर्श राजन्पाञ्चाली यथा मत्तं महाद्विपम् ॥ १४

तं विस्मयन्ती शनकैः संज्ञाभिरिदमब्रवीत् ।
गन्धर्वराजाय नमो येनास्मि परिमोचिता ॥ १५

भीमसेन उवाच ।

ये यस्या विचरन्तीह पुरुषा वशवर्तिनः ।
तस्यास्ते वचनं श्रुत्वा अनृणा विचरन्त्युत ॥ १६

वैशंपायन उवाच ।

ततः सा नर्तनागारे धनंजयमपश्यत ।
राज्ञः कन्या विराटस्य नर्तयानं महाभुजम् ॥ १७

ततस्ता नर्तनागाराद्विनिष्क्रम्य सहार्जुनाः
कन्या ददृशुरायान्तीं कृष्णां क्लिष्टामनागसम् ॥ १८

कन्या ऊचुः ।

दिष्ट्या सैरन्ध्रि मुक्तासि दिष्ट्यासि पुनरागता ।
दिष्ट्या विनिहताः सूता ये त्वां क्लिश्यन्त्यनागसम् ॥ १९

बृहन्नडोवाच ।

कथं सैरन्ध्रि मुक्तासि कथं पापाश्च ते हताः ।
इच्छामि वै तव श्रोतुं सर्वमेव यथातथम् ॥ २०

सैरन्ध्र्युवाच ।

बृहन्नडे किं नु तव सैरन्ध्र्या कार्यमद्य वै ।
या त्वं वससि कल्याणि सदा कन्यापुरे सुखम् ॥ २१

न हि दुःखं समाप्नोषि सैरन्ध्री यदुपाश्नुते ।
तेन मां दुःखितामेवं पृच्छसे प्रहसन्निव ॥ २२

---

स्तथा जनाश्चुक्रुशुरार्तरूपाः ।
तामद्य यः पश्यति रूपशालिनीं
शयीत भग्नोऽत्र यथैव कीचकाः ।
इति ब्रुवन्तो भयवेगचेतना
भयेन गन्धर्वगतेन मोहिताः ।

14 $^{a}$) $D_4$ $T_1$ G $M_{3.5}$ °द्वारे (for °द्वारि). — $^{d}$) K वाशि($K_2$ °सि)तेव (for यथा मत्तं). $B_1$ इव द्विपं; $D_8$ T $G_2$ महागजं.

15 $Dn_1$ om. 15–18$^{ab}$. — $^{a}$) S सा($T_1$ $G_2$ सो)पहासं तु श°. — $^{b}$) $D_{1.3}$ इदं वचनमब्रवीत्; $M_{1.2}$ संज्ञया चे($M_2$ संज्ञातुरि)दमब्रवीत्. $Ca.c$ संज्ञाभिर् (as in text). — $^{c}$) $D_6$ T G $M_4$ नमो गंधर्वराजाय. — $^{d}$) K बत मोचिता; $B_{1-3.5}$ $D_{5.6.10}$ $T_2$ $G_1$ M परिमोक्षिता; $B_4$ $D_4$ $T_1$ $G_2$ परिरक्षिता. — After 15, S ins.:

483* कीचकेभ्यो विनिर्दोषामनाथां वसतीं गृहे ।
यो मां रक्षति संत्रस्तां गन्धर्वाय नमोऽस्तु ते ।

[ (L. 1) $G_{1.3}$ $M_{3.4}$ अपि निर्दोषां; $M_{1.5}$ हि नि° (for विनि°). — (L. 2) $T_2$ महात्मने; $G_3$ नमो नमः (for नमोऽस्तु ते). ]

16 $Dn_1$ om. 16 (cf. v. l. 15). — $^{a}$) K $B_{1-3.5}$ $Dn_2$ $D_{1.3-8.11.12}$ $Cn.r.s$ पुरा; $B_4$ $D_{10}$ पुरे; $D_9$ पुरीं (for यस्या). $B_2$ $D_{5.9}$ $Cn.s$ विहरंति; $G_{1.3}$ वै चरंति; Cr as in text. — $^{b}$) $M_5$ Cc गंधर्वा (for पुरुषा). — After 16$^{ab}$, $T_1$ G ins.:

484* तेषां वशगता नित्यं विचर त्वं यथेष्टतः ।

— $^{c}$) K अस्याः; $D_5$ यस्याः (for तस्याः). $M_1$ transp. तस्याः and ते. $M_{2.3}$ तत् (for ते). — $^{d}$) B $D_{11.12}$ S ह्यनृणा; $D_4$ जनाद्य; $D_{6.10}$ त्वनृणा. $B_{1-3.5}$ $Dn_2$ $D_{11.12}$ $Cn.s$ विहरंतु; $B_4$ $T_1$ विचरंतु; $D_{7.9}$ $G_2$ विहरंति. B $Dn_2$ $D_{11.12}$ अतः ($B_4$ इतः); $T_1$ इह; $G_2$ ह (for उत).

17 $Dn_1$ om. 17 (cf. v. l. 15). — After the ref., ins.:

485* तयोस्तद्वचनं श्रुत्वा जज्ञिरे नेतरे जनाः ।
ततः पाञ्चालराजस्य सुता चापि जगाम ह ।

— $^{c}$) $D_{10}$ $G_{1.3}$ $M_{1.2}$ कन्यां. — $^{d}$) $K_2$ $B_2$ S नर्तयंतं. $D_{1.3}$ मनस्विनं (for महा°).

18 $Dn_1$ om. 18$^{ab}$ (cf. v. l. 15). — $^{a}$) $K_2$ तं; $D_{1.3}$ तां; $G_{1.3}$ $M_4$ सा; $G_2$ स (for ताः). — $^{c}$) $D_8$ गत्वा (for कन्याः). $D_6$ transp. कन्याः and आयान्तीं. — $^{d}$) $B_2$ om. 18$^{d}$. $Dn_1$ (by transp.) क्लिष्टां कृष्णाम्; $D_{10}$ तां तु कृष्णाम्; $G_1$ क्लिश्यमानाम्. $Dn_1$ $D_{1.3}$ अनागसां; S (except $M_{1.2}$) अनागसीं.

19 $^{b}$) $D_{1.3}$ त्वं (for असि). $G_{1.3}$ दिष्ट्या पुनरिहागता. — $^{c}$) $D_6$ M च (for वि-). — $^{d}$) $B_2$ om. 19$^{d}$. $D_{10}$ यत् (for ये). S अनागसीं.

20 A few MSS. read (with usual variations) बृहन्नला, °न्नल, or °न्नर (for °न्नडा). — $^{a}$) $K_1$ (by transp.) मुक्तासि सैरंध्रि. — $^{b}$) $Dn_2$ $D_{11.12}$ सूताः (for पापाः). $D_{10}$ दिष्ट्यासि पुनरागता (=19$^{b}$). — $^{c}$) $K_2$ चैव तं; S ते कथां (for वै तव). — $^{d}$) K सम्यगेव; $B_{1.3.5}$ सत्यमेतद्; $B_4$ $D_{1.4-6}$ सर्वमेतद्; $D_3$ एतदेव; S कथयस्व. $D_4$ यथा तथा; $T_2$ $G_2$ यथाक्रमं.

21 $^{a}$) Dn $D_{1.3.7-9}$ तु (for नु). $Dn_1$ तया (for तव).

22 $^{a}$) $D_4$ नैव; $D_8$ न त्वं (for न हि). $K_1$ $B_2$ $D_{10}$

बृहन्नडोवाच ।
बृहन्नडापि कल्याणि दुःखमाप्नोत्यनुत्तमम् ।
तिर्यग्योनिगता बाले न चैनामवबुध्यसे ॥ २३

वैशंपायन उवाच ।
ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत् ।
प्रविवेश सुदेष्णायाः समीपमपलायिनी ॥ २४
तामब्रवीद्राजपुत्री विराटवचनादिदम् ।
सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम् ॥ २५
राजा बिभेति भद्रं ते गन्धर्वेभ्यः पराभवात् ।
त्वं चापि तरुणी सुभ्रु रूपेणाप्रतिमा भुवि ॥ २६

सैरन्ध्र्युवाच ।
त्रयोदशाहमात्रं मे राजा क्षमतु भामिनि ।
कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ॥ २७
ततो मां तेऽपनेष्यन्ति करिष्यन्ति च ते प्रियम् ।
ध्रुवं च श्रेयसा राजा योक्ष्यते सह बान्धवैः ॥ २८ C 4 860 B. 4 24 30 K 4. 28. 43

इति श्रीमहाभारते विराटपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥ समाप्तं कीचकवधपर्व ॥

---

समाप्नोति; B4 D3–5 G3 M4 अवाप्नोषि; D5 m. 7 (m as in text). 9 विजानासि; D8 (corrupt) आप्नोति (for समाप्नोषि). S न हि तद्दुःखमाप्नोषि. — After 22ab, T G2 ins.:

486* सुखेन वर्तसे येह न तद्दुःखमवाप्यते ।
[ T2 यैषा (for येह).

— c) M1 केन (for तेन). K2 T2 मा; M2 तां (for मां). K1 Dn1 G3 M2 एव (for एवं). — d) K B2 D4. 6. 8. 10 T2 G2 पृच्छसि. T G2 प्रहसं(G2 °रं)त्यपि (T2 °सि); Cr (om. इव). 8 as in text.

☞ D2 resumes from 23.

23 b) D1. 3 आप्नोमि (for °ति). T1 अनंतरं; T2 G2. 3 M अनंतकं (for अनुत्तमम्). — c) K D2. 5. 8 °गतां (for °गता). T G2 इवेयं; M1. 5 भद्रे; Cap बाले (as in text). ❀Ca: वाले। वा शब्द इवार्थे। आले हे सखि।❀ — d) Dn D9 एताम्; Cr as in text. Crp (Cat.) न चैनां (Ed. wrongly चैना) माव° (for न चैनामव°); cf. Cc, which cites only मा. — After 23, N (Ś1 missing) T1 (om. lines 3–4) ins.:

487* त्वया सहोषिता चास्मि त्वं च सर्वैः सहोषिता ।
क्लिश्यन्त्यां त्वयि सुश्रोणि को नु दुःखं न चिन्तयेत् ।
न तु केनचिदत्यन्तं कस्यचिद्धृदयं क्वचित् ।
वेदितुं शक्यते नूनं तेन मां नावबुध्यसे ।

[ (L. 1) D1. 3 नित्यं; T1 चाहं (for चास्मि). K B2 D2. 5. 7–10 T1 Cv सर्वेष्वदूषिता (K D2. 10 °का); D1. 3 सर्वेषु दूषिका; D4. 6 सर्वेष्व(D6 °षु)दुःखिता. — For line 2, T1 subst.:

488* त्वत्तः कृच्छ्रतरं वासं वसेयमहमङ्गने ।

— (L. 3) D5 m (orig. as in text). 7 (m as in text). 9 subst. for line 3:

489* कस्य वै हृदयं केन वेदितुं परिशक्यते ।

— (L. 4) K B3 D1–3. 6. 10 अन्येन; B2. 4 D5. 8 भद्रे; D4 तत्र; D7 m अन्यत्र (for नूनं). D5 m. 7. 9 अज्ञानं तव कल्याणि (for prior half). ]

24 G2 om. the ref. — b) G2 सैरंध्री (for द्रौपदी). D1. 3. 4. 6. 10 °वेश्मनि; D8 °संसदि; M4 °वेश्मनः. — c) D1 प्राविशच्च (for प्रविवेश). K सुदोष्णायाः. — d) B Dn D3. 10–12 उपगामिनी; D5 अनुगामिनी; T G2 अनपायिनी (for अपलायिनी). ❀Cv: सुदेष्णासहोदराणां वधादपि न पलायनशीला।❀

25 a) K अवोचत् (for अब्रवीत्). B2 Dn1 D5. 6. 11. 12 T G M5 °पत्नी; D2 °पुत्रीं (for °पुत्री). — b) D2 °नगरात् (for °वचनात्). D1–4 ततः (for इदम्). — Before 25cd, T1 G M4. 5 ins. सुदे(T1 °ष्वे)ष्णा. — c) S (except T2) तत्र (for शीघ्रं). — d) B2 D8 रतिं (for गतिम्).

26 26ab = (var.) 9cd. — a) Dn D11. 12 ते भद्रे; D6 सुश्रोणि; S सैरंध्रि. — b) D8 °क्रमात्; G1. 3 °भवं; M2 °जयात् (for °भवात्). — After 26, B1 Dn2 D2–5. 7–12 ins.:

490* पुंसामिष्टश्च विषयो गन्धर्वाश्चातिकोपनाः ।
[ Cf. 4c and 4b. ]

On the other hand, S ins. after 26:

491* चित्तानि च नृणां शुभ्रे रक्तानि स्पर्शजे सुखे ।
तस्मात्त्वत्तो भयं मह्यं राष्ट्रस्य नगरस्य च ।
गच्छाद्यैव यथेष्टं त्वं नगराद्यत्र रंस्यसे ।
त्वन्निमित्तं शुभे मह्यं सर्वे बन्धुजना हताः ।
नृशंसा खलु ते बुद्धिर्भ्रातॄणां मे कृतो वधः । [5]
तस्माद्गन्धर्वराजेभ्यो भयमद्य प्रवर्तते ।

# २४

C. 4. 861
B. 4. 25. 1
K. 4. 29. 2

वैशंपायन उवाच ।
कीचकस्य तु घातेन सानुजस्य विशां पते ।
अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ॥ १
तस्मिन्पुरे जनपदे संजल्पोऽभूच्च सर्वशः ।
शौर्याद्धि वल्लभो राज्ञो महासत्त्वश्च कीचकः ॥ २
आसीत्प्रहर्ता च नृणां दारामर्शी च दुर्मतिः ।
स हतः खलु पापात्मा गन्धर्वैर्दुष्टपूरुषः ॥ ३
इत्यजल्पन्महाराज परानीकविशातनम् ।

---

यथेष्टं गच्छ सैरन्ध्रि इह स्वस्ति यथा भवेत् ।
वैशंपायनः ।
सुदेष्णावचनं श्रुत्वा सैरन्ध्री चेदमब्रवीत् ।

[ (L. 4) $G_3$ सर्वो बंधुजनो हतः; M (except $M_4$) सर्वं बंधुजनं हतं (for posterior half). — (L. 5) $T_1$ $G_2$ $M_{1.2.5}$ यत्कृतो (for मे कृतो). ]

27 $K_1$ S om. the ref. before 27. — $^{a}$) $D_2$ S तु (for मे). — $^{b}$) $K_1$ क्ष*तु; $B_{1-3.5}$ $Dn_2$ क्षम्यतु; $B_4$ $Dn_1$ $D_{4-7}$ क्षाम्यतु; $T_2$ क्षमिति. $B_{4.5}$ $D_{5.6}$ भाविनि. $D_8$ राजा क्षमितुमर्हति. — $^{c}$) $B_3$ गमि° (for भवि°). — $D_{12}$ (hapl.) om. $27^{d}$–$28^{a}$.

28 $^{a}$) $D_{12}$ om. $28^{a}$ (cf. v. l. 27). B Dn $D_{5.6.10.11}$ उपने°; $D_{1-4}$ S अपने°; (for तेऽपने°). $D_{7-9}$ ततस्ते मां तु ($D_8$ च) नेष्यंति. — $^{b}$) $D_{7.9}$ भविष्यति (for करिष्यन्ति). $B_4$ तव; $D_{4.8}$ च मे (for च ते). — $^{c}$) K तु; $D_{1.8}$ हि (for च). $D_2$ श्रेयसे; $M_5$ तेजसा (for श्रेयसा). — $^{d}$) $K_2$ $D_2$ योज्यते (for योक्ष्यते). S (except $M_{3-5}$) बंधुभिः. — After 28, $D_5$(marg.)$._{7.8}$ (om. line 1) ins.:

492* एवमुक्ताथ कैकेयी नृपायोक्त्वा परामृशत् ।
पूर्णकामा कृता कृष्णा वायुपुत्रेण चावसत् ।;

while S ins.:

493* राज्ञा कृतोपकाराश्च कृतज्ञाश्च सदा शुभे ।
साधवश्च बलोत्सिक्ताः कृतप्रतिकृतेप्सवः ।
अर्थिनी प्रब्रवीम्येषा यद्वा तद्वेति चिन्तय ।
भरस्व तदहर्मात्रं तत्ते श्रेयो भविष्यति ।
वैशंपायनः ।
तस्यास्तद्वचनं श्रुत्वा कैकेयी दुःखमोहिता ।
उवाच द्रौपदीमार्तां भ्रातृव्यसनकर्शिता ।
वस भद्रे यथेष्टं त्वं त्वामहं शरणं गता ।
त्रायस्व मम भर्तारं पुत्रांश्चैव विशेषतः ।

[ (L. 4) $T_2$ $G_2$ द्वादशाहं मां (for तदहर्मात्रं). ]

Colophon. $Ś_1$ missing. *Sub-parvan:* K B Dn $D_{5-7.9-12}$ M कीचकवध; to it K $B_{1-3}$ Dn $D_{5.9-12}$ $M_{2-5}$ add समाप्त. — *Adhy. name:* $D_{1-4.8}$ कीचकसंस्कारः; $G_2$ सुदेष्णाद्रौपदीसंवादः; $M_{2.3}$ सुदेष्णासैरन्ध्रीसंवादः. — *Adhy. no.* (figures, words or both): $K_1$ 13 (erroneously for 23); $B_4$ $D_6$ 23; $D_3$ 25; $D_5$ 24; $D_{10}$ 33; T G $M_1$ 27; $M_{2-4}$ 26. — *S'loka no.:* $D_1$ 30; $G_3$ 31.

## 24

☞ This adhy. is missing in $Ś_1$ (cf. v. l. 4. 22. 12), which is therefore ignored here.

1 Before वैशं° उ°, $D_8$ ins. the gloss:

494* इति पाण्डवनिगूढवाससंवत्सरचरितमभिधाय पाराशर्यः । कीचकवधान्तं यत्र त्रयोदशाहमज्ञा(न)तशेषवासनिवृत्तये । कुरुपतिकार्यानुसंधानाय दूरान्वेषितफलावाप्तये हि । सुयोधनादीनां चारप्रत्याचारमभिधातुमाह ।

— After वैशं°, S ins.:

495* कीचके तु हते राजा विराटः परवीरहा ।
शोकमाहारयत्तीव्रं सामात्यः सपुरोहितः ।

— $^{a}$) $B_2$ $D_{5.7.9}$ Cr निपातेन; $G_{1.3}$ विनाशेन; $M_1$ निघातेन; $M_3$ च घातेन; Crp (Dev.) तु घातेन (as in text). — $^{b}$) $D_5$ $G_1$ सानुगस्य; $G_3$ सजनस्य. — $^{c}$) Cv अत्याहतं; Ca.c.s as in text. $D_{7.9}$ अद्भुतं चिंतयित्वा तु. — $^{d}$) $D_{1.3.7}$ विस्मयंतः; $D_9$ $T_2$ $G_{1.3}$ विस्मयंत.

2 $^{a}$) $B_{2.4}$ जनपदाः; $D_7$(m as in text)$._9$ जानपदाः. — $^{b}$) $B_4$ $D_9$ संजजल्पुश्च; $D_7$ (m as in text) ससंजल्पुश्च; S जजल्पुश्चापि (for सजल्पोऽभूच्च). Ca cites संजल्पः. Dn $D_{1.7}$(m as in text)$._{8.9.11.12}$ T $G_{2.3}$ संघशः; $D_3$ संशयः; $G_1$ संशयं; M संगताः (for सर्वशः). — $^{c}$) $D_{1.3}$ असौ यद् (for शौर्याद्धि). $Dn_2$ $D_{11.12}$ तु; $D_2$ च (for हि). S वीर्यवान्दयितो राज्ञो. Ca cites शौर्यात्, वल्लभः and राज्ञः. — $^{d}$) $B_{3.5}$ $D_{3.5.6}$ °सत्वः स; $D_4$ समवीर्यश्च; $D_8$ °सत्वस्य; T $G_2$ $M_{3-5}$ दर्पोत्सिक्तश्च; $G_1$ वीर्योत्सिक्तश्च; $G_3$ $M_{1.2}$ दर्पोद्रिक्तश्च. — After 2, S ins.:

496* सांपराये परिक्रुष्टो बलवान्दुर्जयो रणे ।

[ $T_2$ सांपरायपरिक्लिष्टो; $G_1$ °येणापकृष्टो; $G_{2.3}$ °ये परिक्लिष्टो; $M_1$ °ये परिक्रोष्टा. ]

3 $^{a}$) K नृणां च; $B_1$ Dn $D_{1-3.8.10-12}$ सैन्यानां; S

देशे देशे मनुष्याश्च कीचकं दुष्प्रधर्षणम् ॥ ४
अथ वै धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः
मृगयित्वा बहून्ग्रामान्राष्ट्राणि नगराणि च ॥ ५
संविधाय यथादिष्टं यथादेशप्रदर्शनम्
कृतचिन्ता न्यवर्तन्त ते च नागपुरं प्रति ॥ ६
तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजम् ।
द्रोणकर्णकृपैः सार्धं भीष्मेण च महात्मना ॥ ७
संगतं भ्रातृभिश्चापि त्रिगर्तैश्च महारथैः ।
दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ॥ ८
कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा ।
पाण्डवानां मनुष्येन्द्र तस्मिन्महति कानने ॥ ९
निर्जने मृगसंकीर्णे नानाद्रुमलतावृते ।
लताप्रतानबहुले नानागुल्मसमावृते ॥ १०
न च विद्मो गता येन पार्थाः स्युर्दृढविक्रमाः ।
मार्गमाणाः पदन्यासं तेषु तेषु तथा तथा ॥ ११
गिरिकूटेषु तुङ्गेषु नानाजनपदेषु च । C. 4 872 B 4.25.12 K. 4.29.16

शत्रूणां (for च नृणां). D7 (m as in text).9 आसीत्प्रहरतां नृणां (D9 श्रेष्ठः). Ca cites प्रहर्ता. — $^{b}$) K2 दारानर्थो; D7 (m as in text) दारानर्थी; T G2.3 छिद्रदर्शी; G1 भद्रदर्शी; M दारदर्शी; Ca दारा(व)मर्शी. B1.3 D4.6.8.10 M3.4 सु-; D7 (m as in text).9 स; M2 तु (for च). — $^{cd}$) D1.3 दुष्टपौरुषः. S स हतः किल गन्धर्वैः सैरंध्रीकारणान्निशि.

4 $^{a}$) D1-3 महाबाहो; D8 नरा राजन्. — $^{b}$) B2.4 Dn D2.5.7.9-12 °विनाशनं; D6 °कं विशोभनं; D8 °निदेशनं; S कीचकानां महावधं (M1.2 वधं महत्; M3 महान्वधं; M4.5 महद्वधं). — $^{c}$) K D6 °ष्याः स्म; D1-3.10 °ष्याणां; D9 °ष्यास्तु. — $^{d}$) MSS. (mostly) दुःप्र°. S विस्मिताः (M विस्मयात्) कीचके हते.

5 $^{a}$) D1-3 M1.2 ये; D4 T1 G M4.5 ते (for वै). — $^{b}$) D7.9 transp. प्रयुक्ता and ये. D1-3 वै; D4 च (for ये). K1 बहिश्रुताः; K2 बहिष्कृताः; D8 च ते चराः. S °क्ता बहवश्चराः. — $^{c}$) D4.8.10 S देशान् (for ग्रामान्). — $^{d}$) B4 देशांश्च; S (except M3) ग्रामांश्च (for राष्ट्राणि). B1.3.5 D1-3.8-10 विविधानि (for नग°).

6 Dn1 om. 6-7. — $^{a}$) K B1-3.5 D (except D5.7.9; Dn1 om.) T G M1-4 यथा दृष्टं; B4 यथादेशं; M5 यथाज्ञप्तं. — $^{b}$) B4 यथादृष्टं प्रदर्शितं; Dn2 तथादेश°; D7.9 °देशप्रवेशनं; S °देशं प्रदर्शकाः (G3 प्रवर्तकाः). Cc has देशानां निदर्शनं, Cr प्रदेशनं. — $^{c}$) B (except B4) Dn2 D2 m.5-9.11.12 Cc.n कृतकृत्याः; D1.2 कृतचित्ताः. Cr has कृत्यं. S कृतसंकेतनाः (G1.3 °काः) सर्वे. — $^{d}$) K ये च; B (except B4) D5.6.10 चरा; D1-3 ते वै; D4 सर्वे (for ते च). Dn2 D11.12 ते चरा नगरं प्रति; D8 यथा नाम यथाश्रुतं; S न्यवर्तत पुरं (T G2 पुनः) ततः (G1 पुनः). Ca cites नागपुरं. — After 6, S ins.:

497* आगम्य हास्तिनपुरं धार्तराष्ट्रमरिंदमम् ।

7 Dn1 om. 7 (cf. v. l. 6). — $^{a}$) B (except B4) D1.3-5.7.9 च (for तु). — $^{b}$) K कौरवं. — After $7^{ab}$, S ins.:

498* प्रणम्य शिरसा भूमौ वर्धयित्वा जयाशिषा ।
आसीनं सूर्यसंकाशे काञ्चने परमासने ।
उपास्यमानं सचिवैर्मरुद्भिरिव वासवम् ।

T ins. after 7: G2 (om. hapl. $7^{d}$ and the prior half of line 1) ins. after $7^{c}$:

499* विद्वद्भिर्गायकैः सार्धं कविभिः स्तुतिपाठकैः ।
अनेकैरपि राजन्यैः सेवितं सपरिच्छदैः ।

8 $^{a}$) K सार्धं; D1-3 चैव (for चापि). — $^{d}$) B2 D5 (m as in text) इदं वचनमब्रु°.

9. Before 9, K2 B (except B2) D1.2 (marg.).5.6.10-12 ins. चरा ऊचुः; S (except G1) चाराः. — $^{a}$) G1.3 transp. अस्माभिः and यत्नः. Dn2 D11.12 T1 परं (for परः). — $^{b}$) G1.3 अन्वेषणं. Dn1 M4.5 तदा; D4 नृप; G1.3 प्रति (for सदा).

10 $^{a}$) B1.3.5 द्रव्य°; D7.9 व्याघ्र°; S (except T1) व्याल° (for मृग°). — $^{b}$) K1 °लताभृते; B1.3.5 D5.7.9 G1.3 M1 °लतायुते; B4 °गणावृते; Dn D2.11.12 M2-5 °लताकुले; D4 नानामृगलताकुले; T G2 नानाभ्रमरसंकुले. — K (hapl.) om. $10^{cd}$. — $^{c}$) D4 वल्ली°; G1.3 M (except M2) °गहने. Cc cites लताप्रतानं. — $^{d}$) D1-3 °शतावृते; D4 T1 G2 M5 °समाकुले; D5 °तृणावृते; D7.9.10 M2.3 °लतावृते; D8 °समायुते; T2 °लताकुले. Cc cites गुल्मः.

11 $^{a}$) S न च विद्म गतिं तेषां. — $^{b}$) K2 B1-3.5 Dn D5.6.10-12 सु-; D7.9 स्म (for स्युर्). B4 पार्थाः शत्रुनिबर्हणाः; D8 °र्थास्तेमित°; S पांडवानामरिंदम. — $^{d}$) D4 पथि (for the second तथा). S आश्रमेषु वनेषु च.

12 M3 om. $12^{ab}$. — $^{a}$) K transp. -कूटेषु and D4.5 M1 दुर्गेषु; D7 (m as in text).8-10 G1 शृंगेषु; T2 G2 मार्गेषु (for तुङ्गेषु). — K1 D4 om. $12^{cd}$.

C. 4. 872
B. 4. 25. 12
K. 4. 26. 16

जनाकीर्णेषु देशेषु खर्वटेषु पुरेषु च ॥ १२
नरेन्द्र बहुशोऽन्विष्टा नैव विद्मश्च पाण्डवान् ।
अत्यन्तभावं नष्टास्ते भद्रं तुभ्यं नरर्षभ ॥ १३
वर्त्मान्यन्विष्यमाणास्तु रथानां रथसत्तम ।
कंचित्कालं मनुष्येन्द्र सूतानामनुगा वयम् ॥ १४
मृगयित्वा यथान्यायं विदितार्थाः स तत्त्वतः ।
प्राप्ता द्वारवतीं सूता ऋते पार्थैः परंतप ॥ १५
न तत्र पाण्डवा राजन्नापि कृष्णा पतिव्रता
सर्वथा विप्रनष्टास्ते नमस्ते भरतर्षभ ॥ १६
न हि विद्मो गतिं तेषां वासं वापि महात्मनाम्
पाण्डवानां प्रवृत्तिं वा विद्मः कर्मापि वा कृतम्
स नः शाधि मनुष्येन्द्र अत ऊर्ध्वं विशां पते ॥ १७

— $^{c}$) D1.3.10 नाना° ; D5.6 जला° (for जना°). K2 D8 S सर्वेषु ; D10 सत्वेषु (for देशेषु). — $^{d}$) K2 D8 पर्वतेषु ; B1.3.5 D6 Cr.v कर्व° ; B2 कर्क° ; B4 संक° ; Dn D10–12 कटकेषु ; D1.3 कंटके° ; D2 ग्रामेषु च ; S चत्वरेषु (for खर्वटेषु). Cc explains खर्वटं. Cs cites खर्वटः, Ca has कर्वटे कर्वटे. B1 Dn2 D7–9.11.12 परेषु (for पुरेषु).

13 G1 (hapl.) om. 13 (with lines 1–3 of 500*). — $^{a}$) D1–4 राजेंद्र. S (G1 om.) सहसा (for बहुशो). K2 दृष्ट्वा ; T G2 M1–3.5 नष्टा ; G3 M4 नष्टान् (for ऽन्विष्टा). — $^{b}$) K D4 T G2.3 M1.2.5 विद्म. D8 न विद्मः क नु ते गताः. — $^{c}$) K D4 अत्यंत(D4 °ता)भावनष्टास्ते ; B1.4.5 Dn D10–12 अत्यंतं वा विनष्टास्ते (B4 प्रणष्टास्ते ; D10 विनष्टेषु) ; S (G1 om.) अत्यंतनाशनष्टास्ते (T2 °तमेव नष्टास्ते) ; Ca (on st. 16$^{c}$) as in text. ❀ Crp (Dev.) : अतिशयेनान्तभावो मरणं यत्र नाशे तथा नष्टाः ।❀ — $^{d}$) D8 T G2 नराधिप (for नरर्षभ). — S ins. after 13 (G1 om. lines 1–3) :

500* गिरीणां कूटकुञ्जेषु कन्दरान्तरसानुषु ।
नदीप्रस्रवणेष्वेव ह्रदेषु च सरःसु च ।
गह्वरेषु च दुर्गेषु ग्रामेषूपवनेषु च ।
दुर्विज्ञेया गतिस्तेषां मृग्यन्तेऽस्माभिरेव हि ।
गजव्यालसमीपेषु सिंहान्ते शरभान्तरे ।

[ (L. 2) T1 M2 नदीकूलेषु सर्वेषु (for the prior half). — (L. 3) M (except M1) सर्वेषु (for दुर्गेषु). ]

14 $^{a}$) K1 (corrupt) धार्मान्यनिह्यमानास्तु ; K2 धर्मानि निछमानास्तु (sic) ; B1 Dn D1.2.10–12 वर्त्मन्यन्वे(D1 °न्वि)ष्यमाणा वै (D1.2 °णास्तु ; D10 °णाश्च) ; B2–5 D5.6 वार्तामन्विष्य(B3 D5 °न्वेष- ; B5 °न्विष)माणाश्च ; D4.7–9 वर्त्मान्यन्वेष(D4 °ष्य)माणाश्च (D4.8 °स्तु) ; S वर्त्म(G1 M3 पद्मा- ; M5 वर्त्मा)न्यन्विच्छमानास्तु. — $^{b}$) B1 Dn D11.12 रथिनां ; B4 पार्थानां. B (except B4) Dn D4.8.11.12 रथिसत्तम ; D1–3 रथसत्तमाः. — After $14^{ab}$, B1 Dn D11.12 ins. :

501* न हि विद्मो गतिं तेषां वासं हि नरसत्तम ।

— B3 om. $14^{c}$–$16^{d}$. — $^{c}$) B2.4.5 D (except D1.5.6) S (except M1.4.5) किंचित् (for कंचित्). — $^{d}$) Ca मुख्यानां (for सूतानां). S सूतानानुगता वयं.

15 B3 om. 15 (cf. v. l. 14). — $^{b}$) D1.3.8 S च (for स). — $^{c}$) T G1.2 पार्थान् ; G3 प्राप्तान् (for सूता). — $^{d}$) B (B3 om.) D (except D1.3) विना (for ऋते). D1–3 M पार्थान् ; T G सूताः (for पार्थैः). — After 15, T G2 ins. :

502* सन्तीतरे जनपदा ये पार्थान्वेषिभिर्नृप ।
प्रविचितास्ते ह्यस्माभिः पृथिवीमण्डलेऽखिले ।

16 B3 om. 16 (cf. v. l. 14) ; B2 om. $16^{a}$–$17^{d}$. — $^{a}$) B1 Dn D6.10–12 न तत्र कृष्णा राजेंद्र. — $^{b}$) K B5 च (for अपि). B1 Dn D6.10–12 पांडवाश्च (D6 °वा वा) ; D5.7.9 कृष्णा चापि (for नापि कृष्णा). B1 Dn2 D8.10–12 महाव्रताः ; Dn1 D6 महारथाः ; D1–3 G3 M महाव्रता ; G1 परंतप (for पतिव्रता). — After $16^{ab}$, S ins. :

503* नरदेव यथोद्दिष्टं नैव विद्म च पाण्डवान् ।
निर्वृतो भव नष्टास्ते स्वस्थो भव परंतप ।

[ (L. 1) T1 G च ; T2 हि (for एव). M3.4 विद्मः. G1.3 अत्र (for च). ]

— $^{c}$) S एव (for वि-). — $^{d}$) B4 इत्ययस्व ; D6 (corrupt) भद्रं तुभ्यं ; D7.9 भ्रष्टाश्च ; G1 न भीस्ते (for नमस्ते). B1 D7.9 G3 पुरुषर्षभ ; D2 अस्तु नरर्षभ ; G1 पुरुषोत्तम.

17 B2 om. $17^{abcd}$ (cf. v. l. 16). For S see below. — $^{b}$) K1 D4.6.8.9 च (for वा). D1–4 कथंचन (for महा°). — $^{c}$) K D9 न ; B1.5 Dn D5.8.10–12 च (for वा). — $^{d}$) K विद्म. D6 विद्मः कर्माणि वा तथा. — For $17^{abcd}$, S subst. :

504* सर्वा च पृथिवी कृत्स्ना सशैलवनकानना ।
सराष्ट्रनगरग्रामा पत्तनैश्च समन्विता ।
अन्वेषिता च तत्सर्वं न च पश्याम पाण्डवान् ।

[ (L. 1) T राजन् (for कृत्स्ना). — (L. 2) T G2 °ग्राम(G2 °ग्रामा)खेटखर्वटपत्तना. — (L. 3) T G2 मही सर्वा ; G1.3 च सर्वत्र ; M1 च नः सर्वा (for च तत्सर्वं). ]

— $^{e}$) K मतश्चापि ; B2 D5 (m as in text).6 न ते संति ; D10 तन्नः शाधि ; T G2 अत ऊर्ध्वं ; G1 M पुनः शाधि ; G3 अतः शाधि (for स नः शाधि). Ca cites स नः, Cc स and

अन्वेषणे पाण्डवानां भूयः किं करवामहे ।
इमां च नः प्रियामीक्ष वाचं भद्रवतीं शुभाम् ॥ १८
येन त्रिगर्ता निकृता बलेन महता नृप ।
सूतेन राज्ञो मत्स्यस्य कीचकेन महात्मना ॥ १९
स हतः पतितः शेते गन्धर्वैर्निशि भारत ।
अदृश्यमानैर्दुष्टात्मा सह भ्रातृभिरच्युत ॥ २०
प्रियमेतदुपश्रुत्य शत्रूणां तु पराभवम् ।
कृतकृत्यश्च कौरव्य विधत्स्व यदनन्तरम् ॥ २१ C 4. 882 B 4 25 22 K. 4. 29. 37

इति श्रीमहाभारते विराटपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

शाधि. — $^{f}$) T G2 शाधि भूयो यदिच्छसि.

18 $^{b}$) D6.10 करवाम ते; G1 करवाणि ते. — $^{c}$) G1 मे (for नः). K चात्र; B वार्ता; Dn1 D1.3.10–12 वीर; Dn2 D6 वीक्ष्य; D2.7.8 ईक्ष्य; D4 धीर; S ईषद्; Cc rp (Cat.) ईक्ष (as in text). — $^{d}$) B1.4.5 D7m शृणु (for वाचं). Dn1 D1–4.8.10–12 S शृणु (for शुभाम्). B2 भद्रं तुभ्यो नरेश्वर. Cr has वाचं शृणु (for Crp see above).

19 $^{a}$) K B1.2.5 Dn D5.8.11.12 T1 G1.3 निहता; D9.10 विकृता; Ca as in text. D3 (by transp.) त्रिगर्ता निकृता येन. — $^{b}$) S बहुशो (for महता). G1.3 नृपाः. — $^{c}$) S (except G1) मात्स्यस्य. — $^{d}$) K B1.3 D1.3.5m.6.7.9 पुनः पुनः; B2.4.5 D4.5.8.10 M दुरात्मना; Dn D11.12 बलीयसा (for महात्मना).

20 $^{a}$) D1–3.10 M1–3 पातितः. — After 20$^{ab}$, S ins.:

505* स्यालो राज्ञो विराटस्य सेनापतिरुदारधीः ।
सुदेष्णाया महाञ्ज्येष्ठः शूरो वीरो गतव्यथः ।
उत्साहवान्महावीर्यो नीतिमान्बलवानपि ।
युद्धज्ञो रिपुवीरघ्नः सिंहतुल्यपराक्रमः ।
प्रजारक्षणदक्षश्च शत्रुग्रहणशक्तिमान् । [5]
विजितारिर्महायुद्धे प्रचण्डो मानतत्परः ।
नरनारीमनोह्लादी धीरो वाग्मी रणप्रियः ।
पुण्यधर्मार्थकामानां भाजनं मनुजोत्तमः ।

[(L. 1) T1 G1.3 M4 विराटराजस्य (for राज्ञो विरा°). — (L. 5) T1 G1.3 °णशक्तश्च. ]

T G cont.:

506* स हतो निशि गन्धर्वैः स्त्रीनिमित्तं नराधिप ।

T G2 cont.:

507* गन्धर्वाणां च महिषी काचिदस्ति नितम्बिनी ।
सैरन्ध्री नाम तां दृष्ट्वा दुष्टात्माकामयद्बली ।

— M om. 20$^{cd}$, but cf. line 5 of 509*. — $^{c}$) T G अमृष्यमाणो दु°. — $^{d}$) D7.9 अप्युत (for अच्युत). K सहबंधुससोदरः; Dn D11.12 भ्रातृभिः सह सोदरैः; T G निशीथे सह सोदरैः. — After 20$^{cd}$, T G ins.:

508* सुहृदश्चात्र निहता योधाश्च प्रवरा हताः ।

T G cont.· M ins. after 505*:

509* इत्येवं श्रुतमस्माभिर्गन्धर्वैर्निहतो निशि ।
बान्धवैर्बहुभिः सार्धं कीचको निहतोऽभवत् ।
अद्य प्रभृति राजेन्द्र पाण्डवान्वेषणं प्रति ।
चारांस्तान्सर्वतश्चर्तुं प्रेषयेति मतिर्हि नः ।
निहतो निशि गन्धर्वैर्दुष्टात्मा भ्रातृभिः सह ।

[(L. 1) M1.2 सैरंध्रीकारणात् (for गन्धर्वैर्निहतो). — (L. 4) T2 M3 च; M1.2 तु (for तान्). M1 स त्वं; M2 सर्वान् (for चर्तुं). G1 सर्वांश्चारान्विचरितुं (for the prior half). M2 प्रेषिति स्म (for प्रेष°). G1.3 संप्रेषयितुमर्हसि. ]

21 $^{a}$) S प्रियं तदुपसं(M1 तावदुप)श्रुत्य. — $^{b}$) K B4 D8.10 त्वं; B1.3 D7.9 M1 ते; B2.5 Dn D4–6.11.12 M3 च; D1–3 तं (for तु). — After 21$^{ab}$, T G2 ins.:

510* एतावच्छ्रुतमस्माभिर्भद्रं तेऽस्तु नराधिप ।

— $^{c}$) G1.3 M तु (for च). T G2 विचार्य शुद्धया बुद्ध्या.

Colophon missing in Ś1; D7 om. it; D9 reads it in marg. — *Adhy. name:* B1 चारप्रत्यागमः; B2–5 D2–4.6.8 चारप्रत्याचारः; Dn D9m.11.12 चारप्रत्यागमनं; D1.5 चारप्रचारः; D10 चारप्रत्याख्यानं; G2 M3 पाण्डवान्वेषणं; M1 पाण्डवादर्शननिवेदनं. — *Adhy. no.* (figures, words or both): B4 D6.10 24; D5.9m 25; S 28 (M2.4.5 27; M3 broken). — *S'loka no.:* G3 36.

## 25

1 In Ś1, st. 1–10 are missing (cf. v. l. 4. 22. 12). — $^{a}$) D4 अथाब्रवीन्महावीर्यो. — $^{b}$) Dn D11.12 ज्ञात्वा (for श्रुत्वा). D4 राजा दुर्योधनस्तथा. — D7 ins. after 1$^{ab}$: D2(om. lines 2–4).8 ins. after 3$^{ab}$:

511* जानन्नपि महाराज सशल्यनान्तरात्मना ।
कीचकस्य वधं श्रुत्वा न चाकारमदर्शयत् ।

# २५

C. 4. 883 B. 4. 26. 1 K. 4. 30. 1 वैशंपायन उवाच ।

ततो दुर्योधनो राजा श्रुत्वा तेषां वचस्तदा ।
चिरमन्तर्मना भूत्वा प्रत्युवाच सभासदः ॥ १
सुदुःखा खलु कार्याणां गतिर्विज्ञातुमन्ततः ।
तस्मात्सर्वे *उदीक्षध्वं क्व नु स्युः पाण्डवा गताः ॥ २
अल्पावशिष्टं कालस्य गतभूयिष्ठमन्ततः ।
तेषामज्ञातचर्यायामस्मिन्वर्षे त्रयोदशे ॥ ३
अस्य वर्षस्य शेषं चेद्व्यतीयुरिह पाण्डवाः ।
निवृत्तसमयास्ते हि सत्यव्रतपरायणाः ॥ ४
क्षरन्त इव नागेन्द्राः सर्वे आशीविषोपमाः ।
दुःखा भवेयुः संरब्धाः कौरवान्प्रति ते ध्रुवम् ॥ ५
अर्वाक्कालस्य विज्ञाताः कृच्छ्ररूपधराः पुनः ।
प्रविशेयुर्जितक्रोधास्तावदेव पुनर्वनम् ॥ ६
तस्मात्क्षिप्रं बुभुत्सध्वं यथा नोऽत्यन्तमव्ययम् ।
राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरं भवेत् ॥ ७
अथाब्रवीत्ततः कर्णः क्षिप्रं गच्छन्तु भारत ।

केवलं शौर्यमालम्ब्य गतसत्त्व इव श्वसन् ।
भूयः प्रत्यागतप्राणो धृतराष्ट्रात्मजो बली ।
[ (L. 4) D8 °प्राणैः शरीरस्थैश्च प्रेक्षकाः. ]

D8 cont.:

512* श्रुत्वा तेषां वचस्तावच्चिन्तयामास कौरवः ।

— $^{c}$) K विरमंतस्तथा भूत्वा; D4 श्रुत्वा तेषां तदा वाक्यं; T1 G1 चिरं तु तन्मना भू°; G3 चिरं मंदमना भू°. Ca cites चिरमन्तर्मनाः (as in text). — $^{d}$) D4 तानुवाच; S इदमाह (for प्रत्यु°).

2 Ś1 missing. — Before 2, S (except M5) ins. दुर्योधनः. — $^{a}$) S अशक्या (for सुदुःखा). — $^{b}$) D10 वै ज्ञातुं; S ज्ञातुं हि (for विज्ञातुं). S तत्त्वतः (for अन्ततः). Ca cites $2^{ab}$ entirely as in text. — D3.9 om. (hapl.) $2^{c}$–$3^{b}$. — $^{c}$) K B1–3 Dn D5.11.12 T2 Cc निरीक्षध्वं; B4.5 D1.2.4.7m.8 ह्युदीक्षध्वं; D6 -भ्युदीक्षध्वं; D7 विनीक्षध्वं; D10 प्रतीक्षध्वं; T1 G M परीक्षध्वं. — $^{d}$) K1 केन; K2 क्व ते (for क्व नु). B3 Dn D11.12 ते (for स्युः).

3 Ś1 missing; D3.9 om. $3^{ab}$ (cf. v. l. 2). — $^{a}$) S °वशेषः (T2 M1 °वसिष्टः) कालोयं (M °लस्तु). — $^{b}$) K1 गतिभू°; K2 गतिर्भू°; B (except B5) Dn1 D1.2.4.5.10 गतं भू°. Cc.r cite भूयिष्ठं. S गतभूयिष्ठ एव च (M3.4 तु). Ca cites $3^{ab}$ entirely as in text. — After $3^{ab}$, D2 (om. lines 2–4).8 ins. 511* (cf. v. l. 1). — $^{c}$) K D4 °चर्यायाः; B1–3 D6.8 M (except M5) °चर्याणां. — $^{d}$) K M4 तस्मिन्वर्षे; B4 वर्षे ह्यस्मिन्.

4 Ś1 missing. — $^{a}$) D10 तस्य; S अपि (for अस्य). T2 वर्षं ह्यशेषं. Dn2 D9.11.12 च; D1.3.6.8 वै (for चेद्). — $^{b}$) D6 G1 यदि; G3 M3 इति (for इह). — $^{c}$) G1 °मनसस् (for °समयास्). D8 पार्थाः; T G M3 तेपि; M5 ते तु (for ते हि). — $^{d}$) K सत्यधर्म°; D4 सत्यवृत्त°; D8 महात्मानो महाबलाः.

5 Ś1 missing. — $^{a}$) D6 स्फुरंतः; Ca क्षरन्तः (as in text). D8 जीमूताः (for नागेन्द्राः). — $^{b}$) D1–3 सर्पाः (for सर्वे). K2 B4.5 Dn1 D8 T G2 M1.4.5 ह्याशी°; D6.7.9 चाशी° (for आशी°). — $^{c}$) D2.3.10 S (except M4) दुःखाद्; Ca.c.s दुःखाः (as in text). — $^{d}$) T1 कौरव्याः; G2.3 कौरव्यान्. D1–3 क्षणं (for ध्रुवम्). — After 5, S ins.:

513* विज्ञातव्या मनुष्येन्द्रास्तर्कया सुप्रणीतया ।
निपुणैश्चारपुरुषैः प्राज्ञैर्दक्षैः सुसंवृतैः ।
[ (L. 1) Cf. $10^{cd}$. — (L. 2) Cf. $11^{b}$. G1.3 समावृतैः; M2 सुसंमतैः. ]

6 Ś1 missing. — $^{a}$) B1.2 Dn1 D11m सर्वे; B3 अधिक-; B4 यथा; B5 damaged; Dn2 D11.12 अथ; D3 वर्ष-; Ca.c.r अर्वाक् (as in text). B4 Dn2 D11(m as in text).12 काले च; Cr काले तु; Ca.c.rp कालस्य (as in text). Dn1 D11m वेत्तारः (for विज्ञाताः). S अज्ञातसमये ज्ञाताः. — $^{b}$) B4 ततः; Dn1 D11m स्थिताः (for पुनः).

7 Ś1 missing. — $^{a}$) B3 शीघ्रं (for क्षिप्रं) K B Dn D6.8.11.12 बुभूषध्वं; D1–3 हि बुध्यध्वं; D4 प्रभाषध्वं; S वि(G3 प्र)चिन्वध्वं; Ca बुभुत्सध्वं (as in text). D7.9 तस्माद्बुभुत्सुभिः शर्म. — $^{b}$) Dn D11.12 ते; D1 स्वं; S च (for नो). B D5–7.9 प्रतिकर्तव्यमव्ययं (B2.5 D5 °मस्य यत्); D4 यथा जानीत पांडवान्; D8 यथान्योन्यं तदव्ययं. — D4 om. $7^{cd}$. — $^{c}$) K राज्ञो (for राज्यं). D1.3 अद्वंद्वम् (for निर्द्वन्द्वम्). — $^{d}$) T G2 M असपत्नं (for निःस°). D5.7.9 स्थिरं; D10 इदं; Cc.r चिरं (as in text).

8 Ś1 missing. — Before 8, S ins. वैशं°. — T G2 cont.:

अन्ये धूर्ततरा दक्षा निभृताः साधुकारिणः ॥ ८
चरन्तु देशान्संवीताः स्फीताञ्जनपदाकुलान् ।
तत्र गोष्ठीष्वथान्यासु सिद्धप्रव्रजितेषु च ॥ ९
परिचारेषु तीर्थेषु विविधेष्वाकरेषु च ।
विज्ञातव्या मनुष्यैस्तैस्तर्कया सुविनीतया ॥ १०
धैस्तत्परैः सम्यक्तज्ज्ञैर्निपुणसंवृतैः ।
अन्वेष्टव्याश्च निपुणं पाण्डवाश्छन्नवासिनः ॥ ११
नदीकुञ्जेषु तीर्थेषु ग्रामेषु नगरेषु च ।
आश्रमेषु च रम्येषु पर्वतेषु गुहासु च ॥ १२
अथाग्रजानन्तरजः पापभावानुरागिणम् ।
ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत् ॥ १३
एतच्च कर्णो यत्प्राह सर्वमीक्षामहे तथा । C. 4 897 B. 4. 26 15 K. 4. 30 17

514* दुर्योधनेनैवमुक्ते वचनेऽतीव दुःखिना ।
— $^{a}$) D8.10 तु तं (for ततः). K अब्रवीत्तं ततः कर्णः; S ततः कर्णोऽब्रवीद्वाक्यं. — After 8$^{a}$, T G2 ins.:

515* सत्यधर्मार्थसंयुतम् ।
कर्णः ।
एते पुनन गच्छन्तु

— $^{b}$) S अन्ये (for क्षिप्रं). — $^{c}$) B (except B4) D2.4 अन्ये धूर्ताः (D2 °र्तं-) नरा दक्षाः; S शीघ्रवृत्ता नरा योग्याः (G1.3 नरव्याघ्राः). Ca cites नो धूर्ततराः. — $^{d}$) D5 (m as in text) S निपुणाः; Ca.c निभृताः (as in text). S छन्नचारिणः (for साधु°).

9 Ś1 missing. — $^{a}$) T1 G M5 विविधान्; T2 M1–4 सचिवाः; Ca.c.v संवीताः (as in text). — $^{b}$) D4.10 स्फीतान् (D10 °ता) जनपदान्बहून्; T G2 °ञ्जनपदानपि; G3 देशाञ्जन°. Cs.v cite जनपदाकुलान् (as in text). — $^{c}$) Dn2 D11.12 यत्र; Ca.rp (Dev.) तंत्र-; Cr तत्र (as in text). S (except T2) गोष्ठेषु (for गोष्ठीषु). K2 रथ्यासु; B Dn D5.6.8.10–12 रम्यासु; D1.3 अथात्मासु; D7 9 अथान्यत्र; T G M4 (*sup. lin.*) अरण्येषु; M चान्येषु (for अथान्यासु). — $^{d}$) S सिद्धा (G3 °द्ध-) ब्राह्मणरूपिणः. — After 9, B2 ins.:

516* परिचारेषु तीर्थेषु ग्रामेषु नगरेषु च ।
(=10$^{a}$+12$^{b}$).

10 Ś1 missing. K1 om. 10$^{a}$–12$^{b}$; K2 om. 10$^{ab}$. — $^{a}$) B1 S परिवाहेषु; B3 (m as in text).5 D1.3.10 Cr परिवारेषु; D4.8 सरित्तीरेषु; D7 Ca परीवारेषु; Cc.rp (Cat) as in text. Cs explains परिचाराः. — $^{b}$) D4 ग्रामेषु नगरेषु च. — D6 om. 10$^{c}$–12$^{d}$. — T G read 10$^{c}$–11$^{b}$ after 12. — $^{c}$) D1–4.7.9.10 ते (for तैः). K2 विविधे ग्रामनगरे; S °व्या मनुष्येंद्र (T2 M1.2 °ष्येंद्राः; G1 °ष्यास्ते). — $^{d}$) M सुप्रणीतया.

11 Ś1 resumes. K1 D6 om. 11 (cf. v. l. 10). T G read 10$^{c}$–11$^{b}$ after 12. — $^{b}$) D6.7.9 धूर्तैः (for तज्ज्ञैः). K2 निपुणसंहितैः; D1–3 °संश्रितैः; D5.7.9 °माहृतैः; D8 °वीक्षिभिः; D10 °संस्थितैः. D7 कृतज्ञैर्निपुणैः स्वयं; S निपुणैस्तज्ज्ञ(T2 °णैः ज्ञानि-; G1 °णैरर्थ-; G3 °णार्थज्ञ)संमतैः (M1 सत्तमैः). — $^{c}$) K2 Dn2 D11.12 तु निपुणैः (K2 °णं); B1.3 च निपुणाः; B2 च निपुणैः; B5 Dn1 D8.10 सुनिपुणैः (D8.10 °णं); S मनुष्येंद्र (M4 °द्राः). — $^{d}$) T1 G1.3 विविधान् (T1 °धाः) (for पाण्डवाः). K2 B2 S छन्नचारिणः; B4 D5.7.9 छन्नवासिनः.

12 K1 om. 12$^{ab}$; D6 om. 12 (cf. v. l. 10). T G read 10$^{c}$–11$^{b}$ after 12. — $^{ab}$) K2 D8 S नदीकूले- (G2 °पे)षु; B4 D4 °तीरेषु. Ś1 transp. तीर्थेषु and ग्रामेषु. D2 तीरेषु; D5.7.9 ग्रामेषु; M4 व्रजेषु (for तीर्थेषु). D5.7.9 अरण्य-; T G M2.3 व्रजेषु; M1 ह्रदेषु (for ग्रामेषु). K2 गतं प्रश्रवणेषु च; M5 ह्रदेषु च सरस्सु च. — G1 om. 12$^{cd}$. — $^{c}$) B4 सर्वेषु; D1–4 पुण्येषु (for रम्येषु). — $^{d}$) S (G1 om.) वनेषु (for गुहासु).

13 Before 13, S (except T G2) ins. वैशं°. — $^{a}$) K2 अथाग्रजातं तरसा; Cs as in text. — $^{b}$) Ś1 B1.3.5 Dn D11.12 °नुरागवान्; B4 °नुकारिणं; T G भ्रातुः प्रियहिते रतः; M पापभावः सुदुर्मतिः. — $^{c}$) T1 G2 दुर्योधनं (for दुःशासनस्). — $^{d}$) G1.3 भ्रातरं त्विदमब्र°. — After 13, all MSS. (except M) ins.:

517* येषु नः प्रत्ययो राजंश्चारेषु मनुजाधिप ।
[ Before the line, T G ins. दुःशासनः. — T G एष (for येषु). D1.3 च; D2 अस्ति (for नः). K B4 मनुजेश्वर; D1–3.7.9 T G मनुजर्षभ; D4 भरतर्षभ. ]

Ś1 B Dn D2 (marg.).5–7.9–12 cont.:

518* ते यान्तु दत्तदेया वै भूयस्तान्परिमार्गितुम् ।
[ Ś1 पुनस् (for भूयस्). ]

On the other hand D2.4 ins. after 517*:

519* तानहं प्रेषयिष्यामि यतन्तो दृढभक्तयः ।
[ D4 ये तज्ज्ञा (for यतन्तो). ]

D4 cont.: D5 (marg.) ins. after 518*:

520* एतन्मतं महाराज मदीयं प्रियदर्शन ।
[ D5 महाभाग (for °राज), and शुभ° (for प्रिय°). ]

Finally, D8 ins. after 517*:

521* अपरे तत्र गच्छन्तु चराः प्रच्छन्नचारिणः ।

C. 4. 857
B. 4. 25. 15
K. 4. 30. 17
यथोद्दिष्टं चराः सर्वे मृगयन्तु ततस्ततः ।

न तु तेषां गतिर्वासः प्रवृत्तिश्चोपलभ्यते ।
अत्याहितं वा गूढास्ते पारं वोर्मिमतो गताः ॥ १५

व्यालैर्वापि महारण्ये भक्षिताः शूरमानिनः
अथ वा विषमं प्राप्य विनष्टाः शाश्वतीः समाः ॥ १६
तस्मान्मानसमव्यग्रं कृत्वा त्वं कुरुनन्दन ।
कुरु कार्यं यथोत्साहं मन्यसे यन्नराधिप ॥ १७

इति श्रीमहाभारते विराटपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

14 $D_4$ om. $14^{ab}$. — Before 14, M ins. दुःशासनः. — $^{a}$) S यदाह कर्णो राजेंद्र. — $^{b}$) $Ś_1$ $B_1$ ईहामहे; $B_4$ वीक्षा°; Dn $D_{11.12}$ इच्छा°; some MSS. ईक्ष्या°. $B_3$ वयं; $D_2$ यथा (for तथा). S सर्वमेतदवेक्ष्यतां. — After $14^{ab}$, S ins.:

522* घ्राणैः पश्यन्ति पशवो वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ।

[ (L. 1) T $G_2$ वेदैरेव द्विजोत्तमाः ($T_2$ द्विजातयः). ]

— $^{c}$) S यथोक्ताश्चारपुरुषाः. — $^{d}$) $B_{1.3}$ मृगंयतस्; $D_{1-3}$ विचिन्वंतु. Dn $D_{5.6.11.12}$ यतस्ततः; $D_4$ नरास्ततः; S पुनः पुनः. — $^{e}$) K S (except $T_1$) बहवो. $D_{7.9}$ भूयो वै (for भूयांसो). — $^{f}$) $D_{1.2}$ देशोद्देशं; $D_6$ देशे देशे (for देशाद्देशं). $B_4$ $D_{1.3}$ यथा विधिः. S (except $T_1$) देशांश्च नगराणि च. — For S, cf v. l. 16 also.

15 $^{a}$) $D_4$ S न च ($T_1$ नेति); $D_7$ ननु (m न तु). $D_4$ क्वचिद् (for गतिर्). — $^{b}$) $B_5$ $D_{3.5.7.9}$ S वा; $D_2$ नः; $D_8$ न (for च). $B_4$ $D_{1.3.7}$ उपलक्ष्यते; $D_2$ अपि लक्ष्यते. — $T_1$ om. $15^{c}$–$16^{d}$. — $^{c}$) $Ś_1$ B (except $B_2$) Dn $D_{4.6.7.9.11.12}$ अत्यंतं वा निगूढास्ते; $D_3$ °हितं निगूढास्ते; $D_8$ अत्यंतभावं गूढास्ते; S ($T_1$ om.) प्रत्यागताश्च ($M_4$ orig. अत्याहिताश्च; *sup. lin.* °हिता वा) गूढास्ते ($M_4$ *sup. lin.* °ढा वा). — $G_1$ (hapl.) om. $15^{d}$–$16^{b}$, as also line 1 with prior half of line 2 of 524* (cf. v. l. 16). — $^{d}$) $Ś_1$ B (except $B_4$) Dn $D_{1.2.4.7.9.11.12}$ च (for वा). $Ś_1$ ऊर्मिमितो (for °मतो). K परं बोधयतो ($K_2$ °थो) गताः; S ($T_1$ $G_1$ om.) पारमूर्मिगणा इव. $Ca.c.s$ cite ऊर्मिमतः (as in text). — After 15, $D_{7.9}$ ins.:

523* प्रत्याहर्तुं च मूढास्ते पथि नाशमतो गताः ।

16 $T_1$ om. 16; $G_1$ om. $16^{ab}$ (cf. v. l. 15). — $^{a}$) $K_1$ व्याघ्रैः; $Ca$ व्यालैः (as in text). K om. वा. $Ś_1$ $B_{1.3.4}$ Dn $D_{3.11.12}$ च (for वा). — $^{b}$) S (except $M_{1.3}$; $T_1$ $G_1$ om.) निहताः (for भक्षिताः). $D_8$ शूरसंमताः; $M_3$ राक्षसैर्भृशं (for शूर°). — $T_2$ $G_{2.3}$ M ins. after $16^{ab}$: $G_1$ (om. line 1 and the prior half of line 2) ins. after $15^{c}$ (cf. v. l. 15):

524* द्वीपं वा परमं प्राप्ता गिरिदुर्गं वनानि वा ।
हीनदर्पा निराशास्ते भक्षिता वापि राक्षसैः ।

[ (L. 1) $T_2$ G ($G_1$ om.) गिरिदुर्गं($G_3$ °र्गे)वनेष्वपि. — (L. 2) $M_{1-3}$ भक्षिता राक्षसैर्भृशं. ]

— $^{c}$) $D_4$ प्राप्ताः; $Cr$ प्राप्य (as in text). — After 16, S ($T_1$ om.) repeat $14^{c}$–$15^{b}$ with v. l. [ $14^{c}$) S ($T_1$ om.) °दिष्टाश्. $G_2$ च ते (for चराः). — $14^{d}$) S ($T_1$ om.) देशान्गच्छंतु संवृताः. — $14^{e}$) S ($T_1$ om.) भूयांसो (for बहवो). — $15^{ab}$) S ($T_1$ om.) इति (for न तु), and वा (for च). ]

17 $^{a}$) $B_4$ आत्मानम् (for मानसम्). — $^{b}$) $Dn_1$ $D_{10}$ तत्; $D_8$ तु (for त्वं). S कृत्वात्मानं नियम्य च. — $^{c}$) $Ś_1$ $B_{1-3}$ Dn $D_{11.12}$ महो° (for यथो°). — $^{d}$) S यन्मन्यसि नरा°.

Colophon. — *Sub-parvan:* $Ś_1$ गोग्रह. — *Adhy. name:* $K_1$ B $Dn_2$ $D_{3.6.7.9.10-12}$ चार($D_{10}$ om. it)-प्रत्याचारः; $D_{1.2.4.8}$ चारविचारः ($D_8$ cont. समाप्तः); $D_5$ चारप्रचारः; $T_2$ $G_2$ चारप्रेषणं. — *Adhy. no.* (figures, words or both): $K_1$ $B_4$ $D_{6.10}$ 25, $D_5$ 26, T G $M_1$ 29; $M_{2.4.5}$ 28; $M_3$ broken. — *S'loka no.* $G_3$ 22.

## 26

1 $^{a}$) $D_{1.3}$ महाबाहुः; $D_2$ °बाहो; $D_6$ °वीरः; S सभामध्ये. — $^{b}$) $D_5$(by corr.)$._7$(m as in text)$._9$ °दर्शनः; S सूक्ष्मार्थदर्शिवान् ($G_1$ $M_3$ °तत्ववित्; $M_{1.2.4.5}$ °दर्शनः). — $D_{10}$ om. $1^{c}$–$2^{b}$. — $^{d}$) B (except $B_4$) $Dn_2$ $D_{11.12}$ न प्रयांति; $Dn_1$ न प्राप्स्यंति; $D_{1.3}$ प्राप्नुवंति; $D_2$ नाप्नुवंति; $D_6$ न ते यांति.

2 $D_{10}$ om. $2^{ab}$ (cf. v. l. 1). — $^{c}$) $D_{7.9}$ धार्मिकाः (for धर्मज्ञाः). S धर्मज्ञाः सत्यसंधाश्च. — $^{d}$) $B_{3.4}$ $D_5$(by corr.)$._{7.9}$ राजधर्मम्; S युधिष्ठिरम् (for धर्म°). $Dn_2$ $D_{11.12}$ महेष्वासा महाबलाः.

## २६

वैशंपायन उवाच ।

अथाब्रवीन्महावीर्यो द्रोणस्तत्त्वार्थदर्शिवान् ।
न तादृशा विनश्यन्ति नापि यान्ति पराभवम् ॥ १
शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः ।
धर्मज्ञाश्च कृतज्ञाश्च धर्मराजमनुव्रताः ॥ २
नीतिधर्मार्थतत्त्वज्ञं पितृवच्च समाहितम् ।
धर्मे स्थितं सत्यधृतिं ज्येष्ठं ज्येष्ठापचायिनम् ॥ ३
अनुव्रता महात्मानं भ्रातरं भ्रातरो नृप ।
अजातशत्रुं ह्रीमन्तं तं च भ्रातॄननुव्रतम् ॥ ४
तेषां तथा विधेयानां निभृतानां महात्मनाम् ।
किमर्थं नीतिमान्पार्थः श्रेयो नैषां करिष्यति ॥ ५
तस्माद्यत्नात्प्रतीक्षन्ते कालस्योदयमागतम् ।
न हि ते नाशमृच्छेयुरिति पश्याम्यहं धिया ॥ ६
सांप्रतं चैव यत्कार्यं तच्च क्षिप्रमकालिकम् ।
क्रियतां साधु संचिन्त्य वासश्चैषां प्रचिन्त्यताम् ॥ ७
यथावत्पाण्डुपुत्राणां सर्वार्थेषु धृतात्मनाम् ।
दुर्ज्ञेयाः खलु शूरास्ते अपापास्तपसा वृताः ॥ ८
शुद्धात्मा गुणवान्पार्थः सत्यवान्नीतिमाञ्शुचिः ।
तेजोराशिरसंख्येयो गृह्णीयादपि चक्षुषी ॥ ९
विज्ञाय क्रियतां तस्माद्भूयश्च मृगयामहे ।
ब्राह्मणैश्चारकैः सिद्धैर्ये चान्ये तद्विदो जनाः ॥ १० C. 4. 911 B 4. 27. 10 K. 4. 31. 11

इति श्रीमहाभारते विराटपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

3 a) Ś1 नीतितत्वार्थतत्वज्ञं; B (except B3) Dn2 D5.6.8.11.12 T G M4 °तत्वज्ञाः; D7.9 नीतितत्वार्थधर्मज्ञाः. — b) K पितृभक्तं; B4 D6 प्रीतिमंतः; D8 इंद्रियेषु (for पितृवच्च). Cc.r cite पितृवत्. B (except B4) D5–9 T G2 Cr समाहिताः; D4 सदा हितम्; G1.3 सदा नृप (G3 °पम्). Ś1 पितृसेवासमा°. — c) D8 सत्यरतिं; M5 सत्यसंधं. ❀Cc: स्थिरा धृतिर्यस्य ।❀ — d) D11.12 T2 श्रेष्ठं (for ज्येष्ठं). Ś1 D6 Crp ज्येष्ठापचायिनः; K2 ज्येष्ठोपयायिनं; B Dn D2.3.5.7.9–12 Cr ज्येष्ठानुयायिनः (D3 °नं); D4 ज्येष्ठोपचारिणं; T1 श्रेष्ठोप°; T2 G2 ज्येष्ठाभिधायिनः (G2 °नं); G1.3 श्रेष्ठगुणान्वितं; M2 ज्येष्ठोप°.

4 a) B4 S (except G1.3) °त्मानो. — b) Ś1 B3 Dn1 D6 M transp. भ्रातरं and भ्रातरः. B2.4.5 Dn1 D5.10 नृपं; M प्रियं. B1 भ्रातरो नृपसत्तम; T G भ्रातरो भ्रातृवत्सलं. — c) B D5 धीमंतं; Dn D11.12 श्रीमंतं; D7.9 भीमश्च; T G M1–3.5 दुर्धर्षं. M4 °शत्रुर्दुर्धर्षः. — d) Ś1 Dn D8.10–12 सर्वं-; D1–4 तांश्च; D6 ते च; D7.9 तौ च. D6 °व्रतान्; D7.9 °व्रतौ. T G2 स च तान्नातिवर्तते; G1.3 स तानपि तथानुजान्; M स (M5 न) चापि हि तथानुजान् (M4 °नुजाः).

5 c) S प्राज्ञो (for पार्थः). — d) K2 D2.4 तेषां (for नैषां). D1–3 विधास्यति (for करि°). S न श्रेयो (T G2 निःश्रेयो; G1.3 यच्छ्रेयो) न करि°.

6 a) K यस्मात्; D10 पुनः; T G यत्ताः (for यत्नात्). Ś1 D1–4 G1.3 प्रतीक्षध्वं; K °क्षंतः; T G2 M परीक्षध्वं. — b) S यावन्न (T G1.2 न तावत्; G3 न यावत्) समयो गतः. — c) Ś1 अर्छैरन्; K अभ्येरन्; B4 अर्हंति; Dn1 D2 इच्छेयुः; D1.3 अर्हेयुः; D4 एष्यंति; D5 Cv ऋच्छेरन्. D6.7.9 न ते नाशं गताः शूराः; S न ते विनाशमृच्छेयुः (M1.2.4 °मिच्छेयुः). — d) B3 इति पश्यामहे वयं; S इति मे नैष्ठिकी मतिः.

7 a) S चिंत्यतां; Ca.v सांप्रतं (as in text). M1.2.4 कृत्यं; M3 क्षिप्रं (for कार्यं). — b) D2 अत्र; D4 भवेत् (for तच्च). G1 अलिंगकं; M विचार्यं वै (M2 विधीयतां); all comm. अका° (as in text). — After $7^{ab}$, M2 reads line 2 of 526* for the first time, repeating it in its proper place. — c) T G चैव (for साधु). D7.9 यन्नित्यं; S निश्चित्य (for संचिन्त्य). — d) D6.7.9 G1 M वि- (for प्र-). — After 7, B5 (irrelevantly) ins.:

525* तथाभिवादिनं मत्स्यं कौरवेयाः पृथक्पृथक् ।
ऊचुः प्राञ्जलयः सर्वे युधिष्ठिरपुरोगमाः ।
प्रतिनन्दाम ते वाक्यं सर्व एव विशां पते ।

8 a) S यथा च (for यथावत्). — b) S हितात्मनां; Cap.rp (Dev.) दृढा°; Ca.r.v धृता° (as in text).

## २७

C. 4. 912
B. 4. 28. 1
K. 4. 31. 13

वैशंपायन उवाच ।
ततः शांतनवो भीष्मो भरतानां पितामहः ।
श्रुतवान्देशकालज्ञस्तत्त्वज्ञः सर्वधर्मवित् ॥ १
आचार्यवाक्योपरमे तद्वाक्यमभिसंदधत् ।
हितार्थं स उवाचेमां भारतीं भारतान्प्रति ॥ २
समासक्तां धर्मज्ञे धर्मसंश्रिताम् ।
असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा ।
भीष्मः समवदत्तत्र गिरं साधुभिरर्चिताम् ॥ ३
यथैष ब्राह्मणः प्राह द्रोणः सर्वार्थतत्त्ववित् ।
सर्वलक्षणसंपन्ना नाशं नार्हन्ति पाण्डवाः ॥ ४
श्रुतवृत्तोपसंपन्नाः साधुव्रतसमन्विताः ।
वृद्धानुशासने मग्नाः सत्यव्रतपरायणाः ॥ ५

— After $8^{ab}$, S ins.:

526* प्रवृत्तिरुपलभ्येत तथा नीतिर्विधीयताम् ।
सर्वोपायैर्यतस्व त्वं यथा पश्यसि पाण्डवान् ।

— $^{c}$) D1.2 transp शूराः and ते. — $^{d}$) B1–3.5 Dn D9.11 12 दुरापास्; B4 D6 निष्पापास्; D1 तेपापास्; D2 ते पार्थास्; D5 त्वपापास्; D7 (m as in text) स्वपापास्; D10 ह्यपापास्. S रक्ष्या नित्यं च (M1.2 हि) दैवतैः.

9 $^{a}$) B2 D5.7.9 बुद्धिमान्; B4 D4 श्रद्धावान्; D6 शुद्धिमान् (for शुद्धात्मा). S (except T2) ज्ञान° (for गुण°). D1.3 शूरः (for पार्थः). — $^{b}$) D8 सत्यवाक्; G1.3 सत्यात्मा. — $^{c}$) D7 (m as in text) तेजोगतिर्. D7.9 असंज्ञेयो (D7m इवासंख्यो). Cf Ca असंख्येयतेजोरश्मित्वात्. S °राशिभिरापूर्णो. — $^{d}$) B1.3.5 D5 Cn.ap.rp (Di.) चक्षुषा; Ca.r.v चक्षुषी (as in text) D1.3 निगृह्णीयाद्धि चक्षुषी; T1 (first time) G1.3 यथा लोके दिवाकरः; T (T1 second time) G2 M दहेदपि च चक्षुषा.

10 $^{a}$) D4 यत्नो (for तस्माद्). B3 तस्माद्विज्ञायतां तात; S तस्माद्यत्नश्च क्रियतां. — $^{b}$) D1–3 अपि; D6.7.9 वा (for च). D7.9 मृग्यतां बलैः (for मृग°). — $^{c}$) Ś1 K B2 D5 चारणैः; B4 चापरैः; D7.9 च चरैः. M °णैश्चारपुरुषैः. — $^{d}$) D7–9 तद्विधा. T G तापसैर्निपुणैरपि; M सिद्धैस्तापसनैपुणैः. — After 10, T1 repeats 4. 25. 11 (v. l. निर्भीतैस्तज्ज्ञसंमतैः for $11^{b}$).

Colophon om. in D7 S. D9 reads it in marg. — *Adhy. name:* K D3.4 चारप्रत्याचारः; B1.3 Dn1 D5 6.8.9m 11.12 द्रोणवाक्यं; B2.4.5 Dn2 D10 चारप्रत्याचारे द्रोणवाक्यं; D1.2 चारविचारः. — *Adhy. no.* (figures, words or both): Ś1 K1 B4 D6.10 26; Dn2 D5.9m 27.

## 27

1 $^{a}$) S (except M4) धीमान् (for भीष्मो). — $^{b}$) B4 D1.3.4 T1 G भारतानां; D5 कौरवाणां. D4 धुरंधरः (for पिता°). — $^{d}$) S नीतिमांश्च महामतिः.

2 $^{a}$) S तस्मिन्नुपरते वाक्ये. — $^{b}$) B2 D10 अभ्यनंदत; D2 अभिसंदधेत्; D4 अभिपूज्य च; D5m.7.9 °संवदन् (D7m अभिनंदयन्); Ca.c.s.v as in text. S आचार्यस्य महात्मनः. — $^{c}$) K कृतार्थं. Ś1 B (except B4) Dn D3.6.11.12 समुवाच (for स उ°). Cn cites उवाच. B Dn D11.12 एनां; Cr इमां (as in text). D5m.7 (m as in text) हितार्थमाहार्थवतीं; S अनंतरमुवाचेदं. — $^{d}$) Dn D3.5.8.9.11.12 भरतान् (for भारतान्). S वाक्यं हेत्वर्थदर्शनं (T2 G2 °र्शिनं).

3 $^{a}$) B4 Dn2 D10 G1.2 M समायुक्तां (G1 °क्तो); Ca °सक्तां (as in text). — $^{b}$) K1 धर्ममाश्रितां; B1.3 °माश्रिताः; B2 °संश्रिताः; Dn D11.12 °संवृतां; D1–3 T G M2.3.5 °संहितां; D4 °संस्थितिं; D6 °संभृतां; M1.4 °संयुतां. B4 भीष्मः सुधर्मसंश्रितां. — After $3^{ab}$, S ins.:

527* पाण्डवे नित्यमव्यग्रां गिरं भीष्मः समाददे ।

— $^{c}$) B4 असत्ये; D8 असतां. — $^{d}$) B4 सत्यं (for सतां). G3 चानुमतां. — $^{e}$) Cn समं वदत्; S त्वभ्यवदत् (for सम°). Ś1 क्षत्रं; K1 क्षत्तां; D1.2.8.10 क्षिप्रं (for तत्र).

4 Before 4, S ins. भीष्मः. — $^{a}$) Ś1 K2 D4.5.7.9.10 यथैव; B1.2.5 Dn यश्चैष; B4 यथेह; S यथा नो (M2.5 °थायं). B2 भगवान् (for ब्राह्मणः). S अवादीत् (for प्राह). — $^{b}$) Ś1 D10 °धर्म° (for °तत्त्व°). S आचार्यः सर्वधर्मवित्. — After $4^{ab}$, B4 ins.:

528* तद्वाक्यमभिनन्दामि न मेऽस्त्यत्र विचारणा ।;

while D2 (marg.) ins.:

529* निःसंशयं तथैवैतद्ब्रूयश्चैनां विबोधत ।

T G1.3 transp. $4^{cd}$ and $5^{ab}$. — $^{d}$) B1.3.4 Dn D4.7.9.11.12 T G3 साधुव्रत(T G3 °वृत्त)समन्विताः (= $5^{b}$); G1 साधुवृत्तमनुव्रताः; G2 न नाशं यांति पांडवाः; M नाशं नायांति पांडवाः. — After 4, Dn1 ins. 530* (cf. v. l. 6).

5 T G1.3 transp. $4^{cd}$ and $5^{ab}$; Dn1 om. $5^{a}$–$6^{b}$; D4

समयं समयज्ञास्ते पालयन्तः शुचिव्रताः ।
नावसीदितुमर्हन्ति उद्वहन्तः सतां धुरम् ॥ ६
धर्मतश्चैव गुप्तास्ते स्ववीर्येण च पाण्डवाः ।
न नाशमधिगच्छेयुरिति मे धीयते मतिः ॥ ७
तत्र बुद्धिं प्रणेष्यामि पाण्डवान्प्रति भारत
न तु नीतिः सुनीतस्य शक्यतेऽन्वेषितुं परैः ॥ ८
यत्तु शक्यमिहास्माभिस्तान्वै संचिन्त्य पाण्डवान् ।
बुद्ध्या प्रवक्तुं न द्रोहात्प्रवक्ष्यामि निबोध तत् ॥ ९
सा त्वियं साधु वक्तव्या न त्वनीतिः कथंचन ।
वृद्धानुशासने तात तिष्ठतः सत्यशीलिनः ॥ १०
अवश्यं त्विह धीरेण सतां मध्ये विवक्षता ।
यथामति विवक्तव्यं सर्वशो धर्मलिप्सया ॥ ११
तत्र नाहं तथा मन्ये यथायमितरो जनः ।
पुरे जनपदे वापि यत्र राजा युधिष्ठिरः ॥ १२

C 4 928
B 4 28. 15
K 4 31 33

om. $5^{ab}$. — $^{a}$) K$_2$ B$_{3.5}$ D$_{7.9}$ G$_{1.3}$ श्रुतव्रतोपसंपन्नाः; B$_{1.2}$ Dn$_2$ D$_{11.12}$ श्रुतव्रतोपपन्नाश्च; B$_4$ श्रुतवृत्तो सुसंपन्नाः (sic); G$_2$ सर्वलक्षणसं° (= $4^{c}$). — $^{b}$) B$_{1.3.4}$ Dn$_2$ D$_{11.12}$ नानाश्रुति(B$_4$ °त)समन्विताः; B$_{2.5}$ D$_{7.9}$ नानाश्रुतिसमाहिताः; D$_8$ G$_2$ M साधुवृत्त°; T G$_{1.3}$ नाशं नायांति पांडवाः. Cn cites नानाश्रुतिः. — $^{c}$) B$_{1-3.5}$ D$_{1.2}$ M$_4$ युक्ताः; B$_4$ Dn$_2$ D$_{5-7.9-12}$ लग्नाः; D$_{3.8}$ सक्ताः; T G M$_{1-3.5}$ यत्ताः (for मग्नाः). D$_4$ °शासनरताः. — $^{d}$) D$_4$ S °धर्म° (for °व्रत°).

6 Dn$_1$ om. $6^{ab}$ (cf. v. l. 5). — $^{b}$) D$_4$ पारयंति; T G$_2$ पालयंति. S (except G$_{1.3}$) शुभव्रताः. — K$_2$ B Dn$_2$ D$_2$(marg. *sec. m.*).$_{5-7.10-12}$ ins. after $6^{ab}$: Dn$_1$ (which om. 5–$6^{ab}$), after 4: D$_3$, after $7^{ab}$:

530* क्षत्रधर्मरता नित्यं केशवानुगताः सदा ।
प्रवीरपुरुषास्ते वै महात्मानो महाबलाः ।

[ (L. 1) K$_2$ B D$_5$ °धर्मपराः; D$_6$ क्षात्रे धर्मे रताः. B$_4$ केशवानुरताः; Dn$_2$ D$_{5.6}$ °नुमताः. — (L. 2) D$_2$ शस्त्रशास्त्ररता नित्यं; D$_{10}$ उत्तीर्णसमयाचाराः (for the prior half). ]

— $^{c}$) B (except B$_4$) D$_{2.3.6\ 11.12}$ नावसीदतुं; Dn$_2$ न च सीदितुं. S न विषीदंति ते पार्थाः. — $^{d}$) Ś$_1$ K चोद्वहंतः; D$_4$ प्राद्वहंतः; D$_{10}$ ह्युद्वहंतः.

7 $^{a}$) S तपसा (for धर्मतः). — $^{b}$) Ś$_1$ B (except B$_4$) Dn$_1$ सुवीर्येण च; D$_{1-3}$ स्वेन वीर्येण; D$_{10}$ °र्येणापि. — After $7^{ab}$, D$_3$ ins. 530* (cf v. l. 6) — $^{c}$) T G अभिगच्छेयुः. — $^{d}$) S नैष्ठिकी (for धीयते).

8 $^{a}$) B$_{1.3.5}$ Dn D$_{11.12}$ प्रवक्ष्यामि; D$_4$ प्रवेश्यामि; S प्रदास्यामि (for प्रणे°). — $^{b}$) Ś पांडवान्वेषणे शृणु (M$_1$ नृप). — Dn$_1$ om. $8^{c}$–$9^{b}$ — $^{d}$) D$_9$ S वेदितुं; **C**s अन्वेषितुं (as in text).

9 Dn$_1$ om. $9^{ab}$ (cf. v. l. 8). — $^{a}$) B$_4$ वाच्यं; **C**r शक्यं (as in text). — $^{c}$) K$_2$ प्रवर्तुं; B (except B$_4$) Dn D$_{9-12}$ प्रयुक्तं; S प्रणेतुं; **C**r प्रवक्तुं (as in text). S वद्वो(T G$_2$ °त्ते)हं. — $^{d}$) K विवक्ष्यामि; D$_{1-3.8}$ यद्वक्ष्यामि; D$_4$ तद्वक्ष्या°. B$_4$ D$_{4\ 6.8}$ G$_{1.3}$ M$_{4.5}$ निबोधत. — After 9, N (except D$_4$) ins :

531* न त्वियं मादृशैर्नीतिस्तस्य वाच्या कथंचन ।

[ Ś$_1$ K$_1$ अद्य; K$_2$ अप-; B$_4$ तेषां; **C**a. r. v तस्य (as above). ]

10 $^{a}$) K$_2$ D$_{4.8}$ साधुभिः; D$_9$ S न त्वियं (for सा त्वियं). D$_{4.8}$ वक्तव्यं. — $^{b}$) D$_8$ नाविनीतं; S तस्य नीतिः (for न त्वनीतिः). — $^{c}$) Ś$_1$ K M$_1$ तत्र; Dn$_2$ D$_{11.12}$ नाम (for तात). — $^{d}$) Ś$_1$ B$_{1.3.4}$ Dn D$_{4.5.7.8.10-12}$ M$_3$ तिष्ठंता; B$_5$ तिष्ठंते; D$_2$ M$_{1\ 2}$ तिष्ठंतः; D$_6$ निभृताः; **C**r as in text. Ś$_1$ B$_4$ Dn D$_{4-6\ 8.11.12}$ सत्यशालिना; B$_{1.3}$ D$_{7.9}$ °शीलिना; D$_{10}$ धर्मशालिना; S सत्यवादिनः. — After 10, S ins.:

532* अयुक्तं तु मया वक्तुं तुल्या मे कुरुपाण्डवाः ।
निवासं पाण्डुपुत्राणां संचिन्त्य च वदाम्यहम् ।
बहुना किं प्रलापेन यतो धर्मस्ततो जयः ।

11 $^{a}$) K हि (for इह). Ś$_1$ K Dn$_2$ D$_8$ वीरेण. S °श्यं तु नि(M$_1$ विनि-; M$_5$ त्वनु)युक्तेन. — $^{b}$) D$_6$ S सभामध्ये. — $^{c}$) B$_{1-3.5}$ D$_5$ °मति तु वक्तव्यं; B$_4$ Dn D$_6$ यथार्थमिति (Dn °मिह; D$_6$ मभि-) वक्त°; D$_{11.12}$ यथार्हमिह वक्त°; D$_4$ T$_2$ G$_2$ °मति हि वक्त°; D$_8$ °मतिर्विव°; D$_9$ °मति विवे°; T$_1$ G$_3$ °मतिर्हि वक्तव्यं; G$_1$ M$_{1\ 2}$ °मति च वक्त°. **C**r cites मति तु, **C**rp (Śr.) मति हि, **C**rp (Dev.) मतिरिति, **C**a विवक्तव्यम्. — $^{d}$) B$_4$ सर्वार्थ-; Dn D$_{10-12}$ सर्वथा; S सदृशं (G$_1$ सूनृतं) (for सर्वशो).

12 $^{a}$) B$_3$ वक्ष्ये; **C**r मन्ये (as in text). — $^{b}$) S यथान्ये (M$_2$ ये चान्ये) मेनिरे जनाः. — After $12^{ab}$, N ins.:

533* निवासं धर्मराजस्य वर्षेऽस्मिन्वै त्रयोदशे ।
तत्र तात न तेषां हि राज्ञां भाव्यमसांप्रतम् ।

[ (L. 1) B$_4$ विवासं; D$_{1-3.8}$ विवासः; D$_4$ निवासः. B$_4$ D$_5$ ह्यस्मिन्; D$_{7.9}$ -स्मिंस्तु. — (L. 2) D$_3$ राज्ञो; D$_4$ राजा; D$_{7.9}$ राज्यं; D$_8$ राज्ञा. ]

On the other hand, S ins. after $12^{ab}$:

534* निवासं पाण्डुपुत्राणां शृणुष्व मनुजाधिप ।

C. 4. 929 B. 4. 28. 17 K. 4. 31. 25

नासूयको न चापीर्षुर्नातिवादी न मत्सरी ।
भविष्यति जनस्तत्र स्वं स्वं धर्ममनुव्रतः ॥ १३
ब्रह्मघोषाश्च भूयांसः पूर्णाहुत्यस्तथैव च ।
क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः ॥ १४
सदा च तत्र पर्जन्यः सम्यग्वर्षी न संशयः ।
संपन्नसस्या च मही निरीतीका भविष्यति ॥ १५
रसवन्ति च धान्यानि गुणवन्ति फलानि च ।
गन्धवन्ति च माल्यानि शुभशब्दा च भारती ॥ १६
वायुश्च सुखसंस्पर्शो निष्प्रतीपं च दर्शनम् ।
भयं नाभ्याविशेत्तत्र यत्र राजा युधिष्ठिरः ॥ १७
गावश्च बहुलास्तत्र न कृशा न च दुर्दुहाः ।
पयांसि दधिसर्पींषि रसवन्ति हितानि च ॥ १८

T1 cont.:

535* भ्रातृभिः सहितो वीरैः कृष्णया च महायशाः ।
किमर्थं स महाराजो नात्मश्रेयो भविष्यति ।
पाण्डवो निकृतः पूर्वं यथावद्विदितं तव ।
क्लेशितश्च पुरे नित्यं राज्यकामैश्च सांप्रतम् ।
छन्नश्चरति तस्मात्स प्रकृत्या नीतिमान्नृपः ।
वर्षमेकं सुसंछन्नमुष्य वासमनुत्तमम् ।
आयाति चोदये काले क्षिप्रं द्रक्ष्यसि पाण्डवम् ।
सोदरैः सहितं वीरं द्रौपद्या च परंतप ।
संविधत्स्व महाबाहो यथा न स्यात्सुखोदयः ।
यस्मिन्स राजा वसतिश्छन्नः सत्त्वभृतां वरः ।
भविष्यन्ति नरास्तत्र रागमोहविवर्जिताः ।
नाधयो हि महाराज न व्याधिः क्षत्रियर्षभ ।

— M4 om. 12[cd]. — [c]) B1.3.5 Dn2 D4.11.12 T G1.2 M3.5 च (for वा). — After 12, all MSS. except K (Ś1 *marg.*, D1.2 transp. lines 1–2 and 3–4; M1.2.4.5 om. line 2) ins.:

536* दानशीलो वदान्यश्च निभृतो ह्रीनिषेधकः ।
जनो जनपदे भाव्यो यत्र राजा युधिष्ठिरः ।
प्रियवादी सदा दान्तो भव्यः सत्यपरो जनः ।
हृष्टः पुष्टः शुचिर्दक्षो यत्र राजा युधिष्ठिरः ।

[ (L. 1) S (except T2) क्षमायुक्तः (for वदान्यश्च). B Dn D2.5.6.10–12 Cap °षेवकः; G1.3 M4 °षेधनः; Ca.c (cf. Cv) °षेधकः (as above). — (L. 2) T G M3 पुरे (for जनो). D8 सर्वैः; Ca.c r.v भाव्यो (as in text). — (L. 3) D1–3 सत्य° (for प्रिय°). B3.4 Dn1 D2.5–9 भाव्यः; Cs भव्यः (as above). D10 भव्यः सत्यपरायणः (for posterior half). S प्रियवाक् (T1 °वान्) सत्यवान् (T2 G2 °वाक्) शूरो (T1 G1.3 धीरो) धर्मशीलो जितेंद्रियः. — (L. 4) Ś1 D1.3.4.8.10 Ca.v.rp (Dev.) तुष्टः; Cr हृष्टः (as above). S तुष्टः (for पुष्टः). Ś1 शुक्तो; B4 D8 Ca.rp (Dev.) शुद्धो; D1.3 शुक्तो; D10 शक्तो; Cr दक्षः (as above). D2 हृष्टपुष्टशुचिर्दक्षः. M1 निवसेद्धर्मतत्परः (for the posterior half). ]

13 [a]) Ś1 D1.4.6–8 चापीर्ष्युः; K1 चापीर्षुः; B3 चामर्षी; S वाक् (G1 वै; G3 वा) दुष्टो; Ca.v चापीर्षुः (as in text) Cc cites only ईर्षुः. — [b]) Ś1 नाभिवादी; B Dn D5.7.9.11.12 Ca नाभिमानी; D6 नातिमानी; T G2 M नाल्पभाग्यो; G1.3 नाल्पभोगी (for नातिवादी). — [d]) B1.2.5 Dn D11.12 T G2.3 M1–4 स्वयं (for स्वं स्वं). G1 यत्र राजा युधिष्ठिरः.

14 [a]) B4 धर्मघोषाः. — [b]) T G2.3 M1.3.5 पुण्यशब्दाः; G1 पुण्याः शब्दाः; M2.4 शुभशब्दाः (for पूर्णाहुत्यः). D4 M1 च सर्वशः (for तथैव च). — [d]) M3 यत्र राजा युधिष्ठिरः.

15 [b]) T1 G1.2 सम्यग्वर्षत्यसंशयः (T1 °यं). — [c]) D6 मही संगंधमासाद्य. — [d]) B2 D6 transp. निरी° and भवि°. B1.3–5 Dn D1.3.4.7.9–12 Cr निरातंका; Ca c.rp निरीतिका; Crp निरीतीका (as in text). D8 नैरंतर्या निरीतिका; S भविष्यति निरामया.

16 [a]) K धन°; B1.2.5 Dn D4.8.11.12 G1.3 गुण°; B3.4 D5–7.9 फल°; D1–3.10 स्वादु° (for रस°). G1.3 सस्यानि (for धान्यानि). — [b]) B D G1.3 रस° (for गुण°). K अपि (for च). — [c]) B3 माल्यानि च सुगंधीनि.

17 G3 transp. 17[ab] and 17[cd]. — [b]) Some MSS. निःप्रतीपं. Dn1 निर्भयं वाति सर्वशः; S यत्र राजा युधिष्ठिरः. Ca.c.n.s.v cite निष्प्रतीपं, Cn also दर्शनं. — After 17[ab], M5 reads 18, 538*, and 19. — T G M1.4 ins. after 17[ab]: M5, after 19:

537* न रोगास्तत्र विद्यन्ते वधबन्धा न सन्ति च ।
न चोरा न हि दम्भाश्च न च बाधा भवन्ति च ।
नाशक्ता न च दुष्टाश्च यत्र राजा युधिष्ठिरः ।

[ (L. 1) M1 दृश्यंते (for विद्यन्ते), and नाधयो व्याधयो न च (for the posterior half). ]

— After 537*, T G read 20, 18, 19. — G1 M1.2 om. 17[cd]. — [c]) Ś1 S (G1 M1.2 om.) भयं च नाविशेत्तत्र; B4 भयं नात्राहितं तत्र; Dn D11.12 भयं न त्वावि°; D8 न पापीत्यावि°; D10 आपन्नाभ्यावि°. Cc cites अत्याहितं, Crp (Cat.) नात्याहितं, Cr अभ्याविशेत् (as in text).

18 B4 (hapl.) om. 18–19; D5 transp. 18 and

गुणवन्ति च पानानि भोज्यानि रसवन्ति च ।
तत्र देशे भविष्यन्ति यत्र राजा युधिष्ठिरः ॥ १९
रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणान्विताः ।
दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः ॥ २०
स्वैः स्वैर्गुणैः सुसंयुक्तास्तस्मिन्वर्षे त्रयोदशे ।
देशे तस्मिन्भविष्यन्ति तात पाण्डवसंयुते ॥ २१
संप्रीतिमाञ्जनस्तत्र संतुष्टः शुचिरव्ययः ।
देवतातिथिपूजासु सर्वभूतानुरागवान् ॥ २२
इष्टदानो महोत्साहः शश्वद्धर्मपरायणः
अशुभद्विट् शुभप्रेप्सुर्नित्ययज्ञः शुभव्रतः
भविष्यति जनस्तत्र यत्र राजा युधिष्ठिरः ॥ २३
त्यक्तवाक्यानृतस्तात शुभकल्याणमङ्गलः ।
शुभार्थेप्सुः शुभमतिर्यत्र राजा युधिष्ठिरः ।
भविष्यति जनस्तत्र नित्यं चेष्टप्रियव्रतः ॥ २४ C. 4. 942 B. 4. 28. 30

$19^{ab}$. — $^{a}$) S बहुक्षीरस्रवा (T1 G3 °स्रुवो; G1 M1. 2. 5 °प्रदा) गावः. — $^{b}$) Ś1 (*sup. lin.* as in text) B (B4 om.) Dn D1. 3. 5. 6. 11. 12 दुर्बलाः; K दुर्ग्रहाः (for दुर्दुहाः). S सुपुष्टाश्च सु(G1. 3 °ष्टा घट)दोहनाः. — $^{c}$) M मधु° (for दधि°). — $^{d}$) K2 फलानि; G1. 3 मधूनि; **Cc** हितानि (as in text). — After 18, S ins.:

538* सलिलानि प्रसन्नानि सर्वे भावाश्च शोभनाः ।
[ M1. 2 यत्र राजा युधिष्ठिरः (for the posterior half). ]

— After 18, D4 reads 20–21.

19 B4 om. 19 (cf. v. l. 18); M1 om. 19; M2 om. 19–20. D5 transp. 18 and $19^{ab}$. — $^{ab}$) Ś1 M4 transp. पानानि and भोज्यानि. K2 Dn D6. 10–12 G1. 3 पेयानि; B (B4 om.) D5 भोज्यानि; **Cv** पानानि (as in text). B (B4 om.) D5 पेयानि; D7. 9 भक्ष्याणि (for भोज्यानि). D1–3 च भवंति; S (M1. 2 om.) विविधानि (for रस°). — $^{c}$) D9 काले; S (M1. 2 om.) राजन् (for देशे).

20 D9 M3 om. 20. M2 also om. 20 (cf. v. l. 19). D4 reads 20–21, after 18. T G read 20 after 537* (cf. v. l. 17). — $^{ab}$) Ś1 T G2 transp. गन्धाः and शब्दाः. G1. 3 एव (for अपि). D8 रूपशब्दा (for शब्दाश्चापि). D1–3. 7 M1 गुणाधिकाः. — $^{c}$) B1. 3. 5 D1–3. 6. 8. 10 दिशश्चैव; B4 D7 दृश्याश्चैव; D4 दृश्यंतेत्र; M1 दृश्याधिक (for दृश्यानि च). **Cc. r** cite दृश्यानि. B3. 4 D1–3. 6–8. 10 प्रसन्नाश्च; **Cr** प्रसन्नानि (as in text). — After 20, B4 Dn D1–3. 6. 8. 10–12 ins.:

539* धर्माश्च तत्र दृश्यन्ते सेविताश्च द्विजातिभिः ।
[ Dn1 D11 m सर्वैस्तु (for दृश्यन्ते). ]

21 D4 reads 20–21 after 18. — $^{a}$) Ś1 B2 D5 समायुक्ताः; B3. 5 Dn D1–3. 6–8. 11. 12 S च (D7 तु) संयुक्ताः; D4. 10 च संपन्नाः; D9 संप्रयुक्ताः (for सुसं°). — $^{b}$) B1. 3. 5 Dn D1. 2. 4. 8. 10 अस्मिन्; B2. 4 D5. 6 ह्यस्मिन्; D3 यस्मिन्; T G2 तत्र. — $^{c}$) D6 तत्र (for देशे). D1–3 चास्मिन्; D4. 8 S तत्र; D6 देशे. — $^{d}$) B4 जनाः; D8 वर्षाः; M1 यत्र (for तात). K1 पांडवसंगते; S °संश्रिते (G1 °विश्रुते).

22 $^{a}$) D4 नाप्रीतिमान् (for संप्री°). B1. 3. 5 जनश्चैव; Dn2 D11. 12 जनपदः (for जनस्तत्र). — $^{b}$) D2 संहृष्टः; **Cv** संतुष्टः (as in text). B3 D6 T1 M3–5 अव्यथः; D5 m. 7. 9 उज्वलः; **Cv** अव्ययः (as in text). D1 हृष्टपुष्टोतिमानदः; D3 हृष्टपुष्टोभवत्तदा. — $^{c}$) Dn2 D11. 12 °पूजा च. — $^{d}$) N (except B4 D10) सर्वभावानु°.

23 $^{a}$) K इष्टदाने. D5 S इष्टदाना (D5 G1. 3 M3 °न-) महोत्साहाः (D5 °हः). — $^{b}$) K2 B (except B4) Dn D7. 9. 11. 12 स्वस्वधर्म°; D1–3 सत्यधर्म°; S नित्यं (T1 G2 M2. 3. 5 °त्य-) धर्मपरायणाः. — After $23^{ab}$, D4 S read $24^{ab}$. — $^{c}$) Ś1 K B (except B4) Dn2 D11. 12 अशुभाद्धि शुभ(K °भे)प्रेप्सुः; S अशुभद्विषः (T1 शुभद्विषे; T2 G2 अहिंसकाः; G1 शुभवृत्ताः; G3 शुभप्रीताः) शुभेच्छाश्च. **Cn** cites अशुभात्. — $^{d}$) Dn D11. 12 इष्टयज्ञः; S नित्य(T1 G2. 3 °त्यं)तुष्टाः. D4. 5 m. 7. 9 श्रियावृतः; T G2 M1. 3 शुभान्विताः; G1. 3 M2. 4. 5 श्रियान्विताः. — $^{e}$) S भविष्यंति जनास्तत्र. — After 23, S (except M1. 3) ins.:

540* नित्योत्सवप्रमुदितो नित्यहृष्टः श्रिया वृतः ।
भविष्यति निवासोऽयं यत्र राजा युधिष्ठिरः ।

24 D4 S read $24^{ab}$ after $23^{ab}$. — $^{a}$) B2 D1. 3. 4 सत्यवाक्या(D4 °क्यो)नृतस्; D10 शुभवाक्याद्दतस्; T G M3 व्यक्तवाक्यास्ततस्; M1. 2 °क्यास्तथा (M2 °स्ततस्); M4 व्यक्तवाक्या जनास्; M5 त्यक्तवक्रानृतस्. **Cv** analyses त्यक्त° (as in text). D4 त्रस्तः; D7. 9 M4 तत्र (for तात). — $^{b}$) D3 °मंगलं; S °मंगलाः. **Cv** cites शुभ° (as in text). Cf. **Cc. r**. — Ś1 om. $24^{cd}$; S om. $24^{cdef}$. — B2 D6 ins. after $24^{cd}$: B4, after 24:

541* सर्वभूतदयायुक्तः सदा निर्मलमानसः ।
[ B4 °भूतहिते युक्तः. ]

Thereafter B4 repeats $23^{ef}$. D4 (which om. $24^{e}$–$25^{b}$) ins. after $24^{cd}$:

C. 4. 842 B. 4. 28. 30 K. 4. 31. 50

धर्मात्मा स तदादृश्यः सोऽपि तात द्विजातिभिः ।
किं पुनः प्राकृतैः पार्थः शक्यो विज्ञातुमन्ततः ॥ २५
यस्मिन्सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा ।
ह्रीः श्रीः कीर्तिः परं तेज आनृशंस्यमथार्जवम् ॥ २६
तस्मात्तत्र निवासं तु छन्नं सत्रेण धीमतः ।
गतिं वा परमां तस्य नोत्सहे वक्तुमन्यथा ॥ २७
एवमेतत्तु संचिन्त्य यत्कृतं मन्यसे हितम् ।
तत्क्षिप्रं कुरु कौरव्य यद्येवं श्रद्दधासि मे ॥ २८

इति श्रीमहाभारते विराटपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

# २८

वैशंपायन उवाच ।
ततः शारद्वतो वाक्यमित्युवाच कृपस्तदा ।
युक्तं प्राप्तं च वृद्धेन पाण्डवान्प्रति भाषितम् ॥ १
धर्मार्थसहितं श्लक्ष्णं तत्त्वतश्च सहेतुमत् ।
तत्रानुरूपं भीष्मेण ममाप्यत्र गिरं शृणु ॥ २
तेषां चैव गतिस्तीर्थैर्वासश्चैषां प्रचिन्त्यताम् ।

---

542* अनिर्दिश्यः स धर्मात्मा द्विजैरपि हि भारत ।

25 D4 om. 25[ab] (cf. v. l. 24). — [a]) Ś1 स तथा; B (except B4) Dn2 D5–7. 9. 11. 12 सततं; Dn1 शक्यते (for स तदा). Dn1 ज्ञातुं (for दृश्यः). D1–3. 8 धर्मात्मावस्थितो दृश्यः (D1 देशाः); S धर्मात्मा स तु (T2 G2 सुधर्मात्मा सु-) दुर्ज्ञेयः. ❀ Cr: धर्मात्मासततमित्यत्र नञर्थोऽकारस्तेन अदृश्य इत्यर्थः । ❀ — [b]) Dn1 न (for सो). D1. 3 प्रेक्ष्यः; D2 अप्येष (for सोऽपि). D5 m. 7. 9 सोपि तादृग्विधैर्नृभिः; S सर्वज्ञैश्च (T2 विज्ञेयश्च; G2 सुज्ञेयश्च) द्विजा°. — [cd]) K transp. पार्थः and शक्यः. Dn D11. 12 तात; G1 पापैः (for पार्थः). Ś1 K हि ज्ञातुम्; B2 वेदितुम् (for विज्ञातुम्). Dn D11. 12 पार्थो विज्ञायते क्वचित्; S शक्यो ज्ञातुं वने वसन्.

26 [a]) B1 T G1. 2 M2. 4. 5 तस्मिन्; G3 तस्मात्. K दांतं; B2 D3. 6. 10 दाक्ष्यं (for दानं). — [b]) Ś1 K B4 D1–3. 5–10 शक्तिः; G3 श्रुतिः (for शान्तिः). Ś1 दमः; B4 दया (for ध्रुवा). — After 26[ab], Ś1 ins. in the text: शक्तौ सत्यामपि परापराधसहिष्णुता क्षमा ।, which is an explanation of the word क्षमा. — [c]) B2 D5 श्रीः कीर्तिर्ह्रीः परं तेजः. — [d]) Ś1 तथा; T2 G2 परा (for अथ).

27 [a]) S तस्मान्निवासः (M °सं) पार्थानां. — [b]) K1 मैत्रेण; K2 B (except B3) Dn D1–4. 8 m. 11. 12 यत्नेन; D5. 9 मंत्रेण; Cv सत्रेण (as in text) Cs cites सत्रं. Ś1 धीमता. S चिंत्यतां यद्ब्रवीमि वः. — [c]) S (except M2) गतिर्. Ś1 B Dn D1–4. 6–12 च; D5 तु (for वा). S (except M2) परमा. B (except B4) Dn D1–3. 11. 12 T G2 M1–4 तत्र; G1. 3 वक्तुं; M5 तेषां (for तस्य).

28 [a]) B1 D4 S एव; Dn2 D3. 11. 12 एवं; D10 एतं (for एतत्). — [b]) B1. 3–5 Dn2 D10. 11 T1 G1. 3 M (except M3) कृत्यं; B2 कृते; D4 द्रुतं; T2 G2 क्षिप्रं (for कृतं). S साधु मन्यसे (for मन्यसे हितं). — [d]) S एतत् (for एवं). — After 28, S (except T2) ins.:

543* कुलस्य हि क्षमं तात यदहं तद्ब्रवीमि ते ।
[ M प्रब्र° (for तद्ब्र°). ]

Colophon om. in D1–3; D7 reads it in marg. — *Adhy. name:* K1 चांत्याचार (sic); K2 प्रत्याचारः; B1. 3 Dn D5. 7 m. 9. 11. 12 T2 भीष्मवाक्यं; B2. 4 D4. 6. 8. 10 चार(D8 om. it)प्रत्याचारे भीष्मवाक्यं; M1. 3 पांडवपरिज्ञाने (M3 om. it) द्रोणभीष्मवाक्यं. — *Adhy. no.* (figures, words or both): Ś1 B4 D6. 10 27; D5. 11 28; S 30 (M2–5 29). — *S'loka no.:* G3 47.

## 28

1 [a]) T अथ (for ततः). D4 वाङ्मी; D5 वाचं (for वाक्यं). — [b]) D1–3 transp. कृपः and तदा. D4 प्रत्युवाच ततस्तदा. — [c]) Ś1 K Dn1 D1 प्रोक्तं; Ca स्वाप्तं; Cc. n. r s प्राप्तं (as in text). — [d]) Ś1 भाषितुं.

2 [a]) Dn1 धर्मेण सहितं. B4 सूक्ष्मं; G3 वक्ष्ये; Ca. v श्लक्ष्णं (as in text). — [b]) D6 धर्मतत्वं; D9 तत्ववच्च; T1 G1. 3 M सर्वं तथ्यं; T2 G2 सर्वं सत्यं (for तत्त्वतश्च). Ś1 B D (except D1–3. 8) T G2 सहेतुकं; M1 तु हेतुमत्. K2 तच्च तत्वं च हेतुमत्. — [c]) B4 भद्रमुक्तं च; D1–3 तत्वानुरूपं; D4 आत्मानु°; G1 तवानु°; G3 तथानु°; M1. 5 अत्रानु° (for तत्रा°). Cr cites अनुरूपं (as in text). T G M1 भीष्मस्य. — [d]) T G वचनं; M च वचः (for अत्र गिरं).

3 [a]) Dn2 D2. 9. 11. 12 गातिं; Ca गतिः (as in text).

नीतिर्विधीयतां चापि सांप्रतं या हिता भवेत् ॥ ३
नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता ।
किं पुनः पाण्डवास्तात सर्वास्त्रकुशला रणे ॥ ४
तस्मात्सत्रं प्रविष्टेषु पाण्डवेषु महात्मसु ।
गूढभावेषु छन्नेषु काले चोदयमागते ॥ ५
स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः ।
उदये पाण्डवानां च प्राप्ते काले न संशयः ॥ ६
निवृत्तसमयाः पार्था महात्मानो महाबलाः ।
महोत्साहा भविष्यन्ति पाण्डवा ह्यतितेजसः ॥ ७

तस्माद्बलं च कोशं च नीतिश्चापि विधीयताम् ।
यथा कालोदये प्राप्ते सम्यक्तैः संदधामहे ॥ ८
तात मन्यामि तत्सर्वं बुध्यस्व बलमात्मनः ।
नियतं सर्वमित्रेषु बलवत्स्वबलेषु च ॥ ९
उच्चावचं बलं ज्ञात्वा मध्यस्थं चापि भारत ।
प्रहृष्टमप्रहृष्टं च संदधाम तथा परैः ॥ १०
साम्ना भेदेन दानेन दण्डेन बलिकर्मणा ।
न्यायेनानम्य च परान्बलाच्चानम्य दुर्बलान् ॥ ११
सान्त्वयित्वा च मित्राणि बलं चाभाष्यतां सुखम् । C. 4 968 B 4 29 12 K. 4. 32 12

K D4. 5. 7. 8. 10 Cr तथ्या; B3. 4 D6 Ca. rp (Dev.) तक्यौं; D1. 3 तत्वात्; D2 सम्यक्; D9. 11. 12 सूक्ष्मां; T G2 तत्र; G1. 3 M तात; Cs तीर्थैः (as in text). — $^{b}$) Dn2 D6. 11. 12 वासं; Ca वासः (as in text). K2 D1. 3. 8 वि- (for प्र-). T G निवासश्चानुचिं°; M वासश्चैवानुचिं°. — $^{c}$) D1. 3 G1. 3 M (except M2) अत्र; T G2 तत्र (for चापि). — $^{d}$) D4 °तं या विधीयते.

4 $^{b}$) M2. 3 बलीयसा (for बुभूषता). — $^{c}$) K2 D4 तत्र; S शूराः (for तात). — $^{d}$) D1. 3. 8. 10 सर्वा(D10 धर्मा)र्थकुशला रणे (D3 इमे); S विद्वांसो बलिनस्तथा.

5 $^{a}$) Ś1 क्षत्रं; K मंत्रं; D9 छद्म (gloss); T2 सम्यक्; G1. 3 तत्र; Cs. v सत्रं (as in text). Ś1 विशिष्टेषु; Cv प्रवि° (as in text). D2 तस्मात्सत्यप्रतिष्ठेषु. — M4 (hapl.) om. $5^{b}$–$6^{a}$.

6 M4 om. $6^{a}$ (cf. v. l. 5). — $^{a}$) B2 D (except D1. 3. 4. 9. 10) स्वराष्ट्रे (D10 °ष्ट्रा-) परराष्ट्रेषु (Dn D5. 11. 12 °ष्ट्रे च; D6 °ष्ट्रे वा). — $^{b}$) Ś1 फलम्; Cc बलम् (as in text). — $^{c}$) B3 भावाय; B5 Dn1 D1. 3. 9. 10 S उदयः; D4 उदयं. B2 D5 पांडुपुत्राणां; D4 S पांडवेयानां. — $^{d}$) B2. 4 Dn2 D2. 5 प्राप्तकाले; D9 S प्राप्तकालो. — After 6, S ins.:
544* निवासं पाण्डुपुत्राणां दर्शने मृगयामहे ।

7 $^{a}$) M5 ते हि (for पार्था). — $^{b}$) D1–3 M5 सत्यव्रतपरायणाः; D6 (m as in text) °नो महारथाः. — $^{d}$) Ś1 K B1–3. 5 Dn1 D2. 5 G3 M5 ह्यमितौजसः; Dn2 D11 ह्यग्नितेजसः; D1. 3. 4 अमितौ°; D7 चातिते°, D9 चाग्निते°; D12 अग्निते° (for ह्यतिते°).

8 $^{a}$) Ś1 D (except Dn2 D6. 11. 12) S (except G M4) कोशश्च; a few MSS. कोषं. — $^{b}$) S एव (for अपि). — $^{c}$) Ś1 अथ (for यथा). — $^{d}$) B4. 5 D10 संदधीमहे; Dn1 D5 संदधीमहि; D11 m Cn. s as in text. Dn2 D11. 12 Cnp सम्यक्तेषां विधीयते; S सम्यक् संधामहे (T1 G1. 3 संदध्महे) परैः.

9 D3 om. 9. — $^{a}$) B2 D5. 6 इति (for तात). Ś1 K पश्यामि; B4 Dn1 बुद्ध्यापि; D5 मत्वापि; D8 वक्ष्यामि (for मन्यामि). D1. 2 तत्राहं (for तत्सर्वं). B1. 3 D7 m. 10 मन्ये तत्र त्वहं तात; B5 Dn2 D11. 12 य(B5 त)देतन्मन्यसे सर्वं (B5 यत्तु) (D11 m तात बुध्यापि तत्सर्वं); D4. 7. 9 तात मन्यामहे सर्वं (D4 तत्र); D5 m न ते वक्ष्यामि तत्राहं; S यत्र (M1. 5 तत्र) यन्मन्यसे श्रेयः. — $^{b}$) Dn1 हितं (for बलं). — G1 om. $9^{c}$–$10^{b}$. — $^{c}$) D1. 4 नियतः; T1 G2. 3 निश्चयं; Ca. c नियतं (as in text). G3 शत्रु°; M1. 5 सत्त्व° (for सर्व°). — $^{d}$) K बलेषु बलवत्सु च; M1 °वत्स्वितरेषु च.

10 G1 om. $10^{ab}$ (cf. v. l. 9). — $^{a}$) T1 G3 M2–4 सारं (M2. 3 सार-) फल्गु बलं ज्ञा°; T2 G2 स त्वं परबलं ज्ञा°; M1. 5 सारफल्गुफलं ज्ञा°. Crp (Cat.) cites दृढं कृत्वा (cf. Cc); Cr बलं ज्ञात्वा (as in text). — $^{b}$) T1 मध्यस्थानां च; T2 G2 मध्यस्थांश्चापि. — After $10^{ab}$, S (except G1 M3) *repeat* $6^{ab}$ (v. l. in T G2 स्वराष्ट्रे पर°). — $^{c}$) D6 Ca प्रकृष्टं (for प्रहृष्टं). B4 D6 Ca अप्र(B4 °प)कृष्टं; D4 G1. 3 वाप्रहृष्टं (for अप्रहृष्टं). D4. 8. 9 S वा (for च). — $^{d}$) Ś1 K2 D1–3. 8 संदधामस; Dn2 D11. 12 Cnp संधनीयं; D4. 6 संदधानस्; D10 °धीमस्; Cn as in text. Dn2 D11. 12 अथापरैः; D5 (m as in text) यथा परैः. T G तथा (T2 तदा) संदध्महे (T1 °ध्म नः) परैः; M तथा संधामहे परैः (M5 मध्योदासीनमेव च).

11 $^{ab}$) D1–4. 7–9 S transp. भेदेन and दानेन. Dn2 D5. 11. 12 transp. दानेन and दण्डेन. D10 साम्ना दानेन दंडेन भेदेन बलि°. — $^{c}$) D4 नयेन; Ca. c न्यायेन (as in text). B1. 2. 5 Dn D1. 3 10–12 आक्रम्य; D2 अन्येन (for आनम्य). D1–3 च परं; S बलिनो. Cc cites परान्. — $^{d}$) D3 T2 om. च. D8 आक्रम्य (for आनम्य).

C. 4. 968 B. 4. 29. 12 K. 4. 32. 13 सकोशबलसंवृद्धः सम्यक्सिद्धिमवाप्स्यसि ॥ १२
योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः ।
अन्यैस्त्वं पाण्डवैर्वापि हीनस्वबलवाहनैः ॥ १३
एवं सर्वं विनिश्चित्य व्यवसायं स्वधर्मतः ।
यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि ॥ १४

इति श्रीमहाभारते विराटपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

## २९

वैशंपायन उवाच ।
अथ राजा त्रिगर्तानां सुशर्मा रथयूथपः ।
प्राप्तकालमिदं वाक्यमुवाच त्वरितो भृशम् ॥ १
असकृन्निकृतः पूर्वं मत्स्यैः साल्वेयकैः सह
सूतेन चैव मत्स्यस्य कीचकेन पुनः पुनः २ ॥
बाधितो बन्धुभिः सार्धं बलाद्बलवता विभो ।
स कर्णमभ्युदीक्ष्याथ दुर्योधनमभाषत ॥ ३
असकृन्मत्स्यराज्ञा मे राष्ट्रं बाधितमोजसा ।

दुर्हृदः (for दुर्बलान्).

12 $^{b}$) B3 om. च. D1. 8 बलं चाभाष्य मुख्यतः; D4. 5 बलं चाभाष्य वै सुखं (D4. 5m शुभं); S स्वं चाभाष्य बलं सुखं. Ca. s cite बलं and आभाष्यतां, Ca also सुखं. — $^{c}$) B1 Dn2 D7. 11. 12 सुकोश°; D1-3 स्वकोश(D2 सकोशो)बलसंपन्नः; D6 सकोषबलबद्धः स्यात्; S स्वकोश°. — $^{d}$) S सर्वां (for सम्यक्). K1 Dn1 D7. 9 संधिम्; T1 G2 वृद्धिम्; Cn सिद्धिम् (as in text). — After 12, G1 M4 (which om. st. 13-14) ins. a passage given in App. I (No. 27); cf. v. l. 14.

13 D4 G1 M4 om. 13-14. — $^{b}$) D8 अरातिभिरुपस्थितैः. — $^{c}$) D7. 9 च; S (G1 M4 om.) वा (for त्वं). B4 पार्थिवैर् (for पाण्डवैर्). Dn2 D3. 7. 9. 11. 12 Cn च (for वा). — $^{d}$) Ś1 K हीन(K2 °नः)स्वबलपौरुषैः; B4 Dn D7. 9-12 हीनैश्च (B4 D10 हीनाः स्व-; D7. 9 हीनाश्च) बल°; D3 S (except T2 G2; G1 M4 om.) हीनः स्व°; D8 °बलमात्मभिः.

14 D4 G1 M4 om. 14 (cf. v. l. 13). — $^{a}$) Ś1 K विनिक्षिप्य. — $^{b}$) D5m. 7. 9 व्यवहारं (for व्यवसायं). D8m स्वकर्मणः (orig. स्वधर्मतः as in text). S (G1 M4 om.) व्यवहर्तासि न्यायतः (G3 नान्यतः). — $^{c}$) D10 यथाकामं. — A passge given in App. I (No. 27) is ins. in S after 14 (in G1 M4, which om. 13-14, after 12).

Colophon om. in S; D7 reads it in marg. — *Adhy. name:* K भीष्मद्रोणकृपानुशासनं; B1-3 Dn D4. 5. 7m. 8. 9. 11. 12 कृपवाक्यं; B4. 5 D6. 10 चारप्रत्याचारे कृपवाक्यं; D1. 2 चारप्रत्याचारः; D3 चारप्रचारः. — *Adhy. no.* (figures, words or both): Ś1 K1 B4 D6. 10 28; D5 29. — *S'loka no.:* D1 47.

### 29

1 $^{a}$) D4 S ततो; Ca अथ (as in text). — After $1^{ab}$, S ins.:

545* पूर्वमाभाष्य कर्णेन तथा दुःशासनेन च ।

— $^{d}$) B2 त्वरितं. Dn1 D11m. 12 S बली (for भृशम्).

2 Before 2, S (except M5) ins. सुशर्मा. — $^{a}$) Ś1 Dn D6. 11 (before corr.) Cs निकृताः; D4. 8 निष्कृतः; D7. 9 निर्जितः. G1. 3 तेन (for पूर्वं). — $^{b}$) K2 अहं (for सह). Ś1 B D मत्स्य(D10 °त्स्यैः)शाल्वे(B4 D1. 2. 8 °ल्व)यकैः प्रभो (Ś1 B4 सह; D1-3. 10 परैः); S (M4 *sup. lin.*) मा(T2 M2 म)त्स्यसाल्वेयकेकयैः (M4 orig. मात्स्यकेकयबाल्हिकैः). — $^{c}$) Dn1 transp. च and एव. M1 अपि (for एव). D8 मत्स्यानां; D10 मत्स्येन; S (except G3 M3) मात्स्यस्य. — $^{d}$) S पुरा त्वहं (for पुनः पुनः).

3 $^{a}$) M1. 3 पातितो; M5 घातितो (for बाधितो). M5 भ्रातृभिः (for बन्धुभिः). — $^{b}$) G3 Cn बलवतां. Ś1 विधौ; G3 प्रभो; Cn विभौ. — G1 om. $3^{cd}$. — $^{c}$) S (except T2; G1 om.) अभि(G2 °पि)वीक्ष्य (for अभ्यु°). — $^{d}$) M1. 2 सुयो° (for दुर्यो°).

4 $^{a}$) Ś1 मत्स्यराज्ञस्ते; K °राज्ञा ते; B4 Dn2 D6. 11. 12 °राजेन. S राष्ट्रं ममासकृद्राजन्. — $^{b}$) Ś1 बाधितुम्. S राज्ञा मा(G1. 3 M5 म)त्स्येन बाधितं. — $^{c}$) B1. 2. 5 Dn2 D7. 9. 11. 12 S तस्य (for चास्य). — $^{d}$) Ś1 K °वान्योभवत्पुरा; D1 S बलमत्तोभव(D1 °त्तोभ्यभू)त्पुरा; D2 बले

प्रणेता कीचकश्चास्य बलवानभवत्पुरा ॥ ४
क्रूरोऽमर्षी स दुष्टात्मा भुवि प्रख्यातविक्रमः ।
निहतस्तत्र गन्धर्वैः पापकर्मा नृशंसवान् ॥ ५
तस्मिंश्च निहते राजन्हीनदर्पो निराश्रयः ।
भविष्यति निरुत्साहो विराट इति मे मतिः ॥ ६
तत्र यात्रा मम मता यदि ते रोचतेऽनघ ।
कौरवाणां च सर्वेषां कर्णस्य च महात्मनः ॥ ७
एतत्प्राप्तमहं मन्ये कार्यमात्ययिकं हितम् ।
राष्ट्रं तस्याभियात्वाशु बहुधान्यसमाकुलम् ॥ ८
आददामोऽस्य रत्नानि विविधानि वसूनि च
ग्रामान्राष्ट्राणि वा तस्य हरिष्यामो विभागशः ॥ ९
अथ वा गोसहस्राणि बहूनि च शुभानि च ।
विविधानि हरिष्यामः प्रतिपीड्य पुरं बलात् ॥ १०
कौरवैः सह संगम्य त्रिगर्तैश्च विशां पते ।
गास्तस्यापहरामाशु सह सर्वैः सुसंहताः ॥ ११
संधिं वा तेन कृत्वा तु निबध्नीमोऽस्य पौरुषम् ।
हत्वा चास्य चमूं कृत्स्नां वशमन्वानयामहे ॥ १२
तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयम् ।
भवतो बलवृद्धिश्च भविष्यति न संशयः ॥ १३
तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत् । C 4 984 B. 4 30. 14 K. 4. 32. 47

ह्यधिकृतः पुरा; D8.4.7.9 °वान्स ह्य(D3 °नभ्य-; D4 °न्सम) भूत्पुरा; D8 °मत्तो मदोत्कटः.

5 $^a$) Dn2 D11.12 क्रोधामर्षी; D8 शूरोमर्षी; D10 कूरामर्षी. Ca cites क्रूरः. B2 Dn1 D5.6 सु-; Dn2 D8.10–12 च (for स). S अमर्षी (G1 स बली) दुर्जयो जेता. — $^b$) Ś1 भूरिविख्यात°; B4 D5.8.10 भुवि विख्यात°; S प्र(M5 वि)ख्यातबलपौरुषः. — $^c$) B3 S स (for नि-). Ś1 स हि; B2.4 Dn D11.12 स तु; D5 7.9 तु स; M3 किल (for तत्र). — $^d$) D1–4.8.10 S नृशंसकृत्; D6 °सकः.

6 $^a$) B2.3.5 D5.10 M4 तु; Dn1 D6 T G वि- (for च). Dn1 D1.10 M राजा (for राजन्). — $^b$) Dn1 इतदर्पो; D7.9 नष्ट°; D8 क्षीण°.

8 $^a$) D10 प्राप्तकालम्; T G एतत्कार्यम्. — $^b$) T G परम्; Ca कार्यम् (as in text). Dn1 औपयिकं; Ca.c.r.v आत्ययिकं (as in text). Ś1 S महत्; B (except B2) D (except D4.5.8.11.12) हि नः (for हितम्). — $^c$) Ś1 D5 अभियायाशु (Ś1 *sup. lin.* अर्पयित्वाशु); K अपयात्वाशु; B Dn D2.8.10–12 अभियास्यामः; D1 8 अभियास्यामि; D6 अपि यास्यामः; D7.9 अभिगत्वाशु; S अभियात्वा तु (G3 °गच्छंतु). — $^d$) Ś1 D4 S धनधान्य°; D1–3.10 पशुधान्य°; D6.7. °धनाकुलं.

9 $^a$) B2.4 D6 आदास्यामो; D3 10 आददानो. B2 हि (for ऽस्य). S आददीम हि रत्नानि. — $^b$) Dn2 D1–4.10 transp. विविधानि and वसूनि. K B4 G1 बहूनि (for वसूनि). — $^d$) B2 D10 हरिष्यामि; T2 गृहीष्यामो.

10 $^b$) Ś1 K1 B2 Dn1 D5 transp. बहूनि and शुभानि. D1–3.10 सुबहूनि (for बहूनि च). D5 सु- (for the first च). S बहूनि शुभदर्शन (G1 °ने; M °नाः). — After 10$^{ab}$, T1 ins.:

546* विधमित्वा हरिष्यामः प्रविश्य च पुराद्बलम् ।
[ Cf. 10$^{cd}$. ]

— $^c$) T G विविधं तद्; M विधमित्वा (for विविधानि). — $^d$) B1.3.5 S परिपीड्य; D1–4 निपीड्य च.

11 $^a$) S कौरवाः (T2 °व्याः). Ś1 (*sup. lin.* as in text) D3 संमंत्र्य; Dn D11.12 T2 संगत्य; M (except M5) संहत्य. — $^b$) S त्रिगर्ताश्. — $^c$) K Dn D11.12 अपहरामो; B4 आहारयाम; D9 आह्रियताम्. K वा; Dn D11.12 अद्य (for आशु). D3 M1–4 गावस्तस्य (D3 M1 °स्या-) हरामाशु; T G M5 गास्तस्य च (T2 °स्य चा-; G3 गाश्च तस्य) हरामाशु. — $^d$) Ś1 सर्वाः सर्वे; M3 सह सैन्यैः. Ś1 (m as in text) सुसंमताः; K सुसंहतैः; B (except B2) Dn2 D7.10–12 सुसंगताः; Dn1m सुसंयताः; D2.8.9 सुसंहितैः (D8 °ताः); S महारथैः; Ca सुसंहताः (as in text).

12 $^a$) Dn D4.8.11 12 Cv संविभागेन (for संधिं वा तेन). Dn1 D1.3.6 आशु; D4 अस्य; D10 अथ (for तु). B4 संविधां तेन कृत्वांते (sic). — D1 om. 12$^b$–13$^a$. $^b$) B4 D9 निगृह्णीमो; Ca निब° (as in text). — $^c$) T G1 हृत्वा (for हत्वा). Ś1 K1 B1 Dn2 D2–4.11.12 T2 वा (for च). D4 यशः; T1 G1.3 भुवं (for चमूं). D2 M5 सर्वां (for कृत्स्नां). — $^d$) D2 वसु; D6 वासम् (for वशम्). B Dn1 D11m एवानयामहे; D2 सर्वं नया°; D4 कृत्वा नया°; D5.6.10 अद्या(D10 °द्य)नया(D6 °लभा)महे; D8 तव नया° (for अन्वान°).

13 D1 om. 13$^a$ (cf. v. l. 12). — $^c$) B1.5 D4.6 भवतां; Dn1 भवता; M (except M5) भद्रं वो.

14 Before 14, D5 (marg.) S ins. वैशं°. — $^a$) G3 श्रुत्वा तु (for तच्छ्रुत्वा). — Before 14$^{cd}$, B2 G3 M5 ins. कर्ण उ° (resp. कर्णः). — $^c$) M सर्वं (for वाक्यं). B4

C. 4 1219 B. 4 37. 24 K. 4. 38. 61 कुमार्यस्तत्र तं दृष्ट्वा प्राहसन्पृथुलोचनाः ॥ १८
स तु दृष्ट्वा विमुह्यन्तं स्वयमेवोत्तरस्ततः ।
कवचेन महार्हेण समनह्यद्बृहन्नडाम् ॥ १९
स बिभ्रत्कवचं चाग्र्यं स्वयमप्यंशुमत्प्रभम् ।
ध्वजं च सिंहमुच्छ्रित्य सारथ्ये समकल्पयत् ॥ २०
धनूंषि च महार्हाणि बाणांश्च रुचिरान्बहून् ।
आदाय प्रययौ वीरः स बृहन्नडसारथिः ॥ २१
अथोत्तरा च कन्याश्च सख्यस्तामब्रुवंस्तदा ।
बृहन्नडे आनयेथा वासांसि रुचिराणि नः ॥ २२
पाञ्चालिकार्थं सूक्ष्माणि चित्राणि विविधानि च ।
विजित्य संग्रामगतान्भीष्मद्रोणमुखान्कुरून् ॥ २३
अथ ता ब्रुवतीः कन्याः सहिताः पाण्डुनन्दनः ।
प्रत्युवाच हसन्पार्थो मेघदुन्दुभिनिःस्वनः ॥ २४
यद्युत्तरोऽयं संग्रामे विजेष्यति महारथान् ।
अथाहरिष्ये वासांसि दिव्यानि रुचिराणि च ॥ २५
एवमुक्त्वा तु बीभत्सुस्ततः प्राचोदयद्धयान् ।
कुरूनभिमुखाञ्शूरो नानाध्वजपताकिनः ॥ २६

इति श्रीमहाभारते विराटपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

18 $^{d}$) Dn$_1$ D$_2$ प्रहसन् (for प्राह°). — For 18, S subst.:

638* तमाददानं प्रमदा जहासिरे
ह्यधोमुखं वीरवरोऽभ्यहारयत् ।
ततस्तिरश्चीनकृत सपत्नहा
ह्यधोमुखं कवचमथाभ्यकर्षयत् ।
सम्यक्प्रजानन्नपि सत्यविक्रमो
ह्यज्ञातवत्सर्वकुरुप्रवीरः ।
ऊर्ध्वं क्षिपन्वीरवरोऽभ्यहारय-
त्पुनश्च यत्नात्कवचं धनंजयः ।
एवंप्रकाराणि बहूनि कुर्वति
तस्मिन्कुमार्यः प्रमदा जहासिरे ।

[ M$_2$ om. lines 3–6; M$_3$ om. lines 3–4. — (L. 5) G$_3$ M स नाम जानन्नपि (for सम्यक्प्रजानन्नपि). — (L. 6) G$_{1.3}$ सह्यकृतप्र° (for सर्वकुरुप्र°). — (L. 8) G$_2$ M पुनर्नि(G$_2$ पुनश्च)यंता वचनात् (M$_{2.3}$ °नं) धनंजयः. ]

19 $^{a}$) B (except B$_5$) D$_{2.5.6.8.10}$ तं (for तु). K विमुह्यंती; B$_3$ D$_{5.6}$ पिनह्यंतं; B$_4$ विमुंचंतं; Dn$_2$ विमुच्यंतं; D$_{1.3}$ Cc.r विनह्यंतं; Ccp विपर्यस्तं; Cv विमुह्यंतं (as in text). — $^{b}$) B$_2$ D$_{4.5}$ तदा (for ततः). D$_8$ तथोत्तरः (for उत्तरस्ततः). — For 19, S subst.:

639* तथा विकुर्वन्तममित्रकर्शनं
नैवोत्तरः पर्यभवद्धनंजयम् ।
तं राजपुत्रः समनाहयत्स्वयं
जाम्बूनदान्तेन शुभेन वर्मणा ।
कृशानुतप्तप्रतिमेन भास्वता
जाज्वल्यमानेन सहस्ररश्मिना ।

[ (L. 2) G$_{1.2}$ पर्यहसद् (for °भवद्). — (L. 4) T$_2$ जांबू° दढेन; M °नदांताकृपणेन (M$_1$ °भरणेन; M$_8$ °वरणेन). ]

20 $^{a}$) B D$_{5.6}$ बभार (for स बिभ्रत्). Dn$_2$ D$_{11.12}$ दिव्यं (for चाग्र्यं). — $^{c}$) K चारुम्; D$_7$ सैंहम् (for सिंहम्). B (except B$_4$) D$_{1.5.6.9.11.12}$ ध्वजं सिंहं (D$_9$ सैंहं) समुच्छ्रित्य. — $^{d}$) B D$_{5.6}$ सारथ्यं; Dn$_2$ D$_{11.12}$ सारथिं (for सारथ्ये). — For 20, S subst.:

640* अथास्य शीघ्रं प्रसमीक्ष्य योजय-
द्रथे हयान्काञ्चनजालसंवृतान् ।
सुवर्णजालान्तरयोक्तृभूषणा-
न्सिंहं च सौवर्णमुपाश्रयद्रथे ।

21 $^{a}$) S विचित्राणि (for महा°). — $^{b}$) D$_{1.3}$ निषंगान्; M$_5$ शरांश्च (for बाणांश्च). D$_4$ विपुलान्; G$_1$ विविधान् (for रुचिरान्). K रुचिराननान् (for °रान्बहून्). — After 21$^{ab}$, S ins.:

641* आयुधानि च वै तत्र रथोपस्थे च संन्यसत् ।

[ M$_{1.2}$ च संन्यधात्; M$_3$ च संह ***; M$_5$ उपाहरत् (for च संन्यसत्). ]

— $^{c}$) S (except T$_1$ G$_1$ M$_5$) आरुह्य (for आदाय).

22 $^{b}$) S चैव (for ताम्). — $^{d}$) B Dn D$_{4–7.9–12}$ M$_4$ (*inf. lin.* as in text) च (for नः).

23 $^{a}$) B$_4$ पांचालिकानि; G$_3$ (*inf. lin.*) बालकार्थं च; Ca as in text. Cc.r.s cite पाञ्चालिका. B$_{2.3.5}$ Dn$_1$ D$_{2.5}$ चित्राणि (for सूक्ष्माणि). — $^{b}$) B (except B$_4$) Dn$_1$ D$_5$ सूक्ष्माणि; D$_{1–3}$ दिव्यानि; S रत्नानि (for चित्राणि). B Dn$_1$ D$_5$ च मृदूनि (B$_4$ रुचिराणि) (for विविधानि). — $^{d}$) Dn$_2$ D$_{8.11.12}$ G$_3$ बहून् (for कुरून्). D$_{1–3}$ भीष्मद्रोणपुरोगमान्.

24 $^{a}$) B Dn D$_{5.6.10–12}$ एवं (for अथ). — $^{b}$) K$_1$ D$_{1.3.8}$ संहिताः; K$_2$ हसिताः; G$_1$ सस्मितः; G$_3$ सुस्थिताः (for सहिताः). K कुंतिनंदनः; S (except T$_2$) कुरुनंदनः

# ३६

वैशंपायन उवाच ।
स राजधान्या निर्याय वैराटिः पृथिवींजयः ।
प्रयाहीत्यब्रवीत्सूतं यत्र ते कुरवो गताः ॥ १
समवेतान्कुरून्यावज्जिगीषूनवजित्य वै ।
गाश्चैषां क्षिप्रमादाय पुनरायामि स्वं पुरम् ॥ २
ततस्तांश्चोदयामास सदश्वान्पाण्डुनन्दनः ।
ते हया नरसिंहेन चोदिता वातरंहसः ।
आलिखन्त इवाकाशमूहुः काञ्चनमालिनः ॥ ३ C. 4. 1233 B. 4. 38. 3 K. 4. 39. 4

(M5 °सत्तमः). — D1 is missing from 4. 35. 24ᶜ up to 4. 36. 39ᶜ. — ᶜ) D4.7 उवाच प्रहसन्पार्थः. — ᵈ) G1 ताश्च (for मेघ-). D2.3 °गंभीर°. Many MSS. निस्वनः (for निःस्वनः).

25 D1 missing (cf. v. l. 24). Before 23, N (Ś1 D1 missing) ins. बृहन्नडो(*or* °लो)वाच. — ᵃ) D8.10 यत् (for यदि). — ᵇ) G1.3 जेत्स्यतेति (for विजेष्यति). D2.3 महारथः. — ᶜ) B2.4.5 D5.6 तदा (for अथ). D2.3 आहरिष्यामि वासांसि. — ᵈ) Dn2 D8 विविधानि (for रुचिराणि). T G2 M सूक्ष्माण्याभरणानि च; G1.3 सूक्ष्माणि विविधानि च.

26 Before 26, all MSS. (Ś1 D1 missing) ins. वैशं° उ° (resp. वैशं°), which latter, in D6, is followed by 643* (see below). — ᵇ) D8.10 प्राणोदयत् (for प्राचोदयत्). — ᶜ) B Dn D5.6.8.10–12 °मुखः (for °मुखान्). D4.6.8 शूरान् (for शूरो). — For 26, S subst.:

642* अथोत्तरो वर्म महाप्रभावं
सुवर्णवैडूर्यपरिष्कृतं दृढम् ।
आमुच्य वीरः प्रययौ रथोत्तमं
धनंजयं सारथिनं प्रगृह्य ।

[ (L. 1) G1.3 °प्रतापः (for °प्रभावं). — (L. 3) T1 G2 रथेन (for रथोत्तमं). — (L. 4) G ins. तं after प्रगृह्य. ]

B Dn D5.9–12 S ins. after 26: D6, after (the interpolated) वैशं° उ° (see above):

643* तमुत्तरं वीक्ष्य रथोत्तमे स्थितं
बृहन्नडायाः सहितं महाभुजम् ।
थोचुरङ्गनाः ।
यदर्जुनस्यर्षभतुल्यगामिनः [5]
पुराभवत्खाण्डवदाहमङ्गलम्
कुरून्समासाद्य
सहोत्तरेणास्तु तदद्य मङ्गलम् ।

[ (L. 1) S प्रेक्ष्य (for वीक्ष्य). B4.5 D6 रथोत्तम(B4 °र)स्थं. — (L. 2) S बृहन्नलां चैव महाजनस्तदा. — (L. 3) B2 Dn2 D5.9–12 सुसंयतव्रताः; B4 द्विजाश्च सन्मताः (for द्विजाश्च सुव्रताः). — (L. 4) B1.3 (m as in text) D6 अथोत्तरं तदा; B5 अथो दिशश्च; Dn1 सुहृष्टवत्तदा (for अथोचुरङ्गनाः). S प्रदक्षिणं मंगलिनो ह्य(T2 M1.5 °नश्च; G2 °नोभ्य-; M2.3 °नं च; M4 °नस्त्व)पूजयन् (M1 चक्रिरे; M5 चक्रुः). — (L. 5) B4 यदर्जुनस्यास्य गजेंद्रगामिनः; D6 यदर्जुनस्योत्तमगामिनः पुरा. — (L. 8) Dn1 D9 T2 G1 M3 transp. अस्तु and अद्य. B2 S तव (for तद्). ]

Colophon. Ś1 could not be collated; D1 missing; D7 om. it. — *Sub-parvan:* K1 गोग्रह; B1–4 Dn D2–6. 8.9.11.12 उत्तरगोग्रह; T G2 M1.2.5 गोग्रहण. — *Adhy. name:* B Dn1 D8.10 T2 M2–4 उत्तरनिर्याणं; D3 रथारोहणं; T1 G2 बृहन्नलासारथ्ये उत्तरनिर्याणं. — *Adhy. no.* (figures, words or both): K1 B4 D10 35; D3.9 M2–4 36; D5 33; D6 34; T G M1.5 37. — *S'loka no.:* D8 29.

## 36

Ś1 is missing up to st. 4 (cf. v. l. 4. 34. 4); D1 is missing up to 39ᶜ (cf. v. l. 4. 35. 22).

1 ᵇ) B2 Dn1 D5 (m as in text) अकुतोभयः; Ca पृथिवींजयः (as in text). — ᵈ) D2.3 स्थिताः (for गताः).

2 ᵃ) B Dn1 D5.6.10 सर्वान्; D2 यास्ये; D7–9 याहि; G1 आवां (for यावत्). — ᵇ) D8 जिगीषुर् (for °षून्). B4 च विजित्य (for अवजित्य). S (except G1.2) च (for वै). B2 D2.5.6.10 विजिगीषून्विजित्य वै. — ᶜ) Dn D11.12 तेषां; S चैताः (for चैषां). B1–3.5 D6 गाश्चैवै(D6 °ते)षां समादाय; D2.3.8 गाश्च क्षिप्रं समादाय. — ᵈ) B1–3.5 Dn D5.6.8.10–12 एष्यामि (for आयामि). K Dn1 D2.3 अहं; S मत् (G2 तत्) (for स्वं). B4 पुनरायां स्वकं पुरं; D4.5 m.7.9 प्रवेक्ष्यामि निजं पुरं.

3 ᵃ) B4 तान्देश°; D2.3 प्रनोद°; D8 तान्प्रेर° (for तांश्चोद°). — ᶜ) D8.10 नरदेवेन (for °सिंहेन). — ᵈ) B2 Dn1 D2–4.7 नोदिता; B4 देशिता; D8 प्रेरिता (for चोदिता). S शीघ्रवाहिनः (G1.3 M4 °गामिनः) (for वातरंहसः). — D8 om. 3ᵉᶠ. — ᵉ) K2 B2 आलिहंतः; D5 आलिह्यंतः;

C. 4. 1233 B. 4. 38. 4 K. 4. 39. 5 नातिदूरमथो यात्वा मत्स्यपुत्रधनंजयौ ।
अवेक्षेताममित्रघ्नौ कुरूणां बलिनां बलम् ।
श्मशानमभितो गत्वा आससाद कुरूनथ ॥ ४
तदनीकं महत्तेषां विबभौ सागरस्वनम् ।
सर्पमाणमिवाकाशे वनं बहुलपादपम् ॥ ५
ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ।
दृष्टिप्रणाशो भूतानां दिवस्पृङ्नरसत्तम ॥ ६
तदनीकं महद्दृष्ट्वा गजाश्वरथसंकुलम् ।
कर्णदुर्योधनकृपैर्गुप्तं शांतनवेन च ॥ ७
द्रोणेन च सपुत्रेण महेष्वासेन धीमता ।
हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत् ॥ ८
नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे ।
बहुप्रवीरमत्युग्रं देवैरपि दुरासदम् ।
प्रतियोद्धुं न शक्ष्यामि कुरुसैन्यमनन्तकम् ॥ ९
नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम् ।
रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम् ।
दृष्ट्वैव हि परानाजावात्मा प्रव्यथतीव मे ॥ १०
यत्र द्रोणश्च भीष्मश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः ॥ ११
दुर्योधनस्तथा वीरो राजा च रथिनां वरः ।

Cc.v आलिखंतः (as in text). D4 आलिखंस्तद्ददाकाशं. — f) B4 ययुः; Cr बभुः; Cc.rp (Cat.) ऊहुः (as in text). — Ca cites $3^{ef}$ entirely as in text.

4 a) B (except B2) D (except D4.7.9; D1 missing) T G2 गत्वा (for यात्वा). — b) S मात्स्य- (G1 मत्स्य-; M1 राज-). — c) B4 D5.6 M5 अवैक्षेताम्; Dn1 D4.7 M1.2.4 अवेक्षताम्; D2 अवेक्षितम्; D3 अवेक्षते (for अवेक्षेताम्). S (except T2 G1) अवित्रस्तौ (for अमित्रघ्नौ). — e) D6 भूत्वा; M2 यात्वा (for गत्वा). — f) D2.3.8 (for avoiding hiatus!) व्याससाद (for आस°). B4 D4.7.9 तदा; Dn2 D2.3.8.10–12 असौ (for अथ). S शूरौ ददृशतुः कुरून्. — After 4, N (Ś1 D1 missing) ins.:

644* तां शमीमन्ववीक्षेतां व्यूढानीकांश्च सर्वशः ।

[ B D5.6 तत्समीपे (for तां शमीम्). K Dn2 D11.12 अन्ववैक्षच्च; B D3.5.8 °वैक्षेतां; D2 °वीक्षेथा; D4.7.9 °वेक्ष्याथ; D7m.10 °वेक्षेतां; D8 °वेक्ष त्वं. B3–5 D5.6 व्यूढानीकं च (for °नीकांश्च). K D2–4.7–9 गच्छतः (for सर्वशः). ]

5 Ś1 resumes. — b) B (except B4) विततं (for विबभौ). Ś1 B4 Dn1 D10 सागरोपमं (for सागरस्वनम्). — c) Dn1 भ्रम° (for सर्प°). S संसर्प(T G1.3 °स्पर्श)-माण(*or* °न)माकाशे.

6 b) T G1 सर्वशः; G2 M4 सर्वतः (for सर्पता). — d) G2 M4.5 दिविस्पृङ्. B1.3.5 Dn2 D10–12 कुरु° (for नर°).

7 a) Dn1 D3.4.6 तदानीकं. S अथो वी(M1 -द्री)क्ष्य (M2 अथालक्ष्य) (for महद्दृष्ट्वा). — b) M1.2 रथाश्वगजसं°. — c) D4 °मुखैर् (for °कृपैर्).

8 a) D6 अपि (for च). K2 B3 Dn1 D3 G M2.4.5 द्रोणेन सहपुत्रेण. — After $8^{ab}$, D2 (marg.) ins.:

645* तेषां तत्सैन्यमतुलं दृष्ट्वा भयविवर्धनम् ।

9 Before 9, N (D1 missing) ins. उत्तर उवाच; T1 वैराटिः; T2 M5 उत्तरः. — b) B2.3.5 D2–6.8.10 S च (for हि). — c) D4 °प्रवीरसंयुक्तं; cf. Cv. — e) Ś1 B3 D3.6.7 शक्यामि; S शक्नोमि (cf. v. l. $16^{c}$). — f) T1 G भयानकं; T2 M भयंकरं (for अनन्तकम्).

10 a) M1.4 कौरवीं (for भारतीं). — b) Ś1 घोर° (for भीम°). — After $10^{ab}$, S ins.:

646* देवैरपि सहेन्द्रेण न शक्यं किं पुनर्नरैः ।

— c) S °कलिलं. — d) D3 S °समाकुलं. — e) D4 च; G1.3 तु (for हि). B3(m as in text).4 D5(m as in text).6 Cc पुरोया(B3 D8 Cc °जा)तां; D3 परानेतान्; D7 परा ग्लानिर्; S परानीकं (for परानाजौ). — f) B Dn D5(m as in text).6.10–12 S मनः (for आत्मा). D8 प्रव्यथितं मम (m प्रव्यथतीव मे as in text).

11 ab) D6 transp. भीष्मः and कर्णः. Ś1 यत्र द्रोणश्च कर्णश्च कृपश्चैव वि°. — d) D4.9 सोमदत्तिश्. B Dn D4.5.7–12 च (for अथ).

12 a) S तदा (T2 M1.5 °था) राजा (for तथा वीरो). — b) D5 बलिनां (m रथिनां as in text). Ś1 K राजा परमदुर्लभः (Ś1 °दुर्जयः); S वीरो (M1 ततो) दुर्मर्षणः पटुः (G1 परः). — c) S धृति° (for द्युति°). — T1 G (G1 om. line 5) ins. after 12: T2 M5, after $13^{ab}$: M1.3 ins. lines 1–2 after $13^{ab}$ and lines 3–6 after 13: M2.4 (om. lines 1–2 along with $13^{ab}$), after 13:

647* मत्ता इव महानागा युक्तध्वजपताकिनः ।
नीतिमन्तो महेष्वासाः सर्वास्त्रकृतनिश्चयाः ।

द्युतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः ॥ १२
दृष्ट्वैव हि कुरूनेतान्व्यूढानीकान्प्रहारिणः ।
हृषितानि च रोमाणि कश्मलं चागतं मम ॥ १३
वैशंपायन उवाच ।
अवियातो वियातस्य मौर्ख्याद्धूर्तस्य पश्यतः ।
परिदेवयते मन्दः सकाशे सव्यसाचिनः ॥ १४
त्रिगर्तान्मे पिता यातः शून्ये संप्रणिधाय माम् ।
सर्वां सेनामुपादाय न मे सन्तीह सैनिकाः ॥ १५
सोऽहमेको बहून्बालः कृतास्त्रानकृतश्रमः ।
प्रतियोद्धुं न शक्ष्यामि निवर्तस्व बृहन्नडे ॥ १६
अर्जुन उवाच ।
भयेन दीनरूपोऽसि द्विषतां हर्षवर्धनः ।
न च तावत्कृतं किंचित्परैः कर्म रणाजिरे ॥ १७
स्वयमेव च मामात्थ वह मां कौरवान्प्रति ।
सोऽहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः ॥ १८
मध्यमामिषगृध्राणां कुरूणामाततायिनाम् ।
नेष्यामि त्वां महाबाहो पृथिव्यामपि युध्यताम् ॥ १९
तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च ।
कत्थमानोऽभिनिर्याय किमर्थं न युयुत्ससे ॥ २०
न चेद्विजित्य गास्तास्त्वं गृहान्वै प्रतियास्यसि । C. 4. 1253 B 4. 38. 23 K. 4. 39. 27

---

दुर्जयाः सर्वसैन्यानां देवैरपि सवासवैः ।
पताकिनश्च मातङ्गाः सध्वजाश्च महारथाः ।
विप्रकीर्णाः कृतोद्योगा वाजिनश्चित्रभूषिताः । [5]
तांश्चैतु समरे शूरान्दुर्बुद्धिरहमागतः ।

[ (L. 4) G1 योधा मत्ता गजा मत्ता वाजिनो वेगिता भृशं. ] Thereafter M1. 3. 5 *repeat* 13$^{cd}$.

13 M2. 4 om. 13$^{ab}$. — $^{a}$) S (M2. 4 om.) सर्वान् (for एतान्). — After 13$^{ab}$, T2 M5 ins. 647*, while M1. 3 ins. lines 1–2 only of that passage; after 13, M1–4 ins. lines 3–6 of 647*; after 647*, M1. 3. 5 *repeat* 13$^{cd}$.

14 $^{a}$) K D7 अपि यातोपि (D7 °तो वि-) या°; B Dn D2. 3. 6. 10 Cr.ap अविजातो विजातस्य; Cc.v.rp as in text. Cs cites वियातः ❀Cn: प्राचां तु सयकारः पाठः । तदा वियातो धृष्टः । अवियातोऽप्रगल्भः ।❀ — $^{b}$) B3 D2. 3. 6 m. 8 मूर्खो; Dn1 D5. 6 Cr.ap मौर्ख्यं; D9 मौढ्याद् (for मौर्ख्याद्). — For 14$^{ab}$, S subst.:

648* दृष्ट्वा तु महतीं सेनां कुरूणां दृढधन्विनाम् ।

— $^{c}$) G1 मंदं (for मन्दः). — $^{d}$) D4 समीपे (for सकाशे). G1 सेनां दृष्ट्वा जनाग्रतः. Ca cites the whole stanza as in text, with only मूर्खो for मौर्ख्याद्.

15 Before 15, K2 D4. 5 (marg.). 7–9 T1 G2 ins. उत्तरः. — $^{b}$) B (except B4) D4–6 अस्मिन्; S वै (for सं-). B (except B4) D5. 6 संनि° (for -प्रणि°). — $^{c}$) S समा° (for उपा°). — $^{d}$) D2. 3 बले (D3 न मे) तिष्ठंति सैनिकाः.

16 D8 om. 16$^{ab}$. — $^{a}$) S अहम् (for सोऽहम्). D4 एतान् (for बालः). — $^{c}$) Ś1 Dn2 D5. 6. 11. 12 शक्यामि; B2 S शक्नोमि; D4 पश्यामि (cf. v. l. 9$^{c}$). — $^{d}$) S निवर्तय (for °र्तस्व). — After 16, S ins.:

649* वैशंपायनः ।
तं तथावादिनं तत्र बीभत्सुः प्रत्यभाषत ।
संप्रहस्य पुनस्तं वै सर्वलोकमहारथः ।

17 N (D1 missing) बृहन्नडा (*or* °ला) (for अर्जुनः). — $^{a}$) D3 वातिदीनो (for दीनरूपो). S भयादुदीर्णरूपोसि (T1 G2 °द्विदीर्णहृदयो). — $^{b}$) Some MSS. हर्षवर्धन. — $^{c}$) B (except B4) Dn1 D3. 8–10 transp. किंचित् and कर्म (in $^{d}$). Ś1 न चैव च परैः किंचित्; K भवेन्न च कृतं किंचित्. — $^{d}$) Ś1 कृतं (for परैः).

18 $^{b}$) Ś1 K बहुशः (for वह मां). — $^{c}$) Ś1 K G3 अत्र; B (except B1) D2–7. 10 Ca अद्य; D3 Cv उप- (for तत्र). B2 रक्षामि; B3–5 Ca वक्ष्यामि; Cc.v नेष्यामि (as in text). — $^{d}$) Ś1 Dn1 D2. 4 G1. 3 M3 ते; D5 इमे; T2 एव (for एते). Ś1 M3 बहवो; K बहुशो (for बहुला).

19 $^{a}$) MSS. °गृद्धानां, °गृध्रीनां, °गृध्नूनां etc. (for °गृध्राणां). — $^{b}$) T1 G2 सेनानाम्; M5 द्विषताम् (for कुरूणाम्). — $^{d}$) K1 पार्थिवानां हि युध्यतां; D9 पृथिवीमपि यु°; S मा त्वं हि विमना भव; Ca as in text. Cc.v cite पृथिव्यां, Cr पृथिव्यामपि. — After 19, S (M1 om. line 2) ins.:

650* समुद्रमिव गम्भीरं कुरुसैन्यमरिंदम ।
स्त्रीसकाशे प्रतिज्ञाय पुरुषाणां हि श्रृण्वताम् ।
विकत्थमानो निर्यात्वा ब्रूहि किं नात्र बुध्यसे ।

[ (L. 1) M1 भयंकरं (for अरिंदम). — (L. 2) G1. 3 अश्रृण्वतां (for हि श्रृ°). — (L. 3) M5 युध्यसे (for बु°). ]

20 M1 om. 20$^{cd}$; M3 om. 20. — $^{cd}$) Ś1 °भिनिर्यातः किम°; D3 उक्तो भवति यः पूर्वं किम°. S (M1. 3 om.) रथमारुह्य (M2 °स्थाय) निर्यात्वा (M2 °य) किमर्थं न च

C. 4. 1253 B. 4. 38. 23 K. 4. 39. 27 प्रहसिष्यन्ति वीर त्वां नरा नार्यश्च संगताः ॥ २१
अहमप्यत्र सैरन्ध्या स्तुतः सारथ्यकर्मणि ।
न हि शक्ष्याम्यनिर्जित्य गाः प्रयातुं पुरं प्रति ॥ २२
स्तोत्रेण चैव सैरन्ध्यास्तव वाक्येन तेन च ।
कथं न युध्येयमहं कुरून्सर्वान्स्थिरो भव ॥ २३

उत्तर उवाच ।

कामं हरन्तु मत्स्यानां भूयांसं कुरवो धनम् ।
प्रहसन्तु च मां नार्यो नरा वापि बृहन्नडे ॥ २४

वैशंपायन उवाच ।

इत्युक्त्वा प्राद्रवद्भीतो रथात्प्रस्कन्द्य कुण्डली ।
त्यक्त्वा मानं स मन्दात्मा विसृज्य सशरं धनुः ॥ २५

बृहन्नडोवाच ।

नैष पूर्वैः स्मृतो धर्मः क्षत्रियस्य पलायनम् ।
श्रेयस्ते मरणं युद्धे न भीतस्य पलायनम् ॥ २६

वैशंपायन उवाच ।

एवमुक्त्वा तु कौन्तेयः सोऽवप्लुत्य रथोत्तमात् ।
तमन्वधावद्धावन्तं राजपुत्रं धनंजयः ।
दीर्घां वेणीं विधुन्वानः साधु रक्ते च वाससी ॥ २७
विधूय वेणीं धावन्तमजानन्तोऽर्जुनं तदा ।
सैनिकाः प्राहसन्केचित्तथारूपमवेक्ष्य तम् ॥ २८

योत्स्यसे.

21 $^{a}$) $B_{1.3.5}$ गास्तास्तु; $D_{10}$ गास्त्वेता; $T_{1}$ G गास्त्वं वै ($G_{1.3}$ हि); $T_{2}$ $M_{3.4}$ गावस्ता ($T_{2}$ °स्त्वं); $M_{1.2.5}$ गाश्च त्वं (for गास्तास्त्वं). — $^{b}$) $B_{4}$ गृहं वै; S नगरं (for गृहान्वै). $B_{1.3.5}$ गृहांश्चैव प्रयास्यसि. — $^{c}$) $Ś_{1}$ B (except $B_{2}$) Dn $D_{2-4.8.11.12}$ T $G_{2}$ $M_{4}$ वीरास् (for वीर). — $^{d}$) $Ś_{1}$ संघशः; $M_{1.4}$ नागराः (for संगताः).

22 $^{a}$) S (except $T_{2}$ $G_{1.3}$) अस्मि (for अत्र). Here and below $B_{4}$ $D_{6}$ सैरिंध्री (for सैरन्ध्री). — $D_{3}$ (hapl.) om. $22^{b}$–$23^{a}$. — $^{b}$) $B_{1}$ Dn $D_{11.12}$ ख्याता; $D_{10}$ ख्यातः; $T_{2}$ ततः; $M_{5}$ स्थितः (for स्तुतः). $D_{7}$ $G_{2}$ सारथिकर्मणि. — $^{c}$) B (except $B_{4}$) $Dn_{1}$ $D_{5-8}$ च; S अहं (for हि). $Ś_{1}$ $B_{3}$ $D_{5}$ शक्यामि; $D_{6}$ S शक्नोमि ($T_{2}$ शक्तो न; $M_{4}$ शक्तो हि); $D_{8}$ शिष्यामि (cf. v. l. 9, 16).

23 $D_{3}$ om. $23^{a}$ (cf. v. l. 22). — $^{a}$) K $B_{3}$ एव च (for चैव). — $^{b}$) $D_{8}$ चैव हि; S चोदितः (for तेन च). — $^{d}$) S (except $T_{1}$) एतान् (for सर्वान्).

24 $^{a}$) $T_{1}$ $G_{2}$ मात्स्यानां. — $^{b}$) Only $T_{2}$ M भूयांसं (as in text); the rest ($D_{1}$ missing) भूयांसः. — After $24^{ab}$, $D_{7}$ ins. (what is probably a gloss on the आततायिनाम् of 19):

651* अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ।
आततायिनमायान्तमपि वेदाङ्गपारगम् ।
जिघांसन्तं जिघांसीयान्न नरो ब्रह्महा भवेत् ।

— $^{d}$) $B_{4}$ $Dn_{2}$ $D_{11.12}$ S (except $T_{1}$) च (for वा). — B Dn $D_{2}$(marg.)$_{.5-7.10-12}$ S (except $M_{2}$) ins. after 24 ($G_{1}$, which om. उवाच, ins. after उत्तरः):

652* संग्रामेण न मे कार्यं गावो गच्छन्तु चापि मे ।
शून्यं मे नगरं चापि पितुश्चैव बिभेम्यहम् ।

[ Before line 1, $D_{7}$ ins.:

653* क्षीरं वा दधि वाज्यं वा तक्रं वा न पिबाम्यहम् ।
आरनालं हि पास्यामि न मे गोभिः प्रयोजनम् ।

— (L. 1) $B_{1}$ $Dn_{1}$ संग्रामे न च मे कार्यं; $Dn_{2}$ $D_{11.12}$ युद्धेन नास्ति कार्यं मे (for prior half). B $Dn_{2}$ $D_{5.6.11.12}$ $T_{2}$ वा (for च). — For line 2, S (except $M_{2}$) subst.:

654* नगरं च प्रवेक्ष्यामि पश्यतस्ते बृहन्नले ।

— After line 2, $B_{2-4}$ $D_{6}$ cont.:

655* निवर्तय रथं तूर्णं हृदयं मे विदीर्यते ।,

while $D_{2}$ (marg.) cont.:

656* वरं कालेन जीवक्षभुन् न मे गोभिः प्रयोजनम् ।
यद्यहं जीवमानस्तु गच्छामि नगरं प्रति । ]

On the other hand, $D_{4}$ ins. after 24:

657* भोजनं गोरसैर्हीनं काञ्जिकेनाप्यतः परम् ।
भोक्ष्येऽहं बहुभिर्वापि यास्ये बालो मृतेर्भयात् ।

25 $^{a}$) $D_{5}$ एवमुक्त्वाद्रवद्भीतः. — $^{c}$) $Ś_{1}$ K आसनं; $B_{3}$ दर्पं (for मानं). B Dn $D_{5.11.12}$ च दर्पं ($B_{3}$ मानं) च; $D_{2.3.7-9}$ सु($D_{3}$ तु)मंदात्मा; $D_{6}$ च धर्मज्ञ; S सुसंत्रस्तो (for स मन्दात्मा).

26 $G_{1}$ अर्जुनः (for बृहन्नडा). — $^{a}$) $B_{1}$ Dn $D_{9.11.12}$ शूरैः; $D_{6}$ पूर्वः; $D_{10}$ पूर्वं; $T_{2}$ M पूर्व- (for पूर्वैः). — $^{b}$) $B_{4}$ $D_{8}$ क्षत्रियाणां (for °यस्य). — $K_{1}$ (hapl.) om. $26^{cd}$. — $^{c}$) $Ś_{1}$ $B_{2}$ Dn $D_{11.12}$ तु; $T_{1}$ $G_{3}$ M हि; $G_{1.2}$ अस्य (for ते). $T_{2}$ श्रेयसे (for श्रेयस्ते). — $^{d}$) $B_{1.3.5}$ न तु श्रेयः पलायनं; S क्षत्रियस्य पलायनात्.

27 $^{a}$) S इति चोक्त्वा (for एवमुक्त्वा). $T_{1}$ $G_{2}$ अथ; $G_{1}$ $M_{4}$ स; $G_{3}$ $M_{5}$ च (for तु). — $^{b}$) S रथादवततार ह. — K S transp. $27^{cd}$ and $27^{ef}$. — $^{c}$) S अन्वधावन्महाबाहुः. — $^{e}$) S दीर्घवेणीं. $T_{1}$ $G_{2.3}$ $M_{1-4}$ वि($G_{2}$ च)धून्वानः. — After 27, S ins.:

तं शीघ्रमभिधावन्तं संप्रेक्ष्य कुरवोऽब्रुवन् ।
क एष वेषप्रच्छन्नो भस्मनेव हुताशनः ॥ २९
किंचिदस्य यथा पुंसः किंचिदस्य यथा स्त्रियः ।
सारूप्यमर्जुनस्येव क्लीबरूपं बिभर्ति च ॥ ३०
तदेवैतच्छिरोग्रीवं तौ बाहू परिघोपमौ ।
तद्वदेवास्य विक्रान्तं नायमन्यो धनंजयात् ॥ ३१
अमरेष्विव देवेन्द्रो मानुषेषु धनंजयः ।
एकः कोऽस्मानुपायायादन्यो लोके धनंजयात् ॥ ३२
एकः पुत्रो विराटस्य शून्ये संनिहितः पुरे ।
स एष किल निर्यातो बालभावान्न पौरुषात् ॥ ३३
सत्रेण नूनं छन्नं हि चरन्तं पार्थमर्जुनम् ।
उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः ॥ ३४
स नो मन्ये ध्वजान्दृष्ट्वा भीत एष पलायति ।
तं नूनमेष धावन्तं जिघृक्षति धनंजयः ॥ ३५ C. 4. 1269 B 4. 38. 38 K. 4. 39. 47

658* विक्रमन्तं पदन्यासैर्नमयन्निव भूतलम् ।
[ T1 G2.3 नमयंतं च; G1 निर्मथंतं च (for नमयन्निव). ]

28 a) K धुन्वंतं (for धावन्तं). B4 तथा तमनुधावंतं. — d) T1 G2 M केचिद्रूपम्; T2 योषिद्रूपम्; G1.3 तस्य रूपम् (for तथारूपम्). D4.8 तां; S च (for तम्).

29 a) B3 D4.5.8.10 सु- (for तं). B4 अनु-; D2.4 अपि (for अभि-). S तं च शीघ्रं प्रधावंतं. — b) M1.3 अवेक्ष्य (for संप्रेक्ष्य). — After $29^{ab}$, S ins.:

659* सैनिकाः ।
कोऽयं धावत्यसंगेन पूर्वं मुक्त्वा रथोत्तमम् ।

— c) A few MSS. वेश- (for वेष-). Ś1 B1 Dn D2.11.12 T2 °संछन्नो (for °प्रच्छन्नो). B4 एष वेशपरिछन्नो; G2 एक एवैष प्रच्छन्नो. — d) Ś1 B1.2 Dn D11.12 भस्मन्येव (for °नेव). G1 भस्मच्छन्न इवानलः.

30 ab) S (except M1.5; M4 *inf. lin.*) both times तस्य (for अस्य). — After $30^{ab}$, S ins.:

660* इत्येवं सैनिकाः प्राहुर्द्रोणस्तानिदमब्रवीत् ।
आचार्यः कुरुपाण्डूनां मतौ शुक्राङ्गिरोपमः ।
किं विचारेण वः कार्यमेतेनानुसृतेन वै ।
धावन्तमनुधावंश्च निर्भयो भयविह्लुतम् ।
वेणीकलापं निर्धूय प्रविभाति नरर्षभः ।
[ (L. 3) T1 G1.3 नः (for वः). M किं विचारणया कार्यं (for prior half). ]

— c) D4.7–9 स्वरूपं; S आकारं (for सारूप्यम्). T G ह्यर्जुनस्यैव. — d) D8 क्लैब्य° (for क्लीब°). — After 30, S (except G1) ins.:

661* रूपेण पार्थसदृशः स्त्रीवेषसमलंकृतः ।

31 b) M1.2 बाहू च (for तौ बाहू). — c) K तद्वच्चैव; B4 तत्तदेव; S तत् (M5 तं) तथैव (T2 तथैव च) (for तद्वदेव). — After 31, M2.4.5 ins. 662* (cf. v. l. 32).

32 D2 om. $32^{ab}$ and reads $32^{cd}$ in marg. after 35; D8 M2.4.5 om. (hapl.) 32. — a) Ś1 D3 एकदेवेंद्रो; K D7 एक एवेंद्रो; D10 च देवेंद्रो; D11.12 एव देवेंद्रो (for इव देवेन्द्रो). D4 अयं सुरेषु देवेंद्रो. — b) MSS. मानवेषु, मनुष्येषु also (for मानुषेषु). — c) Ś1 को नु हि; D3 एको हि; D7 एकोपि (for एकः को). B4 उपायुज्येत्; D2.4 उपादी(D4 °दे)yात्; D3.6.7 उपायाति (for उपायायात्). T G2 M1.3 एकोस्माननुयात्येष; G1 कोस्मानेकोनुयाति स्म; G3 एकोस्माननुयान्नान्यः. — d) D3.7 T1 G2 M1.3 नान्यो; D6 विना; G1 कोन्यो; G3 को हि (for अन्यो). T2 नायमन्यो धनंजयात्. — S ins. after 32 (M2.4.5, which om. 32, after 31):

662* द्रोणेन चैवमुक्ते तु कर्णः प्रोवाच बुद्धिमान् ।
[ T G1 चैवमुक्तस्तु. ]

33 Before 33, S (except G1) ins. कर्णः. K1 om. $33^{cd}$. — c) D2.4 एव; D7.9 एकः (for एष). K2 स एकाकी विनिर्यातो. — d) D7.9 बालत्वान्न तु पौरुषात्. — After 33, G2 M1.3.5 ins. (cf. $34^{cd}$):

663* क्लीबं वै सारथिं कृत्वा निर्यातो नगराद्बहिः ।

34 M2.4 om. $34^{ab}$; T G3 M1.3 transp. $34^{ab}$ and $34^{cd}$; G1 reads $34^{ab}$ after $35^{ab}$. — a) D4 छद्मेन; D7.9 वेषेण; Ca सत्रेण (as in text). B4 वै छन्नं; D2 संछिन्नं; D8 संछन्नं (for छन्नं हि). Ś1 (by transp.) छन्नं सत्रेण नूनं हि; S (M2.4 om.) छन्नं (G2 °न्ना) सत्रेण वा नूनं. — b) B4 रभसा; D8 जानामि (for चरन्तं). S (M2.4 om.) जानीध्वं यांतमर्जुनं. — After $34^{ab}$, S (M2.4 om.) ins.:

664* ते हि नः प्रतिसंयातुं संग्रामे न हि शक्नुयुः ।
कथमेकतरस्तेषां समस्तान्योधयेत्कुरून् ।
[ (L. 2) G1.3 एकरथः (for एकतरः). ]

— After 664*, T *repeats* $34^{cd}$, while G1 *repeats* $34^{cd}$–$35^{ab}$. — c) T G1 (all three first time).3 M1–3 क्लीबं वै (for उत्तरः).

35 D8 om. 35; D4 om. $35^{ab}$. G1 repeats $35^{ab}$ (cf. v. l. 34). — a) B2.3 (m as in text).4.5 D5 (m as in text).6 T2 मध्ये (for मन्ये). Ś1 K रथान् (for ध्वजान्). Dn1 D11m मन्यामहे (for मन्ये ध्व°). D2 ततो महाध्वजान्दृष्ट्वा. — b) Ś1 ह्येष; D2.11.12 T2 एव; D6 एक (for एष). Ś1 B D (except D9; D4.8 om.; D1

C. 4. 1270 B. 4. 38. 39 K. 4. 39. 47 इति स्म कुरवः सर्वे विमृशन्तः पृथक्पृथक् ।
न च व्यवसितुं किंचिदुत्तरं शक्नुवन्ति ते ।
छन्नं तथा तं सत्रेण पाण्डवं प्रेक्ष्य भारत ॥ ३६
उत्तरं तु प्रधावन्तमनुद्रुत्य धनंजयः ।
गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ॥ ३७
सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत् ।
बहुलं कृपणं चैव विराटस्य सुतस्तदा ॥ ३८
शातकुम्भस्य शुद्धस्य शतं निष्कान्ददामि ते
मणीनष्टौ च वैडूर्यान्हेमबद्धान्महाप्रभान् ॥ ३९
हेमदण्डप्रतिच्छन्नं रथं युक्तं च सुव्रजैः ।

---

missing) पलायते. G1 (first time) भीतः प्राद्रवतीह वै (second time as in text). — Before $35^{cd}$, S ins. कृपः. — $^{e}$) S transp. तं and नूनं. B1.3 S एव (M2 अन्व-); Dn2 D11.12 अभि- (for एष). — After 35, S (T G1.2 M2.4.5 om. line 1) ins.:

665* एकोऽस्माननयात्येष नान्यो लोके धनंजयात् ।
सारथिं ह्युत्तरं कृत्वा स्वयं योद्धुमिहेच्छति ।

[ With line 1 cf. $32^{cd}$. — (L. 2) G3 M1.3.5 उत्तरं सारथिं कृत्वा. ]

36 Before 36, all MSS. except T1 G3 M1 (D1 missing) ins. वैशंपायनः. M2 om. 36. — $^{b}$) Ś1 K B2 D3 विमृष(B2 D5 °श)न्ति; B4 निर्दिशंतः; D4.8 विमृशंत. S (M2 om.) पुनः पुनः. — $^{c}$) Ś1 ते; K तु; D4.8.10 एव (for च). K B2 D4 M1 व्यवसितं; Ca.c as in text. S (M2 om.) वीराः (G2 वीरं) (for किंचित्). — $^{d}$) S (M2 om.) अर्जुनं (for उत्तरं). — S ins. after $36^{cd}$ (M2, which om. $36^{abcd}$, after the ref., for which see above):

666* दुर्योधन उवाचेदं सैनिकान्रथसत्तमान् ।
अर्जुनो वासुदेवो वा रामः प्रद्युम्न एव वा ।
ते हि नः प्रतिसंयोद्धुं संग्रामे न हि शक्नुयुः ।
कथमेकतरस्तेषां समस्तान्योधयेत्कुरून् ।
अन्यो वै क्लीबवेषेण यद्यागच्छेद्ध्रुवां पदम् । [5]
शरैस्तीक्ष्णैरर्पयित्वा पातयिष्यामि भूतले ।

[ M2.3 om. line 1. T G1.2 M2-5 read line 4 after line 6. — (L. 3) T2 G2 M2-5 °संयातुं (for °संयोद्धुं). — (L. 5) G2 M5 °रूपेण (for °वेषेण). ]

— $^{e}$) B3 D5.6 तु (for तं). D3 छद्मेन; D4.8.9 वेषेण; G1.3 क्लैब्येन (for सत्रेण). — $^{f}$) S सैनिकाः (for भारत). — After 36, S ins.:

667* अर्जुनं नेति चेत्येनं न व्यवस्यन्ति ते पुनः ।
इति स्म कुरवः सर्वे मन्त्रयन्ति महारथाः ।
दृढवेधी महासत्त्वः शक्रतुल्यपराक्रमः ।
अभ्यागच्छति चेद्योद्धुं सर्वं संशयितं बलम् ।
न चाप्यन्यतरं तत्र व्यवस्यन्ति धनंजयात् ।

[ (L. 1) T G1.2 चेत्येव (for चेत्येनं). — (L. 2) T2 मन्यंते ते; G2.3 M2 मंत्रयंतो (for मन्त्रयन्ति). — (L. 5) T2 अन्यं नरं (for अन्यतरं). ]

37 $^{b}$) B1.5 Dn D2.3.6.9-12 T2 अभिद्रुत्य; D7 अनुद्रुत्य (for अनुद्रुत्य). — $^{c}$) T G1.2 शतपदं (for पदशतं). T M पूर्णं; G1 पूर्वं (for तूर्णं). — $^{d}$) D2 केशपाशे; Cv as in text. Ś1 K परामृषत्. — After 37, T1 G2 ins.:

668* मा मा गृहाण भद्रं ते दासोऽहं ते बृहन्नले ।
इति वादिनमेवाशु धावन्तं तरसाग्रहीत् ।

S ins. after 37 (T1 G2, after 668*):

669* विराटपुत्रं बीभत्सुर्बलवानरिमर्दनः ।

38 K om. $38^{ab}$. — $^{ab}$) B4 पर्यक्रोशत्तदार्तवत्; M1 कृपणं पर्यदेवयत् (for $^{b}$). Ś1 परामृष्टस्तदा तेन सोऽर्जुनं वाक्यमब्रवीत्. — After $38^{ab}$, T1 G2 ins.:

670* मा मा मारय भद्रं ते मुञ्च मामेमि मे गृहम् ।
मुञ्च मां मुञ्च मुञ्चेति तत्पादावग्रहीद्ब्रुवन् ।
दर्शयित्वा ततः सर्वानदशत्सोऽङ्गुलिं नृप ।
मा भैस्त्वमिति पार्थेन प्रार्थितः पर्यदेवयत् ।

— $^{c}$) B4 बहुशः (for बहुलं). B4 वाक्यं; D6 बालो; D10 चैष; T1 G2 चोक्त्वा (for चैव). — $^{d}$) K अब्रवीत् (for तदा). S (except M1) वित्तं प्रा(T चा)वेदयद्बहु. — After 38, B Dn D2.5.6.10-12 ins.:

671* उत्तर उवाच ।
शृणुयास्त्वं हि कल्याणि बृहन्नडे सुमध्यमे ।
निवर्तय रथं शीघ्रं जीवन्भद्राणि पश्यति ।

D5 cont.: D7 ins. after 38:

672* ग्रामांश्चतुर्दश तथा पूर्णांश्च धनगोकुलैः ।
ददाम्येतद्धनं तुभ्यं मुञ्च मां त्वं बृहन्नडे ।
अश्वानां तु सहस्रे द्वे शुभ्राणां हेममालिनाम् ।
सर्वलक्षणयुक्तानां मुञ्च मां त्वं बृहन्नडे ।

On the other hand, S ins. after 38:

673* उत्तरः ।
सुवर्णमणिमुक्तानां यद्यदिच्छसि दद्मि ते ।
हस्तिनोऽश्वान्रथान्गावः स्त्रियश्च समलंकृताः ।

39 $^{a}$) Ś1 K1 D4 शातकौंभस्य; Ca.v as in text. — For $39^{b}$, S subst.:

674* श्रेष्ठस्य रजतस्य च ।
ददामि शतनिष्कं ते मुञ्च मां त्वं बृहन्नले

— G1 M3 om. (hapl.) $39^{c}$-$40^{d}$. — $^{c}$) Some MSS.

मत्तांश्च दश मातङ्गान्मुञ्च मां त्वं बृहन्नडे ॥ ४०

वैशंपायन उवाच ।

एवमादीनि वाक्यानि विलपन्तमचेतसम् ।
प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ॥ ४१
अथैनमब्रवीत्पार्थो भयार्तं नष्टचेतसम् ।
यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्शन ।
एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभिः ॥ ४२
प्रयाह्येतद्रथानीकं मद्बाहुबलरक्षितः ।
अप्रधृष्यतमं घोरं गुप्तं वीरैर्महारथैः ॥ ४३
मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परंतप ।
अहं वै कुरुभिर्योत्स्याम्यवजेष्यामि ते पशून् ॥ ४४
प्रविश्यैतद्रथानीकमप्रधृष्यं दुरासदम् । C. 4 1282 B. 4 38 49 K. 4. 39. 76

वैदूर्यान्. — $^{d}$) K2 B2 D2.5.7 (*sup. lin.*) °नद्धान्; D3 °विद्धान् (for °बद्धान्). — D1 resumes from 39$^{d}$.

40 G1 M2 om. 40. — $^{a}$) Ś1 K D1-3 हेमदंडैः. — $^{b}$) Ś1 B1-3.5 हयवजैः; K1 च सुंभुजैः; K2 B4 D10 च सुध्वजैः; Dn1 D5.7-9 च वाजिभिः; Dn2 D3.4.6.11.12 च सुव्रतैः; S (G1 M2 om.) तु वाजिभिः. — $^{c}$) D1-3 बहु (for दश). — $^{d}$) M (M2 om.) मा (for मां). D4 हेमबद्धान्महाप्रभान्. — S ins. after 40 (G1 M2, which om. 39$^{c}$-40$^{d}$, ins. after 39$^{ab}$):

675* षष्टिं स्वलंकृताः कन्या ग्राममेकं ददामि ते ।
मुञ्च मां त्वं भृशं दीनं विह्वलं भयकम्पितम् ।
गमिष्यामि पुरं षण्ढ द्रष्टुं मातरमर्दिताम् ।

[ (L. 1) G1 M2 एव (for एकं), and अहं (for ते). — (L. 2) G1.2 M1.2 °पीडितं (for °कम्पितम्). — (L. 3) M1 शीघ्रं (for षण्ढ). ]

T1 G2 cont.:

676* मात्स्यस्य पुत्रो बालोऽहं तेन चास्मि सुखोषितः ।
मातृपार्श्वशयानोऽहमस्पृष्टातपवायुमान् ।
अदृष्टबलयुद्धोऽहं कुतस्ते कुरवः कुतः ।
मातृपार्श्वं गमिष्यामि मुञ्च मां त्वं बृहन्नले ।
प्रलयार्णवसंकाशं दृश्यते कौरवं बलम् ।
स्त्रीणां मध्येऽहमज्ञानाद्वीर्यशौर्याङ्कितां गिरम् ।
उक्तवान्मदगर्वेण को जेतुं शक्नुयात्कुरून् ।
अमुक्त्वा वा यदि नयेर्मरिष्यामि तवाग्रतः ।

After 40, D4 ins. a passage given in App. I (No. 35), of which D8 ins., at the same point, lines 2-3 only.

41 T1 G1 M1.2 om. the ref. — $^{a}$) Ś1 K1 Dn2 D1.2.7.11.12 चान्यानि; K2 वाच्यानि (for वाक्यानि). — $^{b}$) Ś1 D1.2 G1.3 M1.3 अचेतनं; B3 D6 विचेतसं; M4 (*inf. lin.*) धनंजयः (for अचेतसम्). — $^{d}$) D6 रथांतिकमुपानयत्.

42 $^{b}$) S (except T2 M2.5) °चेतनं (for °चेतसम्). — After 42$^{ab}$, T1 G2 ins.:

677* अर्जुनः ।
अहं योत्स्यामि कौरव्यैर्हयान्संयच्छ चोत्तर ।
आददानः किमर्थं त्वं पलायनपरोभवः ।
युध्यस्व कौरवैः सार्धं विजयस्ते भविष्यति ।
यस्य यन्तास्म्यहं युद्धे संयच्छामि हयोत्तमान् ।
राज्ञो वा राजपुत्रस्य तस्य नित्यं जयो ध्रुवः ।
सर्वथोत्तर युध्यस्व यत्रा साकं मया कुरून् ।
जित्वा महीं यशः प्राप्य भोक्ष्यसे सकलामिमाम् ।
हतोऽपि प्राप्स्यसे स्वर्गं न श्रेयस्ते पलायनम् ।
अद्य सर्वान्कुरूञ्जित्वा यथा जयमवाप्स्यसि ।
तथाहं प्रयतिष्येऽत्र सहायोऽत्र मतो ह्यहम् ।

T1 ins. after line 5 of 677*: T2 G1.3 M, after 42$^{ab}$:

678* संयच्छामि हयान्यस्य न स भीतः पलायति ।

$^{d}$) B2.4 D6 कुरुभिः (for शत्रुभिः). Ś1 K M3 शत्रुसूदन; B Dn D5.10-12 G1 शत्रुक(B4 °ह)र्षण; D1-3 °कर्शनः; D4 °कर्शनं; D6 साधमाहवे; T1 G2 कुरुभिः सह.

43 $^{a}$) B4 प्रयुज्यैतद् (for प्रयाह्येतद्). D4 बला° (for रथा°). — $^{b}$) D1.2 S °परि°. — $^{d}$) B4 शूरैर्; S (except G1.3) घोरैर् (for वीरैर्).

44 D1 om. 44$^{a}$-45$^{b}$. — $^{ab}$) B4 °पुत्रोसि (for °पुत्राग्र्य). G1.3 राजपुत्रः क्षत्रियोसि मा भैषीस्त्वं परंतप. — After 44$^{ab}$, Ś1 B Dn D2 (marg.).5-7.10-12 ins.:

679* कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि ।

[ Ś1 *repeats* 44$^{b}$ instead of the posterior half. ]

— $^{c}$) T2 G3 M तैः (for वै). B1.4 Dn D2-4.7.8.10-12 S (except M2) योत्स्ये (for योत्स्यामि). T1 G2 कुरुभिस्तैरहं योत्स्ये. — $^{d}$) B1 Dn D11.12 विजेष्यामि च; D2.3.5 m.8 आनयिष्यामि; D10 ह्यवजेष्यामि; S प्रत्या(M2 अप)नेष्यामि (for अवजेष्यामि). D4 रिपून् (for पशून्).

45 D1.2 om. 45$^{ab}$ (cf. v. l. 44). — $^{a}$) D4 प्राप्य ह्येतद्; D8 प्रयाह्येतद् (for प्रविश्यैतद्). — $^{b}$) D7.9 मद्बाहुबलरक्षितः (=43$^{b}$). — $^{c}$) Ś1 यन्तु; K Dn D3.5-7.10 यत्तो; Cv यन्ता (as in text). Ś1 K B2.3.5 D2-5.7-10 Cv भूत्वा; B1.4 Dn D1.6.11.12 भव; T2 असि त्वं (for भूस्त्वं). D2 नरश्रेष्ठो; G2 मम श्रेष्ठ. — After 45, S ins.:

680* शूरान्समरचण्डांश्च नयिष्ये यमसादनम् ।

C. 4. 1282 B. 4. 38. 50 K. 4. 39. 77 यन्ता भूस्त्वं नरश्रेष्ठ योत्स्येऽहं कुरुभिः सह ॥ ४५
एवं ब्रुवाणो बीभत्सुर्वैराटिमपराजितः ।
समाश्वास्य मुहूर्तं तमुत्तरं भरतर्षभ ॥ ४६
तत एनं विचेष्टन्तमकामं भयपीडितम् ।
रथमारोपयामास पार्थः प्रहरतां वरः ॥ ४७

इति श्रीमहाभारते विराटपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## ३७

वैशंपायन उवाच ।
तं दृष्ट्वा क्लीबवेषेण रथस्थं नरपुंगवम् ।
शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् ॥ १
भीष्मद्रोणमुखास्तत्र कुरूणां रथसत्तमाः ।
वित्रस्तमनसः सर्वे धनंजयकृताद्भयात् ॥ २
तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान् ।
गुरुः शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ॥ ३
चलाश्च वाताः संवान्ति रूक्षाः परुषनिःस्वनाः ।
भस्मवर्णप्रकाशेन तमसा संवृतं नभः ॥ ४
रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः ।
निःसरन्ति च कोशेभ्यः शस्त्राणि विविधानि च ॥ ५
शिवाश्च विनदन्त्येता दीप्तायां दिशि दारुणाः ।

[ T1 G2 स्थापयिष्ये यमालये (for posterior half). ]

46 c) S (except G2 M5) भयार्तं (for मुहूर्तं). B3 D2.6.7.9 तु (for तम्). — d) B2 Cc.r प्रत्यपद्यत; D1.3.8.10 G1 M1 भरतर्षभः (for भरतर्षभ). B3.4 D6 नोत्तरं प्रत्यपद्यत (B3m °भाषत).

47 a) K B2 तत एवं; T1 G2 इतस्ततो (for तत एनं). — b) D1–3 तमसा (for अकामं). M2 °विह्वलं (for °पीडितम्). — d) S परपुरंजयः (for प्रहरतां वरः). — After 47, D7 ins.:

681* कुरूनभिमुखं पार्थः प्रययौ शीघ्रवाहनः ।
यथेन्द्रो दानवान्हन्तुं प्रयाति च समातलिः ।;

while S (T2 om. line 1) ins.:

682* तमारोप्य रथोपस्थे विलपन्तं धनंजयः ।
गाण्डीवं धनुरादातुमुपायात्तां शमीं प्रति ।
उत्तरं स समाश्वास्य कृत्वा यन्तारमर्जुनः ।

[ (L. 1) T1 G2 अनाथवत् (for धनंजयः). — (L. 3) T1 G2.3 तु (for स). ]

Colophon. — *Sub-parvan:* Ś1 D9 गोग्रह; B Dn D1–8.10–12 उत्तरगोग्रह; M1.2 गोग्रहण. — *Adhy. name:* B1.2.5 D4.8.10 उत्तरभंगः; D3 अर्जुनवाक्यं; T2 M2–4 उत्तरपलायनं; M5 अर्जुननिर्याणं. — *Adhy. no.* (figures, words or both): Ś1 B4 D10 36; D8 M2–4 37; D5.6 35; T1 G M1.5 38. — *S'loka no.:* D8 50; G3 73.

**37**

1 a) Ś1 K1 B4 D5 °वेशेन; T1 G M1.4.5 °रूपेण. — b) T1 G M4.5 रथ° (G1 रथि°) (for नर°). B2 D5 (m as text) चरंतं पार्थमर्जुनं.

2 a) S द्रोणभीष्मा(G1.3 भीष्मद्रोणा-; M5 द्रोणकर्णा)-दयः शूराः. — b) B1 Dn D11.12 कुरवो (for कुरूणां). — c) S चासन् (for सर्वे).

3 c) D1.3 धनुर्भृतां (for शस्त्रभृतां). — d) K D4 भरद्वाजो. — After 3, D1 ins. 686* (cf. v. l. 9).

4 Before 4, D5 (marg.) S (except G2 M5) ins. द्रोणः. — a) N (except K) Cap चंडाश्च; S खराश्च; Ca as in text. — b) Ś1 रूढाः (for रूक्षाः). B1.3.5 D2.8–10 शर्करकर्षि(D8 °र्षं)णः; B2.4 Dn D1.3–7.11.12 शर्करवर्षिणः. Cs cites शर्कराः. — After $4^{ab}$, M3 repeats $3^{c}$–$4^{b}$. — c) S (except G2) °वर्षं° (for °वर्ण°). — d) B4 D6 रजसा (for तमसा). G1.3 चावृतं (for संवृतं).

5 B2–4 D5 read $5^{ab}$ after 6. — c) K1 M1.2.4 निश्चरंति; G1 निस्वनंति; Cv as in text. A few कोषेभ्यः. — d) K विमलानि (for विविधानि).

6 M3 om. $6^{a}$–$7^{b}$. — a) B3 Dn2 D10 M1.2 निनदंति. D4.7.8 शिवा च वि(D8 नि)नदत्येषा; D9 शिवायां च विनित्येषा (sic). — b) D4 दक्षिणा; D7.8 दारुणा (for दारुणाः). — After 6, B2–4 D5 read $5^{ab}$.

7 M3 om. $7^{ab}$ (cf. v. l. 6). B2.3 D5.6 read $7^{ab}$

हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ॥ ६
यादृशान्यत्र रूपाणि संदृश्यन्ते बहून्यपि ।
यत्ता भवन्तस्तिष्ठन्तु स्याद्युद्धं समुपस्थितम् ॥ ७
रक्षध्वमपि चात्मानं व्यूहध्वं वाहिनीमपि ।
वैशसं च प्रतीक्षध्वं रक्षध्वं चापि गोधनम् ॥ ८
एष वीरो महेष्वासः सर्वशस्त्रभृतां वरः ।
आगतः क्लीबवेषेण पार्थो नास्त्यत्र संशयः ॥ ९
स एष पार्थो विक्रान्तः सव्यसाची परंतपः ।
नायुद्धेन निवर्तेत सर्वैरपि मरुद्गणैः ॥ १०
क्लेशितश्च वने शूरो वासवेन च शिक्षितः ।
अमर्षवशमापन्नो योत्स्यते नात्र संशयः ॥ ११
नेहास्य प्रतियोद्धारमहं पश्यामि कौरवाः ।
महादेवोऽपि पार्थेन श्रूयते युधि तोषितः ॥ १२

कर्ण उवाच ।

सदा भवान्फल्गुनस्य गुणैरस्मान्विकत्थसे ।
न चार्जुनः कला पूर्णा मम दुर्योधनस्य वा ॥ १३ C. 4. 1299. B. 4. 39 14 K 4. 40. 29

after 8. — $^{a}$) D1.3 अदृश्यानि; D7 G1 M1.2 तादृशानि (for यादृशानि). S (M3 om.) दृश्यंते (for रूपाणि). — $^{b}$) B4 D1–5.7.8.10 दृश्यंते (D4 °ति) सु- (D5.7.10 च) (for संदृश्यन्ते). B5 Dn1 D10 च (for अपि). S (M3 om.) रूपाणि विविधानि च. — $^{c}$) Ś1 तिष्ठंतः; D2.3.6 तिष्ठध्वं (for तिष्ठन्तु). — $^{d}$) B Dn1 D5.6 Ca साध्वसं; S युद्धं स्यात् (for स्याद्युद्धं). Dn2 D1–4.7–12 महद्युद्धमुपस्थितं.

8 M3 transp. $8^{b}$ and $8^{d}$. — $^{b}$) Ś1 K वहध्वं (for व्यूहध्वं). B4 इतः; D6 इव (for अपि). Ś1 D4 अपि वाहिनीं (D4 °नीः) (for वाहिनीमपि). — $^{c}$) D2 स्यंदनं; D4 वैषम्यं; D10 विषमं; Ca.c.s.v वैशसं (as in text). B2–4 वा (for च). B2–4 D6 Cr परीक्ष(D6 °प्स)ध्वं; Crp प्रतीप्सध्वं; Ca as in text. — $^{d}$) D1–3 om. च. — After 8, B2.3 D5.6 read $7^{ab}$; while S ins.:

683* एतावदुक्त्वा वचनं भीष्ममालोक्य चाब्रवीत् ।
नदीज लङ्केशवनारिकेतु-
नगाह्वयो नाम नगारिसूनुः ।
गत्या सुरेशः क्वचिदङ्गनेव
गुरुर्बभाषे वचनं तदेव ।
इत्युक्त्वा संज्ञया द्रोणस्तूष्णीमासीद्विशां पते ।
भारद्वाजवचः श्रुत्वा गाङ्गेयः संज्ञयाब्रवीत् ।
अतीतं चक्रमस्माकं विषयान्तरमागताः ।
अतीतः समयश्चोक्तो ह्यस्माभिर्यः सभातले ।
न भयं शत्रुतः कार्यं शङ्कां त्यज नरर्षभ ।
दुर्योधनमथालोक्य संज्ञया द्रोण अब्रवीत् ।

[ For lines 2–5 cf. 686*. — (L. 5) T2 G1.3 तदानीं (for तदेव). — (L. 6) G1.3 आस्ते (for आसीत्). — After line 5, T1 G2 ins.:

684* देवव्रतेनैवमुक्ते वचने हितकारिणा ।

— (L. 11) T2 G1.3 द्रोणं (for द्रोणः). ]

9 Before 9, T1 G2 M ins. द्रोणः. — $^{b}$) T2 कृष्णः (for सर्व-). — After $9^{ab}$, T1 G2 ins.:

685* गवामर्थे हि विक्रान्तः सव्यसाची परंतपः ।

— $^{c}$) Ś1 K1 D5 °वेशेन; B3 S (except M2) °रूपेण. — $^{d}$) Dn1 एव (for अत्र). D10 पार्थोस्त्यत्र न संशयः. — B1.2 (om. lines 1–2).3.5 Dn D11.12 ins. after 9: D1, after 3:

686* नदीज लङ्केशवनारिकेतु-
नगाह्वयो नाम नगारिसूनुः ।
एषोऽङ्गनावेषधरः किरीटी
जित्वाव यं नेष्यति चाद्य गा वः ।

[ Lines 1–2 = lines 2–3 of 683* (cf. v. l. 8). — (L. 3) B2 प्रमाथी; D1 तरस्वी (for किरीटी). — (L. 4) D1 विजेष्यते सर्वकुरुप्रवीरान्. — Cs explains the whole stanza. ]

After 9, G2 ins. a passage given in App. I (No. 36).

10 G2 (hapl.) om. 10–11. — $^{a}$) B2 Dn2 D6.11.12 स एव पार्थो; D2 स ह्येष पार्थो; S (except T2; G2 om.) एष पार्थो हि. — $^{b}$) B2.3.5 Dn1 D1–3.5.7.9 धनंजयः; D10 महारथः (for परंतपः). — A passage given in App. I (No. 36) is ins. in T1 after $10^{ab}$, in G2 (which om. 10–11) after 9. — M3 om. $10^{cd}$. — $^{c}$) D8 युद्धे निवर्तेते नायं; T2 G1.3 M (M3 om.) नाजित्वा विनिवर्तेत. — $^{d}$) B1.5 Dn1 D4 T1 सुरासुरैः; Cc मरुद्गणैः (as in text). T2 G1.3 M (M3 om.) सर्वानपि मरुद्गणान् (M5 *inf. lin.* कुरून्गतान्).

11 G2 om. 11 (cf. v. l. 10). — $^{a}$) K शून्ये; D7 G1.3 वीरो (for शूरो). — $^{b}$) Dn1 D9 अपि; D2 सु- (for च). D8 रक्षितः (for शिक्षितः). — $^{c}$) D10 अमर्षं च समापन्नो. — $^{d}$) B Dn D1–5.7–12 वासवप्रतिमो युधि (D1.4.8.10 गुणैः; D2 गुणी; D3 रणे; D7 बले).

12 $^{a}$) D10 नैतस्य; S न ह्यस्य (for नेहास्य). — $^{d}$) S (except T2) युद्ध- (for युधि). — After 12, N ins.:

687* किरातवेषप्रच्छन्नो गिरौ हिमवति प्रभुः ।

C. 4. 1306
B. 4. 39. 15
K. 4. 40. 30

दुर्योधन उवाच ।
यद्येष पार्थो राधेय कृतं कार्यं भवेन्मम ।
ज्ञाताः पुनश्चरिष्यन्ति द्वादशान्यान्हि वत्सरान् ॥ १४
अथैष कश्चिदेवान्यः क्लीबवेषेण मानवः ।
शरैरेनं सुनिशितैः पातयिष्यामि भूतले ॥ १५
वैशंपायन उवाच ।
तस्मिन्ब्रुवति तद्वाक्यं धार्तराष्ट्रे परंतपे ।
भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ॥ १६

इति श्रीमहाभारते विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## ३८

वैशंपायन उवाच ।
तां शमीमुपसंगम्य पार्थो वैराटिमब्रवीत् ।
सुकुमारं समाज्ञातं संग्रामे नातिकोविदम् ॥ १
समादिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर ।
नेमानि हि त्वदीयानि सोढुं शक्ष्यन्ति मे बलम् ॥ २
भारं वापि गुरुं हर्तुं कुञ्जरं वा प्रमर्दितुम् ।

[ K °संछन्नो; B4 °संछित्वा (for °प्रच्छन्नो). ]

On the other hand, G2 ins. after 12:

688* इत्येवं वादिनं द्रोणं कर्णः क्रुद्धोऽब्रवीद्वचः ।

13 $^{a}$) N (except Ś1) Cv फाल्गुनस्य. — $^{b}$) Ś1 प्रभाषसे; K B2.4 D6.10 T1 M1 Ca.c.v विकत्थते. G1.3 गुणानस्मासु कत्थते. — $^{c}$) Ś1 B Dn D3.5–7.9–12 T M2.3 कलापूर्णः; K D4.8 G1.3 कलां पूर्णां; G2 M1.4.5 कलां पूर्णः. Cc.r.s.v cite कला. — $^{d}$) B1.2.5 Dn D1–3.10–12 T2 M च (for वा).

14 $^{b}$) T1 G1.2 इदं; G3 M महन् (for भवेन्). — $^{d}$) B3.5 D5.8 T G1.3 M च; B4 वि- (for हि). Dn D11.12 द्वादशाब्दान्विशां पते; D10 द्वादशानिह वत्सरान्; G2 द्वादशां-श्चान्यवत्सरान्.

15 Dn1 om. 15. — $^{a}$) Dn2 D7.9.11.12 एकः; T1 G1.2 M2.3 वा; M1 एव (for एष). G1 अत्र; G2 अद्य (for अन्यः). — $^{b}$) Ś1 D8 S क्लीब(G1 स वै)रूपेण. B4 चागतः; T G1.2 M3–5 देवराट् (for मानवः).

16 D4.7 om. the ref. — $^{a}$) B4 वदति (for ब्रुवति). D7.9 कौरव्ये (for तद्वाक्यं). S तस्मिन्वदति तां वाचं. — $^{b}$) B Dn D2.4–7.10–12 °तप; D1.3.8 °तपः (for °तपे).

Colophon om. in S; D7 reads it in marg. — *Sub-parvan:* Ś1 K गोग्रह; B2.4.5 Dn2 D1–4.6.8–12 उत्तर-गोग्रह. — *Adhy. name:* B1–4 Dn1 D2.4.5.8.10 अर्जुन-प्रशंसा; D3 अर्जुनसंवादः. — *Adhy. no.* (figures, words or both): Ś1 K1 B4 D10 37; D3.9 38; D5.6 36. — *S'loka no.:* D3 17.

### 38

1 M1.2.4 om. the ref. B3 read $7^{c}$–$8^{f}$, before 1. — $^{a}$) Ś1 शमीं तां (by transp.). S (except G3 M5) अभि° (for उप°). — $^{c}$) K समायांतं; B1.5 Dn D6.9–12 समाज्ञाय; D4 महाप्राज्ञं; D5.7 अविज्ञातं; D8 अविक्रांतं (for समाज्ञातं). S सुखसंवर्धितं पित्रा. — $^{d}$). S समरा(G2 संग्रामा)णामकोविदं. — After 1, S ins.:

689* एहि भूमिंजयारुह्य वैराटे महतीं शमीम् ।

[ M1.2.4.5 आरोह (for आरुह्य). ]

2 $^{a}$) D1.2 समाज्ञातो (for °दिष्टो). D1 शीघ्रं (for क्षिप्रं). — $^{b}$) K2 Dn1 च हर; D7 वह च; D1–4 आहर च (D4 °त); D5m.9 उत्तारय; Cn.s अवहर (as in text). B3 त्वं धनूंष्यवतारय; B4 धनुं त्वं वह उत्तर; S धनुर्गां-डीवमानय. — $^{c}$) K D10 ह; D6 च (for हि). S नेमानीष्व(G °ष्वा)सनानीह. — $^{d}$) Ś1 B4 D3.6.8 शक्यंति; D4 रक्षंति. D10 मद्बलं (for मे बलम्).

3 $^{a}$) B Dn D3–5.7–9.11.12 च (for वा). Ś1 हंतुं; B D वोढुं (B4 D2 सोढुं) (for हर्तुं). S नालं भारं गुरुं हर्तुं (T1 भर्तुं; T2 हंतुं; G भेत्तुं). — $^{b}$) D6 कुंजराश्वान्; D7.9 कुंजरान्वा. D4 कुंजराणां प्रमर्दनं. — $^{c}$) B2 D1–3 मम बाहुसुविक्षेपं; D4.8.10 मम बाह्वोर्विनिष्पेषं (D10 °क्षेपं); D7.9 T2 मम बाहुविनि°. — After 3, S ins.:

690* नैभिः काममहं कर्तुं कर्म वैजयिकं त्विह ।
अतिसूक्ष्माणि ह्रस्वानि सर्वाणि च मृदूनि च ।
आयुधानि महाबाहो तवैतानि परंतप ।

[ (L. 1) M1.5 अलं (M5 *inf. lin.* अहं, as above). ]

4 $^{a}$) T1 G2 आरुह्य (for आरोह). — $^{b}$) B3.5 T1 G1

मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः ॥ ३
तस्माद्भूमिंजयारोह शमीमेतां पलाशिनीम् ।
अस्यां हि पाण्डुपुत्राणां धनूंषि निहितान्युत ॥ ४
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।
ध्वजाः शराश्च शूराणां दिव्यानि कवचानि च ॥ ५
अत्र चैतन्महावीर्यं धनुः पार्थस्य गाण्डिवम् ।
एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् ॥ ६
व्यायामसहमत्यर्थं तृणराजसमं महत् ।
सर्वायुधमहामात्रं शत्रुसंबाधकारकम् ॥ ७
सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणम् ।
अलं भारं गुरुं वोढुं दारुणं चारुदर्शनम् ।
तादृशान्येव सर्वाणि बलवन्ति दृढानि च ॥ ८

उत्तर उवाच ।

अस्मिन्वृक्षे किलोद्बद्धं शरीरमिति नः श्रुतम् ।
तदहं राजपुत्रः सन्स्पृशेयं पाणिना कथम् ॥ ९
नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना ।
महता राजपुत्रेण मन्त्रयज्ञविदा सता ॥ १०
स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिम् ।
कथं वा व्यवहार्यं वै कुर्वीथास्त्वं बृहन्नडे ॥ ११

बृहन्नडोवाच ।

व्यवहार्यश्च राजेन्द्र शुचिश्चैव भविष्यसि ।
धनूंष्येतानि मा भैस्त्वं शरीरं नात्र विद्यते ॥ १२ C. 4. 1315 B. 4. 41. 4 K. 4. 40. 50

$M_{3-5}$ एनां (for एतां). — $^{d}$) $D_{1-3}$ अवहितानि (for निहि°). $B_4$ च; $D_{4.8}$ वै (for उत).

5 $T_1$ $G_2$ transp. $5^{ab}$ and $5^{cd}$.

6 $^{a}$) K $T_2$ एव (for च). $K_2$ हि; $D_{4.6.8.10}$ S एव ($T_2$ च) (for एतन्). — $^{d}$) $Ś_1$ K $D_{1.3}$ संमतं; Ca संमितं (as in text).

7 For sequence of $B_3$, cf. v. l. 1. — $^{a}$) $K_1$ $D_{10}$ अत्युग्रं (for अत्यर्थं). — $^{b}$) $Ś_1$ K मृग°; Ca.s.v तृण° (as in text). — $^{d}$) $B_{1.3}$ $D_9$ °कारणं; S सर्वारिक्षयकारकं (M °कारिणं).

8 For sequence of $B_3$, cf. v. l. 1. — $^{b}$) $D_4$ सज्यम् (for श्लक्ष्णम्). — $^{c}$) $B_4$ $D_{1.2.7.10}$ S (except T) सोढुं (for वोढुं). — $^{d}$) G $M_{4.5}$ वारुणं; $M_{2.3}$ वारणं (for दारुणं). $D_{1.3}$ °शोभनं (for °दर्शनम्). $M_1$ कुंजरं वा प्रमर्दितुं ($=3^{b}$). — After $8^{cd}$, $M_1$ *repeats* $3^{cd}$. — After 8, N *repeats* $5^{ab}$ (v. l.: $Ś_1$ K यमयोरपि चोत्तर; $B_{1-4}$ $D_{1-3.5-10}$ °श्च तथोत्तर for $^{b}$); while S ins.:

691* प्रधानानि विशिष्टानि दुर्दर्शानि भवन्त्युत ।

$T_1$ cont.:

692* अर्जुनेनैवमुक्तस्तु वैराटिः प्रत्यभाषत ।

— After the *repetition* of $5^{ab}$, B Dn $D_{5.6.11.12}$ ins. an addl. colophon (*Sub-parvan:* उत्तरगोग्रह.—*Adhy. name:* B अस्त्रदर्शनं. — *Adhy. no.:* $B_4$ 38; $D_6$ 37).

9 $^{ab}$) $D_{3.8}$ किलाबद्धं; $D_{10}$ मृतं बद्धं (for किलोद्बद्धं). S शरीरमिह ($G_3$ °व) चासक्तं शम्यां शुष्कं पुरा किल ($T_1$ पुरातनं).

10 $^{ab}$) $K_1$ Dn $D_8$ आलब्धं; $K_2$ आलंभं; $D_1$ आरब्धुं; $D_3$ आरब्धं; Ca.c.n as in text. S न मामेवंविधं कर्म कारयस्व बृहन्नले. — S om. $10^{c}$–$11^{b}$. — $^{d}$) B (except $B_1$) $D_{1-10}$ मंत्रव्रत($D_{10}$ °प्रति)विदा. $Dn_1$ तथा; $Dn_2$ $D_{2-4.7}$ (before corr.).11.12 सदा (for सता). $K_1$ मंत्रयज्ञविशारदा; $K_2$ शस्त्रयज्ञविशारद. — After 10, $D_4$ ins.:

693* स्पृशामीह शरीरं चेदप्यस्यां शोकवर्जितः ।

11 S om. $11^{ab}$ (cf. v. l. 10). — $^{b}$) $K_2$ $Dn_2$ $D_{11.12}$ शाववाहम्; $B_4$ $D_5$ (m as in text) शावं ($B_4$ °रं) व्याधम्; Cr शारं व्याधम्; Crp शरवाहम् and शरं वाहम्; Ca.v शववाहम् (as in text). Cc cites शावं. ❀ Ca: वाहं व्याधमित्यपपाठः । ❀ — $^{cd}$) $Ś_1$ $K_2$ नाव्यवहार्यं; $B_{3.4}$ $D_{1.3.4.6.8}$ अव्यव°; $Dn_2$ $D_{11}$ चाव्यव°; $D_7$ आव्यव° (for वा व्यव°). S कथं वा ($M_1$ वै) शक्यते कर्तुं बुद्ध्या त्वं मन्यसे कथं. — After 11, S ins.:

694*　　　　वैशंपायनः ।

तमुवाच ततः शूरः पार्थः परपुरंजयः ।
दायादं सर्वमत्स्यानां कुले जातं विशारदम् ।
जानामि त्वां महाप्राज्ञ शुभं जात्या कुलेन च ।
कथं नु पापकं कर्म ब्रूयां त्वाहं परंतप ।

[ (L. 2) Cf. $13^{ab}$. $M_{1.3}$ महारथं (for विशारदम्). — (L. 3) T $G_1$ शुद्धं ($T_2$ °भ्रं) जात्या; $G_3$ जात्या शुद्धं (for शुभं जात्या). ]

12 S om. the ref. — $^{a}$) $B_3$ लोकेस्मिन्; $B_4$ लोकेषु; $M_{1.2}$ राज्ञासि; $M_4$ राज्ञां त्वं (for राजेन्द्र). — $^{b}$) S (except $T_2$) शुद्धः (for शुचिः). — $D_2$ reads $12^{cd}$ after 13. — $^{c}$) $D_{2.3.7.8.10}$ मा भैषीः (for मा भैस्त्वं). Cf. Ca मा भैः मा भैषीः. — $^{d}$) $D_3$ दृश्यते (for विद्यते).

13 For $13^{ab}$, cf. 694*. — $^{a}$) $T_1$ $G_2$ मात्स्यराजस्य; $M_{1.3}$ सर्वमत्स्यानां. — $^{b}$) $B_4$ $D_{1-3}$ यशस्विनं; $Dn_2$ $D_4$

C. 4. 1316 B. 4. 41. 5 K. 4. 40. 51 दायादं मत्स्यराजस्य कुले जातं मनस्विनम् ।
कथं त्वा निन्दितं कर्म कारयेयं नृपात्मज ॥ १३

वैशंपायन उवाच ।

एवमुक्तः स पार्थेन रथात्प्रस्कन्द्य कुण्डली ।
आरुरोह शमीवृक्षं वैराटिरवशस्तदा ॥ १४
तमन्वशासच्छत्रुघ्नो रथे तिष्ठन्धनंजयः ।
परिवेष्टनमेतेषां क्षिप्रं चैव व्यपानुद ॥ १५
तथा संनहनान्येषां परिमुच्य समन्ततः ।
अपश्यद्गाण्डिवं तत्र चतुर्भिरपरैः सह ॥ १६
तेषां विमुच्यमानानां धनुषामर्कवर्चसाम् ।
विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव ॥ १७
स तेषां रूपमालोक्य भोगिनामिव जृम्भताम् ।
हृष्टरोमा भयोद्विग्नः क्षणेन समपद्यत ॥ १८
संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च ।
वैराटिरर्जुनं राजन्निदं वचनमब्रवीत् ॥ १९

उत्तर उवाच ।

बिन्दवो जातरूपस्य शतं यस्मिन्निपातिताः ।
सहस्रकोटि सौवर्णाः कस्यैतद्धनुरुत्तमम् ॥ २०

मनस्विनां. — $^c$) Some N MSS. त्वां (for त्वा). Dn1 त्वां कथं; S कथं वा. — $^d$) D6 कारयेहं; S कारये त्वां. B4 Dn1 नृपात्मजं. — After 13, D2 reads 12$^{cd}$

14 $^e$) D1-3 स तं वृक्षं; D7 तदा वृक्षं (m as in text); M5 शमीं शीघ्रं (for शमीवृक्षं).

15 After 15$^{ab}$, N ins.:

695* अवारोपय वृक्षाग्राद्धनूंष्येतानि मा बिभः ।

[ B1-3.5 Dn D3-5.7-9.11.12 अवरोपय; B4 अवरोहय; D10 अवरोह च (for अवारोपय). D4 वृक्षात्त्वं (for °आत्). K1 मा भिरोः; K2 मानिनः; B1 Dn D11.12 मा चिरं; B2.3.5 मे विभो; B4 वै प्रभो; D2.5 मा बिभेः; D6 वा विभो; D10 गा बिभीः (for मा बिभः). ]

— D10 om. 15$^{cd}$. — $^d$) Ś1 चापि (for चैव). B2 D3 व्यपानय (for °नुद). S सर्वं मुंचस्व मा चिरं. — After 15, N (except D3; D10 om. line 1) ins.:

696* सोऽपहृत्य महार्हाणि धनूंषि पृथुवक्षसाम् ।
परिवेष्टनपत्राणि विमुच्य समुपानयत् ।

[ (L. 1) ❀Ca: पङ्कमवतीर्य ।❀ — K2 om. from पृथु° (in line 1) up to विमुच्य (in line 2). ]

16 $^a$) Ś1 यथा; B1.3 D4.5.10 Ca ततः; S तेषां (for तथा). D1.3 संनिहितान्येषां; S संनहनीयानि; Ca संनहनान्येषां (as in text). Cs cites संनहनं, Cr.v संनहनानि (as in text). — $^b$) D6 S विप्रमुच्य (G1 प्रमुच्य च) (for परिमुच्य). S परंतपः (G1 नराधिप) (for समन्ततः). — $^c$) D3 गांजिवं (for गाण्डिवं). S तत्र गांडीवं (by transp.).

☞ The portion from 4. 38. 17 up to 4. 41. 21* is lost in D1 on missing folios.

18 $^a$) D3 आलक्ष्य; D10 आलभ्य (for आलोक्य). Ś1 K तेषां रूपं समालक्ष्य (Ś1 °लोक्य). — After 18$^c$, S (except M5) ins.:

697* प्रवेपिततनुस्तदा
अर्जुनेन समाश्वस्तः.

T1 G2 cont.:

698* किंचिद्धृष्टो नृपात्मजः ।
तेषां संदर्शनाभ्यासं स्पर्शाभ्यासं पुनः पुनः ।
आमील्य पुनरुन्मील्य स्पृष्ट्वा स्पृष्ट्वा चकार सः ।
सम्यग्दृष्ट्वा तदाश्वस्तः.

After 18, B4 ins.:

699* तदुपश्रुत्य शत्रुघ्नः स तदार्जुनमब्रवीत् ।
सारथे किमिदं शेते नागेन्द्रो वापि वा धनुः ।

(for line 2 cf. line 1 of 704* below).

19 $^a$) B4 संस्पृशंस्तानि चास्त्राणि. — $^b$) B4 भासुराणि (for भानुमन्ति). D2.3 दृढानि (for बृहन्ति). — After 19, all MSS. except Ś1 K D7 (D1 missing; B3 marg.) ins. an addl. colophon (*Sub-parvan:* B Dn D2-4.6.8.10-12 उत्तरगोग्रह; M1.2.4 गोग्रहण. — *Adhy. name:* B1.3 अस्त्रप्राप्तिः; B2.4.5 D5 अस्त्रदर्शनं; D4 शम्यारोहः; T2 आयुधदर्शनं; G2 M2.3 शम्यारोहणं. — *Adhy. no.:* B4 D3.9 T G M1.5 39; D6.10 M2-4 38).

For st. 20-34, S subst. a passage which (with its v. l.) is given separately under 34.

20 After the ref., D5.7.9 ins.:

700* न दृष्टं न श्रुतं चित्रं धनुषो रूपमीदृशम् ।

— $^a$) Ś1m बभ्रवो; K बिभ्रद्धे (for बिन्दवो). D7.9 यस्य सौवर्णाः (for जातरूपस्य). — $^b$) D4 शतं यत्र; D7.9 शतशोभा (for शतं यस्मिन्). K निपातितं; Cc as in text. Ca reads 20$^{ab}$ as in text. — $^c$) K सहस्रकोटिः (K2 °टि-) सौवर्णः; B3.5 D8 Ca °कोट्यः सौ°; D2.4.8 सहस्रशोथ (D4m °त्र) सौ°; D5.7.9 °कोष्टाः सौ°; D10 °गोधाः सौ°. Cap cites सहस्रकोटीः; Cc.r कोट्यः; Crp (Dl.) कोटी. ❀Cs: सहस्रे सहस्रलौ कोटी प्रान्तौ यस्य । (cf. Cn)❀

C. 4. 1424 B. 4. 45. 30 K. 4. 44. 47 यथा शैलस्य महतः शैलेनैवाभिजघ्नुषः ॥ २५
सनिर्घाताभवद्भूमिर्दिक्षु वायुर्ववौ भृशम् ।
भ्रान्तद्विजं खं तदासीत्प्रकम्पितमहाद्रुमम् ॥ २६
तं शब्दं कुरवोऽजानन्विस्फोटमशनेरिव ।
यदर्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्रथे ॥ २७

इति श्रीमहाभारते विराटपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

## ४१

वैशंपायन उवाच ।
उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रदक्षिणम् ।
आयुधं सर्वमादाय ततः प्रायाद्धनंजयः ॥ १
ध्वजं सिंहं रथात्तस्मादपनीय महारथः ।

पार्थः). D4 पार्थस्तानि नमस्कृत्य (for prior half). K तु (for च). — (L. 6) Ś1 K सर्वे सुमनसो नित्यं (for prior half). Ca cites मानसानि भवत. D9 सर्वाणि मम सांनिध्यं संभवंत्वित्यभाषत. D7 (m as above) orig., which was as in D9, is cancelled.]
— d) Some MSS. गांजीवं (for गाण्डीवं). D2. 3. 5 प्राक्षिपद्; M4 विक्षिपन् (M4 *inf. lin.* व्याक्षिपद् as in text).

25 a) K विक्षिप्यमानस्य; B3. 4 D4–8. 10 व्या(B4 D10 चा)क्षिप्यमान(B3 D4. 5. 7 °ण)स्य; D7m निर्मुच्यमानस्य; T2 विस्फार्यमाणस्य. — b) Dn1 °ध्वनिः; D2 °धनः (for °स्वनः). — d) T G2 M अपि (for एव). K2 अभ्यजघ्नतः; B1–3 अवजघ्नुषा; B4 Cn अवजघ्नतः; B5 Dn1 D5. 6 अवजघ्नुषः; Dn2 D11. 12 Cnp अभिनिघ्नतः; D2. 4. 7–10 T1 G2 अभि(D7 °पि)ज(D9 °जि)घ्नतः; Ca अभिजघ्नुषा. G1. 3 शैलेनाक्षिप्य जघ्नतः.

26 a) G1 सनिपाता (for सनिर्घाता). B (except B1) Cn. s भूमिद् (for भूमिर्). — B Dn D4–6. 11. 12 ins. after 26ab (B4, after 26):

767* पपात महती चोल्का दिशो न प्रचकाशिरे ।

[ B3. 4 स चकाशिरे; B5 स प्रकाशते; Dn D11. 12 स प्रकाशिरे; D5 स चकासते; Cn प्रचकाशिरे (as above). ]
— c) K B Dn D8. 10–12 T2 °ध्वजं (for °द्विजं). Cs cites द्विजाः. S अभवत् (for तदासीत्). — d) T G प्राकंपंत महाद्रुमाः; M5 प्राकंपित°.

27 a) B4 Dn1 D2. 3. 6 S राजन्; D4 -शृण्वन् (for ऽजानन्). — After 27ab, S ins.:

768* तार्क्ष्यं शब्दमिव श्रुत्वा वित्रेसुर्दीनमानसाः ।
यथेन्द्रो व्याक्षिपद्भीमं विस्फोटमशनेर्विभुः ।

[ (L. 2) T1 G1. 3 M1 भूमिं (for भीमं), and विस्फोटैर् (for विस्फोटम्). M2 इव (for विभुः). ]
G2 cont.:

769* महाशनिमहाशब्दः सदृशो ज्यास्वनो महान् ।
शत्रून्वीरांश्च संत्यज्य निग्रहस्थो रथे स्थितः ।

— c) S तथा (for यद्). — d) T2 प्राक्षिपद् (for आक्षि°). D2 द्रुतं; D3 द्रुम; D7 9. 10 रणे; S रथी (for रथे). — After 27, N (D1 missing) ins. a passage given in App. I (No. 39); cf. B. 5. 158. 28 ff., a parallel passage with which this passage has some lines in common.

Colophon missing in D1. — *Sub-parvan:* Ś1 K1 गोग्रह; B Dn D2. 4 6. 7. 9–12 उत्तरगोग्रह; M1–3 गोग्रहण. — *Adhy. name:* B1–4 Dn1 उत्तरार्जुनयोर्वाक्यं (B3 °र्जुनवाक्यं); D3 उत्तरस्याभयप्रदानः; D4. 8. 10 उत्तरसारथ्यं; M3 गांडीवग्रहणं. — *Adhy. no.* (figures, words or both): B4 T G M1. 5 43; D3. 6. 9 M2–4 42; D5. 10 40; D7 38. — *S'loka no.:* D3 G3 38.

### 41

D1 is missing up to 21c (cf. v. l. 4. 38. 16).

1 d) B1 Dn1 प्रययौ पांडवर्षभः; B2–5 D5. 6 भ्रातॄणां पांडवर्षभः (D6 पांडुनंदनः).

2 ab) Ś1 K सिंहध्वजं (for ध्वजं सिंहं). D7 अवतीर्य (m अपनीय as in text). Ś1 °भुजः; K °ध्वजः (for °रथः). S ध्वजं च (T2 स) सिंहं मात्स्यस्य भ्रातॄणामायुधानि च. — cd) S प्रणिधाय शमीमध्ये प्रयातुमुपचक्रमे.

3 a) D3 देवीं (for दैवीं). K रणे (for रथे). Ś1 B Dn D2. 3–5. 9–12 युक्तां (for युक्त्वा). S दिव्यं मायामयं युक्तं (T2 दिव्यं श्वेताश्वसंयुक्तं). — b) B3. 5 S विहितं (for

प्रणिधाय शमीमूले प्रायादुत्तरसारथिः ।। २
दैवीं मायां रथे युक्त्वा विहितां विश्वकर्मणा
काञ्चनं सिंहलाङ्गूलं ध्वजं वानरलक्षणम् ।। ३
मनसा चिन्तयामास प्रसादं पावकस्य च ।
स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्यचोदयत् ।। ४
सपताकं विचित्राङ्गं सोपासङ्गं महारथः ।
रथमास्थाय बीभत्सुः कौन्तेयः श्वेतवाहनः ।। ५
बद्धासिः सतनुत्राणः प्रगृहीतशरासनः ।
ततः प्रायादुदीचीं स कपिप्रवरकेतनः ।। ६
स्वनवन्तं महाशङ्खं बलवानरिमर्दनः ।
प्राधमद्बलमास्थाय द्विषतां लोमहर्षणम् ।। ७
ततस्ते जवना धुर्या जानुभ्यामगमन्महीम् ।
उत्तरश्चापि संत्रस्तो रथोपस्थ उपाविशत् ।। ८
संस्थाप्य चाश्वान्कौन्तेयः समुद्यम्य च रश्मिभिः ।
उत्तरं च परिष्वज्य समाश्वासयदर्जुनः ।। ९
मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परंतप । C. 4. 1446 B. 4. 46. 11 K. 4. 45. 16

विहितां). — $^{c}$) B4 D6 °शार्दूलं; Cs °लाङ्गूलं (as in text). S ततः (M3 °त्र) कांचनलांगूलं (G1 °ल-).

4 $^{b}$) D7.9 तं (for च). — $^{d}$) B4 Dn1 Cn अदेशयत्; Dn2 D11.12 T2 अयोजयत्; D4.7–9 अनोदयत् (for अचोदयत्). — After 4, S ins.:

770* ध्वजे वानरमुच्छ्रित्य गाण्डीवं विक्षिपन्धनुः ।

[ T2 G2 M1.3 रथे (for ध्वजे). M1 उत्क्षिप्य (for उच्छ्रित्य). T1 G2 M1 व्याक्षिपद् (for विक्षिपन्). G1 M4 मुहुः (for धनुः). ]

T G2 cont.:

771* उत्तस्थौ चोत्तरस्तात स्मृत्वा पुनरिहागतः ।
तं समाश्वास्य बीभत्सुरभियातुं प्रतत्वरे ।

[ (L. 1) T2 G2 तावत् (for तात). G2 मुक्त्वा (for स्मृत्वा). T2 भीत्या पुनरुपाविशत् (for the posterior half). — (L. 2) T2 प्रचक्रमे (for प्रतत्वरे). ]

5 $^{a}$) D3.4.8.12 सुपताकं. D4.8.10 महाचित्रं. — $^{b}$) K B5 Dn2 D2.3.7.9.11.12 G1 M5 महारथं; B1.3 महावरं; B2 D6 M3 हिरण्मयं; B4 D4.5.8.10 महारवं; Dn1 महाबलं (for महारथः). — After $5^{ab}$, B Dn D5.6.10–12 ins.:

772* खात्पपात रथे तूर्णं दिव्यरूपं मनोरमम् ।
रथं तमागतं दृष्ट्वा दक्षिणं प्राकरोत्तदा ।

[ (L. 1) B2.3m D5.6 रथं; B1.5 Dn1 रथात्; Dn2 D11.12 रथस् (for रथे). Dn1 °हरं; Dn2 D11.12 °रथं (for °रमम्). — (L. 2) B1.3 (cf. Cc.r) रथागतं तु तं दृष्ट्वा; B4 ध्वजं रथागतं दृष्ट्वा; D6 अथापतंतं तं दृष्ट्वा (for prior half). D5 प्राकरोपमं. ]

6 $^{a}$) Dn2 D2.3.8.11.12 S °तल° (for °तनु°). B Dn1 D5.6.7(m as in text).9.10 बद्धगोधांगुलित्राणः. — D9 transp. $6^{b}$ and $6^{d}$. — After 6, T2 G2 ins.:

773* सैन्याभ्याशमनुप्राप्य गृहीत्वा भीममुत्तमम् ।

[ G2 °समं (for °मनु-), and शंखम् (for भीमम्). ]

7 $^{b}$) S देवदत्तं धनंजयः (M3 °त्तमनुत्तमं). — D3 transp. $7^{cd}$ and $8^{cd}$; and om. $8^{ab}$. T G2 om. $7^{cd}$. — $^{cd}$) D6 प्रदध्मौ; D8 प्राधम्य (for प्राधमद्). K B4 रथम् (for बलम्). D6 आदाय (for आस्थाय). D11.12 रोम° (for लोम°). S (T G2 om.) शशांकरूपं बीभत्सुः प्रा(G1.3 M3 प्र)ध्मापयदरिंदमः. — After 7, T G2 ins.:

774* शशाङ्ककुन्दधवलं मुखे निक्षिप्य वासविः ।
उच्छ्वसद्गण्डयुगुलं सिराळ्याचितफालकम् ।
आयत्तनिम्ननयनं ह्रस्वस्थूलशिरोधरम् ।
अतिश्लिष्टोदरोरस्कं तिर्यगाननशोभितम् ।
यावत्स्वशक्तिसामर्थ्यं त्रैलोक्यं क्षोभयन्निव । [5]
मरुद्भिर्दशभिश्चैव प्राधमापयदरिंदमः ।

[ (L. 1) G2 °शंख° (for °कुन्द°). — (L. 3) T1 आरक्त° (for आयत्त°). — (L. 4) T2 °शिष्टो° (for °श्लिष्टो°), and आयत° (for आनन°). — (L. 5) T2 °सामर्थ्यं (for °सामर्थ्यं). ]

T (T2 om. line 3) G2 cont.: G1.3 M ins. after 7:

775* शङ्खशब्दोऽस्य सोऽत्यर्थं श्रूयते कालमेघवत् ।
तस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
वानरस्य च नादेन रथनेमिस्वनेन च ।
जङ्गमस्य भयं घोरमकरोत्पाकशासनिः ।

[ (L. 1) T G2 शंखशब्दः स चात्यर्थं श्रूयतेशनिर्बिंबवत्. ]

8 D3 om. $8^{ab}$; and transp. $7^{cd}$ and $8^{cd}$. — $^{ab}$) A few MSS. धूर्यां. S शंखशब्देन पार्थस्य मुखेनाश्वाः पतन्क्षितौ. — $^{c}$) B2 D5(m as in text) संलीनो; D4 संविग्नो; D6 संभ्रांतो (for संत्रस्तो).

9 $^{ab}$) S अथाश्वान्रश्मिभिः पार्थः समुद्यम्य परंतपः. — After $9^{ab}$, S ins.:

776* व्यभ्राजत रथोपस्थे भानुर्मेराविवोत्तरे ।
शङ्खशब्देन वित्रस्तं ज्याघातेन च मूर्छितम् ।

[ (L. 1) T2 G2 M3.5 विभ्राजति (for व्यभ्राजत). T2 उदितः (for उत्तरे). — (L. 2) G2 °स्वनेन (for °घातेन). ] — $^{c}$) B5 तु; S सं- (for च). — $^{d}$) B (except B2)

C. 4. 1446 B 4. 46. 11 K. 4. 45. 16 कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि ॥ १०
श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः ।
कुञ्जराणां च नदतां व्यूढानीकेषु तिष्ठताम् ॥ ११
स त्वं कथमिहानेन शङ्खशब्देन भीषितः ।
विषण्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा ॥ १२

उत्तर उवाच ।

श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः ।
कुञ्जराणां च निनदा व्यूढानीकेषु तिष्ठताम् ॥ १३
नैवंविधः शङ्खशब्दः पुरा जातु मया श्रुतः ।
ध्वजस्य चापि रूपं मे दृष्टपूर्वं न हीदृशम् ।
धनुषश्चैव निर्घोषः श्रुतपूर्वो न मे क्वचित् ॥ १४
अस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
रथस्य च निनादेन मनो मुह्यति मे भृशम् ॥ १५
व्याकुलाश्च दिशः सर्वा हृदयं व्यथतीव मे ।
ध्वजेन पिहिताः सर्वा दिशो न प्रतिभान्ति मे ।
गाण्डीवस्य च शब्देन कर्णौ मे बधिरीकृतौ ॥ १६

अर्जुन उवाच ।

एकान्ते रथमास्थाय पद्भ्यां त्वमवपीडय ।
दृढं च रश्मीन्संयच्छ शङ्खं ध्मास्याम्यहं पुनः ॥ १७

वैशंपायन उवाच ।

तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।
गाण्डीवस्य च घोषेण पृथिवी समकम्पत ॥ १८

Dn2 D2–8.10–12 प्रत्या° (for समा°).

10 Before 10, Ś1 K B Dn D5.6.7 (*sup. lin.*).11.12 M (except M3) ins. अर्जुन उ° (resp. अर्जुनः). — a) Dn1 कथं तु पुरुषव्याघ्र.

11 =(var.) 13. — Ś1 K (? hapl.) om. 11–12. — b) D6 वीर° (for भेरी°). Dn2 D2–4.7–12 S सर्वशः (for पुष्कलाः). — c) B4 पुष्कराणां (for कुञ्जराणां). Dn2 D4.10 T1 G1.3 च निनदा; D2.3 निनादाश्च; D7.9 विनदतां; D8 च नादानां (for च नदतां). — d) B4 रथानीकेषु; D4 व्यूह्यानी°. T G नित्यशः (for तिष्ठताम्).

12 Ś1 K om. 12 (cf. v. l. 11); M3 (hapl.) om. 12–13. — a) S (except M5; M3 om.) इव (for इह). — c) Dn1 T G2 विवर्ण° (for विषण्ण°).

13 =(var.) 11. — M3 om. 13 (cf. v. l. 12); G2 om. $13^{a}$–$14^{b}$. — a) Dn2 D2.3.11.12 श्रुता मया शंखशब्दा. — b) Dn2 D2.3.7–9.11.12 S (G2 M3 om.) सर्वशः (for पुष्कलाः). — c) Ś1 B2 Dn1 D7 निनदतां; B1.3–5 D5.6.8.9 T2 M (M3 om.) च नदतां; D3 निनादाश्च (for च निनदा). — d) B4 रथा° (for व्यूढा°).

14 G2 om. $14^{ab}$ (cf. v. l. 13). — ab) Ś1 D4.8 S (G2 om.) °विधाः, °शब्दाः and श्रुताः. — c) B3.5 चास्य (for चापि). — e) T G2 शब्दश्च; G1 नादोयं; G3 M घोषश्च (for निर्घोषः).

15 Ś1 K1 om. (hapl.) $15^{b}$–$16^{e}$. — b) Most N Mss. निःस्वनेन. — After $15^{ab}$, B Dn D5.6.7 (marg.).9 (marg.).11.12 ins.:

777* अमानुषाणां शब्देन भूतानां ध्वजवासिनाम् ।
[ D6 अमानुषेण (for °षाणां). ]

— c) D4 तु; D10 एव (for च). S रथनेमिप्रणादेन. — d) G1.3 M मनो मे मुह्यते भृशं.

16 Ś1 K1 om. all but $16^{f}$ (cf. v. l. 15). — b) T G2 M2 च (for मे). D7.9 व्यथते हृदयं च मे; D10 हृदयं व्यथतीति च; G1.3 हृदयं भ्रमतीव च (G1 मे). — c) K2 D2.3.7–9 रजसा (for ध्वजेन). — e) D3.4.7–9 गांजीवस्य. — D3 (hapl.) om. from शब्देन (in $16^{e}$) up to गाण्डीवस्य च (in $18^{c}$). — After 16, B5 ins.:

778* तान् * * परिभाषन्तमुत्तरं युद्धदुर्मदः ।

B5 cont.: B1.3.4 Dn2 D11.12 ins. after 16:

779* स मुहूर्तं प्रयातं तु पार्थो वैराटिमब्रवीत् ।

On the other hand, S ins. after 16:

780* वैशंपायनः ।
पुनर्ध्वजं पुनः शङ्खं धनुश्चैव पुनः पुनः ।
संमूढचेता वैराटिरर्जुनं समुदैक्षत ।
अर्जुनः ।
स्थिरो भव महाबाहो संज्ञां चात्मानमानय ।

[ (L. 1) G1.3 रथध्वजं (for पुनर्ध्वजं). — (L. 3) M3 °बुद्धे (for °बाहो). G1.3 सत्वं (for संज्ञां). G3 चात्मनि मानय (for चात्मानमानय). ]

17 D3 (hapl.) om. 17 (cf. v. l. 16). S om. the ref. — a) B1.2.5 D6.9.11.12 Cs एकांतं; T2 एकांतो; Cr.v एकान्ते (as in text). ❀Cn: एकान्तं सुदृढम् । सप्तम्यन्तपाठस्तु लेखप्रमादः ।❀ — b) Ś1 B2 Dn2 D11.12 अवपीडयन्; B4 परिपीडयन्; D2.7.9 अनुपीडय (D2 °यन्); D4 पीडयाधुना; D10 अपि पीडय; S अव(G1.3 °भि)पीड्य च. Cr cites पीडय. — c) K B3 रश्मींश्च (by transp.). — After 17, B3 ins.:

द्रोण उवाच ।
यथा रथस्य निर्घोषो यथा शङ्ख उदीर्यते ।
कम्पते च यथा भूमिर्नैषोऽन्यः सव्यसाचिनः ॥ १९
शस्त्राणि न प्रकाशन्ते न प्रहृष्यन्ति वाजिनः ।
अग्नयश्च न भासन्ते समिद्धास्तन्न शोभनम् ॥ २०
प्रत्यादित्यं च नः सर्वे मृगा घोरप्रवादिनः । C. 4. 1462 B. 4 46. 26 K. 4. 46. 5

781* न भयं विद्यते चान्यन्मयि तिष्ठति संयुगे ।
पश्य बाहुबलं वीर युध्यतः शत्रुभिः सह ।;
while T1 ins.:
782* स्थिरीकुरुष्व हृदयं यथा शब्दो महान्भवेत् ।
T1 cont.: T2 G M ins. after 17:
783* एवमुक्त्वा महाबाहुः सव्यसाची परंतपः ।
प्रदध्मौ च महाशङ्खं देवदत्तमनुत्तमम् ।
ज्याघोषं तलघोषं च कृत्वा भूतान्यमोहयत् ।
18 After the ref., D7 (marg. *sec. m.*) ins.:
784* ततः स पुनरेवाथ तं शङ्खं प्राधमद्बली ।
द्विषतां दुःखजननं सुहृदां प्रीतिवर्धनम् ।
D7 cont.: B Dn D5. 6. 10–12 ins. after the ref.:
785* ततः शङ्खमुपाध्मासीद्दारयन्निव पर्वतान् ।
गुहा गिरीणां च तदा दिशः शैलांस्तथैव च ।
उत्तरश्चापि संलीनो रथोपस्थ उपाविशत् ।
[ (L. 1) Dn2 D11. 12 पूरयन् (for दारयन्). — After line 1, D8 ins. line 2 of 784* (v. l. °जनकं for °जननं and हर्ष° for प्रीति°). — (L. 2) Dn1 तथा; D10 ततो (for तदा). ]
D5 marg. cont.:
786* ततोऽर्जुनः शङ्खशब्दं चकारातीव दुःसहम् ।
— D3 om. 18 up to गाण्डीवस्य च (in ᶜ) (cf. v. l. 16). — ᶜ) D4. 7–9 गांजीवस्य. B1. 3 Dn2 D11. 12 S (except M5) शब्देन (for घोषेण). — ᵈ) D2. 3. 9 °कंपयत् (for °कम्पत). — After 18, K2 ins.:
787* श्रुत्वा शब्दं तदा द्रोणो गाङ्गेयं वाक्यमब्रवीत् ।;
while B2–4 ins.:
788* उत्तरं तु रथे दृष्ट्वा शङ्खशब्देन मोहितम् ।
But after 18, D10 *repeats* 8ᵃᵇ and cont.:
789* स रथः संस्मृतस्तेन उपायाद्वानरध्वजः ।
B1 Dn D5. 6. 11. 12 ins. after 18: B2–4, after 788*: D10, after 789*:
790* तं समाश्वासयामास पुनरेव धनंजयः ।
D5. 10 cont.:
791* ततो द्रोणो महाबुद्धिः सर्वशस्त्रभृतां वरः ।
उवाच ह कुरोर्मध्ये सर्वं संबोधयन्निव ।
On the other hand, after 18, S ins. an addl. colophon (*Sub-parvan:* T1 M1. 2 गोग्रहणं. — *Adhy. no.:* T G M1. 5 44; M2–4 34). — After the addl. colophon, T1 ins.:
792* वैशंपायनः ।
शङ्खशब्दं च तं श्रुत्वा मेघस्य निनदं यथा ।
गाण्डीवज्यास्वनेनैव विस्मयोत्फुल्ललोचनः ।
T1 (om. the ref.) cont.: T2 G M ins. after the addl. colophon.
793* वैशंपायनः ।
भारद्वाजस्ततो द्रोणः सर्वशस्त्रभृतां वरः ।
रा नं चाह संप्रेक्ष्य दुर्योधनमरिंदमम् ।
[ (L. 2) T2 अरिंदमः; M5 अमर्षणं (for अरिंदमम्). ]
19 T2 G2 M3 om. the ref. — K2 D4. 7. 9 ins. after the ref.: D3. 8, after 795*: D6 (marg.), after 4. 48. 3: D10, after 4. 48. 17:
794* नदीज लङ्केशवनारिकेतु-
र्नगाह्वयो नाम नगारिसूनुः ।
एषोऽङ्गनावेषधरस्तरस्वी
विजेष्यते सर्वकुरुप्रवीरान् ।
[ (L. 1–2) = lines 2–3 of 683* and lines 1–2 of 686* (cf. v. l. 4. 37. 8, 9). — (L. 3) K2 किरीटी; D4 प्रमाथी (for तरस्वी). — (L. 4) D10 जित्वाव यं नेष्यति चाद्य गा वः (= last line of 686*). ]
— D7. 9 (marg. *sec. m.*) cont.: D3. 8 ins. after the ref.:
795* एषा न योषा यदि योषिदेषा
तस्यैव या शुम्भनिशुम्भहन्त्री ।
मायामयस्त्रीवपुरातनोति
लीलायितं वा पुरुषः पुराणः ।
— D4 ins. after 794*:
796* यथेन्द्रजित्क्षत्रियाण्यङ्गनेयं
गुरुर्बभाषे वचनं किलैतत् ।
— ᵇ) K2 B Dn D2–9. 11. 12 मेघः (for शङ्खः). D4 न (or वि-) दीर्यते. D10 यथा मेघस्य निःस्वनः. — ᶜ) D6 प्रकंपते (for कम्पते च). — After 19, S (G1 om. line 2) ins.:
797* औत्पातिकमिदं राजन्निमित्तं भवतीह नः ।
न हि पश्यामि विजयं सैन्येऽस्माकं परंतप ।
20 G1 om. (hapl.) 20ᵃ–21ᵇ. — ᵃ) Ś1 न शस्त्राणि (by transp.). B4 Dn1 D5. 6 अस्त्राणि (for शस्त्राणि). K1 प्रकुप्यंते; K2 प्रसंसंते (sic) (for प्रकाशन्ते). — ᵇ) B4 हृष्यंति च (for प्रहृष्यन्ति). D2 वा हयाः; S (except M5; G1 om.) वाहनाः (for वाजिनः). — ᶜ) Ś1 T2 शोभंते; Cv

C 4. 1462 B. 4. 46 26 K 4. 46. 12

ध्वजेषु च निलीयन्ते वायसास्तत्र शोभनम् ।
शकुनाश्चापसव्या नो वेदयन्ति महद्भयम् ॥ २१
गोमायुरेष सेनाया रुवन्मध्येऽनुधावति ।
अनाहतश्च निष्क्रान्तो महद्वेदयते भयम् ।
भवतां रोमकूपाणि प्रहृष्टान्युपलक्षये ॥ २२
पराभूता च वः सेना न कश्चिद्योद्धुमिच्छति ।
विवर्णमुखभूयिष्ठाः सर्वे योधा विचेतसः ।
गाः संप्रस्थाप्य तिष्ठामो व्यूढानीकाः प्रहारिणः ॥ २३

इति श्रीमहाभारते विराटपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

भासन्ते (as in text). — $^{d}$) B4 शोभते (for शोभनम्). S (G1 om.) सुसमिद्धा न शोभनं (M2 °द्धा हुताशनाः).

21 G1 om. $21^{ab}$ (cf. v. l. 20). — $^{a}$) Ś1 K प्रत्यादिष्टाः (Ś1 °ष्टं); Cc प्रत्यादिस्रं (as in text). — $^{b}$) D2.3.7.9 °णादिनः (for °वादिनः). S (G1 om.) मृगा घोरा नदंति च. — S reads $21^{cd}$ after line 3 of 800* (cf. v. l. 23). — $^{c}$) D5 m.7.9 S ध्वजाग्रेषु (for ध्वजेषु च). D5 प्रवि-; D8 वि नि- (for च नि-). G1 ध्वजाग्रेष्ववलीयंते. — G1 om. $21^{e}$–$23^{d}$. — $^{e}$) S (G1 om.) च (for नो).

D1 resumes from $21^{f}$.

22 G1 om. 22 (cf. v. l. 21). — $^{a}$) Ś1 K2 B1–3.5 Dn D3.5.7.9.11.12 T2 G2 सेनायां; B4 D4 T1 M2.3 सेनानां; D8 G3 सैन्यानां. — $^{b}$) Ś1 K2 B1 Dn D1.3.7–9.11.12 T G2.3 M1 Cv (?) रुदन् (for रुवन्). B1 Dn D4.9–12 G3 Cv मध्येन; B2–5 D1–3.5–7 मध्ये प्र-; D8 मध्ये च (for मध्येऽनु-). — $^{c}$) N MSS. (mostly) निःक्रांतो. S (G1 om.) चाषा (G3 भासा) नदंति चाकाशे. — $^{d}$) Ś1 भयं वेदयते महत्; S (G1 om.) वेदयंतो महद्भयं. — Ś1 K om. $22^{ef}$. — $^{e}$) S (G1 om.) चैव रोमाणि (for रोमकूपाणि). — $^{f}$) B3 D7 च; B5 D1–4.7 (*sup. lin.*).8.10 प्र-; D6 इव (for उप-). S (G1 om.) संहृष्टा(G3 हृषिता)न्येव (M1.2 °नीव; M3 °न्युप-) लक्षये. — After 22, N (Ś1 K om. line 6; D10 om. line 7) ins.:

798* ध्रुवं विनाशो युद्धेन क्षत्रियाणां प्रदृश्यते ।
ज्योतींषि न प्रकाशन्ते दारुणा मृगपक्षिणः ।
उत्पाता विविधा घोरा दृश्यन्ते क्षत्रनाशनाः ।
विशेषत इहास्माकं निमित्तानि विनाशने ।
उल्काभिश्च प्रदीप्ताभिर्बाध्यते पृतना तव ।
वाहनान्यप्रहृष्टानि रुदन्तीव विशां पते ।
उपासते च सैन्यानि गृध्रास्तव समन्ततः ।
तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् ।

[(L. 1) B2.4 D10 युद्धेषु; B5 युद्धेस्मिन् (for युद्धेन). For line 1, D6 reads line 4 (for the first time), repeating it in its proper place. — (L. 3) D1–8 विहिता (for विविधा). — (L. 4) Dn2 D11.12 इव (for इह). Ś1 K विशेषेणेह चास्माकं (for the prior half). — (L. 5) D1–4.7.8.10 हि (for च). Dn2 D11.12 उल्काभिरिव दीप्ताभिः (for the prior half). Ś1 K उल्काश्चापि प्रदीप्ताग्रा बुध्यंते (Ś1 दृश्यंते) पृतनांतरे. — (L. 7) D1.3.8 उपासंते (for °सते). D5 m.7 रौद्राः (for तव). Ś1 K गृध्रास्ते (Ś1 °श्र) पर्युपासंते सैन्यानि च समंततः (Ś1 सैनिकानि न संशयः). — Ś1 repeats $22^{ef}$ after line 7, K D4 after line 8 (v. l. न प्रहृष्टानि लक्षये for the posterior half).]

On the other hand, S (G1 om ) ins. after 22:

799* अनुष्णाङ्गाश्च संस्विन्ना जृम्भन्ते चाप्यभीक्ष्णशः ।
विष्टम्भन्तीह मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः ।
सदा मूत्रं पुरीषं च उत्सृजन्ते पुनः पुनः ।
लोहिताद्री च पृथिवी दिशः सर्वाः प्रधूपिताः ।
न च सूर्यः प्रतपति महद्वेदयते भयम् ।
हस्तिनश्चापि वित्रस्ता योधाश्चापि वितत्रसुः ।

23 G1 om. $23^{abcd}$ (cf. v. l. 21). — $^{a}$) B4 D7.9 परिभूता; T1 पराहता. B4 एव; M (except M3) इव (for च). D5.6.10 M (except M3) नः (for वः). — $^{c}$) T G2 M विषण्ण°. — $^{d}$) Ś1 प्रहारिणः (for विचेतसः). — S ins. after $23^{cd}$ (G1, which om. $21^{e}$–$23^{d}$ as also lines 1–3 of the following passage, ins. after $21^{cd}$):

800* दिशं ते दक्षिणां सर्वे विप्रेक्षन्ते पुनः पुनः ।
मृगाश्च पक्षिणश्चैव सव्यमेव पतन्ति नः ।
वादित्रोद्घुष्टघोषाश्च न गाढं प्रस्वनन्ति नः ।
यथा मेघस्य निनदो गम्भीरस्तूर्णमायतः ।
श्रूयते रथनिर्घोषो नायमन्यो धनंजयात् ।
अश्वानां स्वनतां शब्दो वहतां पाकशासनिम् ।
वानरश्च ध्वजो नित्यो निःसङ्गं धूयते महान् ।
शङ्खशब्देन पार्थस्य कर्णौ मे बधिरीकृतौ ।
सर्वसैन्यं च वित्रस्तं नायमन्यो धनंजयात् ।
राजानमग्रतः कृत्वा दुर्योधनमरिंदमम् ।

[(L. 1) M5 अथ सर्वशः (for पुनः पुनः). — (L. 3) T2 M1.3 च (for नः). — After line 3, S reads $21^{cd}$. — (L. 7) T रथे दिव्ये; G1.3 रथो दिव्यो; M1.3 ध्वजो

# ४२

वैशंपायन उवाच ।

अथ दुर्योधनो राजा समरे भीष्ममब्रवीत् ।
द्रोणं च रथशार्दूलं कृपं च सुमहारथम् ॥ १
उक्तोऽयमर्थ आचार्यो मया कर्णेन चासकृत् ।
पुनरेव च वक्ष्यामि न हि तृप्यामि तं ब्रुवन् ॥ २
पराजितैर्हि वस्तव्यं तैश्च द्वादश वत्सरान् ।
वने जनपदेऽज्ञातैरेष एव पणो हि नः ॥ ३
तेषां न तावन्निर्वृत्तं वर्तते तु त्रयोदशम् ।
अज्ञातवासं बीभत्सुरथास्माभिः समागतः ॥ ४
अनिवृत्ते तु निर्वासे यदि बीभत्सुरागतः ।
पुनर्द्वादश वर्षाणि वने वत्स्यन्ति पाण्डवाः ॥ ५
लोभाद्वा ते न जानीयुरस्मान्वा मोह आविशत् ।
हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ॥ ६
अर्थानां तु पुनर्द्वैधे नित्यं भवति संशयः ।
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति चान्यथा ॥ ७
उत्तरं मार्गमाणानां मत्स्यसेनां युयुत्सताम् । C. 4. 1478 B 4 47. 8 K. 4. 47. 8

दिव्यो (for ध्वजो नित्यो). T G1. 3 निस्वनः (for निःसङ्गं). ] — c) K संस्थाप्य तु; D6 T1 G2 च प्रस्थाप्य; D7. 8 T2 M प्रस्थाप्य च (D7. 8 तु); G1. 3 प्रतिष्ठाप्य (for संप्रस्थाप्य). — After 23, S ins.:

801* प्रविभज्य त्रिधा सेनां समुच्छ्रित्य ध्वजानपि ।
दिक्षु गुल्मा निवेश्यन्तां यत्ता योत्स्यामहेऽर्जुनम् ।

[ After line 1, T1 ins.:

802* शितैर्बाणैः प्रतप्स्येमां चमूमेष धनंजयः ।
मूर्ध्नि सर्वनरेन्द्राणां वामपादं करिष्यति ।
न ह्येष शक्यो बीभत्सुर्जेतुं देवासुरैरपि । ]

Colophon. — *Sub-parvan:* Ś1 K1 गोग्रह; B2. 4 D (except D5) उत्तरगोग्रह; M1. 2 गोग्रहण. — *Adhy. name:* B1–3 D5 औ(B1 ओ)त्पातिकं; B4 D10 औत्पातिकः; B5 औत्पातकं; Dn1 औत्पतिकः; D3. 4 M2. 3 द्रोणवाक्यं. — *Adhy. no.* (figures, words or both): K1 D5. 10 41; B4 M2–4 44; D3. 6 43, D7 39; T G M1. 5 45. — *S'loka no.:* D3 33; G3 17.

## 42

1 a) Ś1 S ततो (for अथ). — c) D3. 9 G2 रथिशार्दूलं; D4 T1 G1. 3 नरशा°; D10 रथमारूढं. — d) B (except B1) D1–5. 7–10 °बलं (for °रथम्). Dn2 D11. 12 G1 कृपं चैव महारथं.

2 a) D6 Cv अर्थे (for अर्थ). Ś1 B2. 3. 5 D11. 12 Cn आचार्यौ; B1. 4 D1–9 S आचार्ये; D10 आचार्या; Cr. v. np as in text. Cr analyses: आचार्य उ संबोधने. K उक्तपूर्वोयमाचार्यो. — c) B (except B1) Dn D11. 12 प्र (for च). — d) K नाहं; B2 D5 G1 न च; D1. 2 नाभि°; Cv न हि (as in text). Cv मृष्यामि (for तृप्यामि). Ś1 वै; K ते; Cc तं (as in text).

3 Ś1 om. 3. — a) B4 परिज्ञातैर्; Dn1 पराभूतैर् (for पराजितैर्). B1. 3–5 D5 नि°; B2 Dn2 D7. 9. 10. 12 G1. 3 M (except M4) वि°; D3 च (for हि). K यदा स्थितं वा सत्यं तैः. — b) Dn2 D11. 12 तैर्हि; D1–4. 8 वने; D7 एतैर्; D10 तैर्वा; G1. 3 एतद् (for तैश्च). K द्वादशैव हि वत्सरान्; B2. 4 D5 तैर्द्वादश हि व°; D6 तैर्द्वादश समा वने. — c) K पुरे; D1–3. 6. 10 एकं; D4 एको; Cc वने (as in text). K °ज्ञाते; D7 त्वेकं; D9 चैक (for ऽज्ञातैर्). — d) K Dn2 D1–3. 10–12 एवमेष; B1. 3 एवं हि स; B2 D5 एकं हि सं; M4. 5 एक एव (for एष एव). K1 सः (for नः). D1–3 पणः कृतः (for पणो हि नः). B4 D4. 6. 8 एष नः (B4 एवं हि; D6 तैरेष) समयः कृतः; D7. 9 अज्ञातैः परिवत्सरं.

4 a) D2. 3. 5. 10 निवृत्तं; T1 G1. 3 निर्वृत्तो (for निर्वृत्तं). D4 एषां नः परिनिर्वृत्तं; D8 तेषां न परिवृत्तं तु. — b) K अद्य; B2. 3 D5 च; D4 अत्र; D6 हि; T2 तत् (for तु). T1 G M वत्सरं तु (T1 °रस्तत्; G1 °स्य; G2 °रं न; G3 °रः स; M4. 5 °रं तत्) त्रयोदशं (T1 G1. 3 °शः). — c) Ś1 B5 Dn1 D9 °वासो; D7 S °वासे (for °वासं). — d) K B3 तथा (for अथ). K अस्माकं (for अस्माभिः). D8 सहागतः; S परिश्रुतः (G1 समाहितः) (for समागतः).

5 a) D1. 2. 6 T2 G1 M1. 2 अनिर्वृत्ते. D1. 3 निवासे तु (for तु निर्वासे). — b) B2. 3 D4. 5 बीभत्सुर्यदि चागतः.

6 a) B4 G3 मोहाद् (for लोभाद्). — b) K1 B2 अस्माकं (K1 अस्मान्वा also). D4. 8 लोभ (for मोह). M1–3 आविशेत् (for °शत्). — d) B4 विज्ञातुमर्हति.

7 a) B2. 4 Dn1 D9. 10 च; S हि (for तु). K2 अनर्थानां पुनर्द्वैधे. Cc. r cite अर्थानां (as in text). — B4 ins. after 7ab: B2. 3 D6, after 7:

C. 4. 1479 B. 4. 47 8 यदि बीभत्सुरायातस्तेषां कः स्यात्पराङ्मुखः ॥ ८
त्रिगर्तानां वयं हेतोर्मत्स्यान्योद्धुमिहागताः
मत्स्यानां विप्रकारांस्ते बहूनस्मानकीर्तयन् ॥ ९
तेषां भयाभिपन्नानां तदस्माभिः प्रतिश्रुतम् ।
प्रथमं तैर्ग्रहीतव्यं मत्स्यानां गोधनं महत् ॥ १०
सप्तमीमपराह्णे वै तथा नस्तैः समाहितम् ।
अष्टम्यां पुनरस्माभिरादित्यस्योदयं प्रति ॥ ११
ते वा गावो न पश्यन्ति यदि वा स्युः पराजिताः ।
अस्मान्वाप्यतिसंधाय कुर्युर्मत्स्येन संगतम् ॥ १२
अथवा तानुपायातो मत्स्यो जानपदैः सह ।
सर्वया सेनया सार्धमस्मान्योद्धुमुपागतः ॥ १३
तेषामेव महावीर्यः कश्चिदेव पुरःसरः ।

803* स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः ।
— $^{c}$) D5 M2 विहितो; Cr चिन्तितो (as in text). — $^{d}$) B D (except D6) स:; G1 न (for च).

8 $^{b}$) B (except B4) Dn D10–12 मत्स्यानां च (D11.12 म-); T G2 M1.5 मात्स्यसेनां. — $^{c}$) D6.10 आयाति (for आयात:). — $^{d}$) B Dn1 D5.6 तदा (for तेषां). Ś1 B Dn D5.6.10–12 कस्यापराङ्मुखः (for कः स्यात्पराङ्मुखः). D7 m कृतं कार्यं भविष्यति; S किं नः (G1.3 नु) कृत्य(T2 G2 कार्य)मतः परं.

9 $^{ab}$) D1–3 उपागताः (for इहागताः). S त्रिगर्तानामिदं कार्यं पांडवानां च मार्गणं. — $^{c}$) Ś1 K मत्स्या हि (for मत्स्यानां). Ca विप्रकाराणि (for °कारांस्ते). Cv cites विप्रकारान् (as in text). S विप्रकारैर्हि मात्स्येन. — $^{d}$) Ś1 बहूनि (for बहून्). B2.4 Dn2 D1–4.6.7.10 अस्मासु (D4 °न्सु) (for अस्मान्). K प्रकीर्त°; D8 च कीर्त° (for अकीर्त°). S सुशर्मा बाधितः पुरा.

10 $^{a}$) N (except Ś1 K) भयाभिभूतानां. — After 10$^{a}$, S ins.:

804* त्रस्तानां त्राणमिच्छताम् ।
अभयं याचमानानां.

— $^{b}$) K2 D4.8 तदा; D10 तथा; Cs तद् (as in text). K D9 परि°; Cs प्रति° (as in text).

11 $^{a}$) Ś1 B1.2.4 Dn D1–4.7–12 सप्तम्याम्. Dn2 D11.12 च (for वै). S अष्टम्यां चापराह्णे (T2 G2 om. च) तु. — $^{b}$) S इति (for तथा). B4 Dn1 तैश्च; D1.3 चास्मै (for नस्तैः). G1.3 समीरितं; Ca.c.v समाहितं (as in text). — M2 om. 11$^{cd}$. — $^{c}$) B3.5 D6 अष्टमीं; S (M2 om.) नवम्यां; Cc अष्टम्यां (as in text). — $^{d}$) S सूर्यस्योदयनं प्रति. — Ś1 B Dn D5.6.7 (marg.).10–12 S ins. after 11 (M2, which om. 11$^{cd}$, after 11$^{ab}$):

805* इमा गावो गृहीतव्या गते मत्स्ये गवां पदम् ।
[ S याते मा(G1 म)त्स्ये (for गते मत्स्ये). ]

S cont.:

806* इत्येष निश्चयोऽस्माकं मन्त्रोऽभूत्नागसाह्वये ।
पाण्डवानां परिज्ञाने सर्वेषां नः परस्परम् ।

[ (L. 1) T2 G2 एवं (for एष). ]

12 $^{a}$) K1 त्रिगर्ताः (obviously taken over into the text from a marg. gloss); K2 तेषां; D9 तैर्वा; G1 तेन; Ca ते वा (as in text). Cr.s.v cite ते. D1–3 गाश्च; G1 नागो; Ca गावो (as in text). B1–4 D5.10 Ca नयिष्यंति; D6 तु नेष्यंति; D8.9 न दृश्यंते (for न पश्यन्ति). B5 Dn1 ते गावश्चानयिष्यंति; Dn2 D4.11.12 ते वा (D4 तेषां) गा नैव पश्यंति. — $^{b}$) Ś1 B (except B1) D1–10 ते; K1 त्रिगर्ताः (originally a marg. gloss); K2 तैः; Cv स्युः (as in text). — $^{c}$) Ś1 K D6 अभिसं° (K1 corrupt); B1.4.5 Dn D11.12 ह्युपसं°; B3 D1–5.7–10 अप्युपसं°; Cap.rp (Dev.) अपसं°. Ca.r.s cite उपसंधाय. — $^{d}$) S (except G1 M5) मात्स्येन. B3 m T G1.3 Ca संगतिं; D3 M5 संगमं; Cr.s.v as in text.

13 $^{a}$) Ś1 समायातो; B1.2.5 Dn2 D1.3–5.8.11.12 Cn.s अपाहाय; B3 Dn1 D2.7.9.10 S उपादाय (for उपायातो). — $^{b}$) S (except G3) मात्स्यो. Ś1 B (except B4) Dn D4.9.11.12 T2 जन° (for जान°). — $^{c}$) Dn2 D11 m स सर्व-; D3 T1 G1 सर्वथा (for सर्वया). — After 13$^{c}$, N ins.:

807* संवृतो भीमरूपया ।
आयातः केवलां रात्रिम्.

[ (L. 1) Dn1 संवृत्तो; Dn2 D5.11.12 संभूतो; D8 सर्वतो (for संवृतो). D7 °सेनया (for °रूपया). — (L. 2) Ś1 D1.3.10 Ca.v.rp (Dev.) आ(Ś1 अ)यात्वा; K1 अथ वा; K2 B3.5 D5.6 आयाद्वा; B4 D7 आगत्य; D4 अयोध्वा; D7 (marg. *sec. m.*).9 आयाति; Cs आयातः (as above). K2 B2 D2.3.9 Cn.s केवलं; D7 सकलां (for केवलां). ]

— $^{d}$) D1 मत्स्यान्; D4 यदि; Cs अस्मान् (as in text). Ś1 B (except B4) Dn1 D5.9 Cn.s इहागतः (for उपागतः). S अस्मानेव (T1 °ष) युयुत्सति.

14 $^{a}$) D3 एष; D11.12 एवं; S एको (for एव). — $^{b}$) B (except B5) Dn D5–7.9–12 एष; T1 G1.3 एकः (for एव). — $^{c}$) D4–6.8.10 योद्धुम् (for जेतुम्). K2 G1 उपायाति; D4.6.8.10 उपायातो (for इहा°). — M2

अस्माञ्जेतुमिहायातो मत्स्यो वापि स्वयं भवेत् ॥ १४
यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः ।
सर्वैर्योद्धव्यमस्माभिरिति नः समयः कृतः ॥ १५
अथ कस्मात्स्थिता ह्येते रथेषु रथसत्तमाः ।
भीष्मो द्रोणः कृपश्चैव विकर्णो द्रौणिरेव च ॥ १६
संभ्रान्तमनसः सर्वे काले ह्यस्मिन्महारथाः ।
नान्यत्र युद्धाच्छ्रेयोऽस्ति तथात्मा प्रणिधीयताम् ॥ १७
आच्छिन्ने गोधनेऽस्माकमपि देवेन वज्रिणा ।
यमेन वापि संग्रामे को हास्तिनपुरं व्रजेत् ॥ १८
शरैरभिप्रणुन्नानां भग्नानां गहने वने ।
को हि जीवेत्पदातीनां भवेदश्वेषु संशयः ।
आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ॥ १९
जानाति हि मतं तेषामतस्त्रासयतीव नः ।
अर्जुनेनास्य संप्रीतिमधिकामुपलक्षये ॥ २०
तथा हि दृष्ट्वा बीभत्सुमुपायान्तं प्रशंसति ।
यथा सेना न भज्येत तथा नीतिर्विधीयताम् ॥ २१
अदेशिका महारण्ये ग्रीष्मे शत्रुवशं गता ।
यथा न विभ्रमेत्सेना तथा नीतिर्विधीयताम् ॥ २२ C. 4. 1495 B. 4. 47. 23 K. 4. 47. 24

om. $14^{d}$–$16^{a}$. — $^{d}$) D8 T2 G2.3 M (M2 om.) मात्स्यो (for मत्स्यो).

15 M2 om. 15 (cf. v. l. 14). — $^{a}$) T G1.2 M5 मात्स्यानां (for मत्स्यानां). — $^{c}$) B2.3 (m as in text) D5 तद्दै (for सर्वैर्). M3 अपि च योद्धव्यं (for योद्धव्यमस्माभिः). — $^{d}$) D1.3 एष (for इति). — After 15, M4 ins.:

808* शरैरेनं सुनिशितैः पातयिष्यामि भूतले ।

16 M2 om. $16^{a}$ (cf. v. l. 14). — $^{a}$) Ś1 K1 अथाकस्मात्. D4 om. हि. — $^{b}$) D4 T1 G1.2 रथि°; D6 नर° (for रथ°). D5 रथे पुरुषसत्तमाः. — $^{c}$) D4.7–9 T1 G2 कर्णः (for चैव). Dn1 D2 भीष्मद्रोणकृपाश्चैव; T1 G1 भीष्मद्रोण(T1 °णौ)विकर्णा(T1 °र्ण)श्च. — $^{d}$) T1 G1 कृपश्च (for विकर्णो).

17 $^{a}$) B2.5 D5.6 सं(B2 वि)भ्रांतनयनाः; B4 संत्रस्तमनसः. — $^{b}$) D5 कार्ये; S प्राप्ते (for काले). D4 समागताः; S धनंजये (for महारथाः). — G1 om. $17^{c}$–$23^{d}$. — $^{d}$) Dn1 D3 प्रणिधीयते; Ca.c.n.s.v as in text. — After 17, S (G1 om.) ins.:

809* सर्वलोकेन वा युद्धं देवैर्वास्तु सवासवैः ।

18 G1 om. 18 (cf. v. l. 17). — $^{a}$) S (G1 om.) अनाच्छिन्ने पुनर्द्रव्ये. — S om. $18^{bc}$. — $^{d}$) G2.3 M4.5 हस्तिनपुरं.

19 G1 om. 19 (cf. v. l. 17). — $^{a}$) Ś1 B D5.7 G3 Cn एभिः; K D1–3.10 अपि (for अभि-). — After $19^{cd}$, B2 D5 read $21^{cd}$ with 811* (D5 reads 811* in marg.); while D7 (marg.) ins. 811* only. — After 19, Dn D10–12 ins.:

810* दुर्योधनवचः श्रुत्वा राधेयस्त्वब्रवीद्वचः ।

[ D10 राधेयस्त्विदमब्रवीत् (for the posterior half). ]

20 G1 om. 20 (cf. v. l. 17); M2 om. 20–22. — $^{a}$) D8 G3 M1.4.5 जानामि; T2 जानंति; Cv जानाति (as in text). S (G1 M2 om.) च (for हि). K गतिं; Cs.v मतं (as in text). — $^{b}$) K त्रासयते (for °यति). K च; B1 Dn1 D3.4.7–10 T2 M1.5 इह (for इव). — $^{c}$) B Dn D4–6.8.11.12 M3 अर्जुने चास्य; D10 °ने वास्य; T G2 M1.4.5 °ने चापि; G3 °ने वापि (for °नेनास्य).

21 G1 M2 om. 21 (cf. v. l. 17, 20); B2 om. $21^{ab}$. — $^{a}$) Ś1 D1–4.8.10–12 च; K तु; G3 M3 अपि (for हि). B4 दृष्ट्वा तु (for हि दृष्ट्वा). — $^{b}$) Ś1 K D4 T1 G2 उपयांतं; B3 उपायातं; B4 आयांतं सं-; G3 M4.5 उपयातं (for उपायान्तं). — B2 D5 read $21^{cd}$ (with 811*) after $19^{cd}$. K om. $21^{cd}$. — $^{c}$) D4 भिद्येत (for भज्येत). B3 (m as in text) G2.3 M (M2 om.) यथा ते(G2 M -ने)नाभिविख्यातं (G3 °तः); D6 यथा न विभ्रमेत्सेना; T यथा सेनानभिख्यातं. — After 21, N (except Dn1; for B2 D5.7 cf. v. l. 19) ins.:

811* हेषितं ह्युपश्रृण्वाने द्रोणे सर्वं विघट्टितम् ।

[ Ś1 K1 D2 ह्यप-; B2 D4.10 ह्यपि (for ह्युप-). D1–3 निवेदये; D7 प्रकाशितं; D9 प्रकंपितं; D10 विदं हितं; Cvp विचेष्टितं; Ca.c.s.v विघट्टितम् (as above). ]

22 G1 M2 om. 22 (cf. v. l. 17, 20); Dn1 D12 also om. 22. — $^{a}$) Ś1 अदेषिता; D1–3.8.9 Cv अदेशका; D4.5 आदेशिका; D7 (*sup. lin.* as in text) व्यादिशिका; Crp (Cat.) अदैशिका; Cc.r.s as in text. S (G1 M2 om.) ह्यरण्येस्मिन् (for महारण्ये). — $^{b}$) K1 Cs भीष्मे; S (G1 M2 om.) कृच्छ्रे (for ग्रीष्मे). Only Dn2 D10.11 Ca शत्रुवशं गता (as in text); Ś1 शत्रुविघट्टिता; the rest (with Cap) °वशं गताः. — $^{c}$) K वित्रसेत्; D1–3 संभ्रमेत्; Cv as in text. Ca cites the entire stanza (v. l. न

C 4 1497 B. 4 47.25 K. 4. 47.25 अश्वानां हेषितं श्रुत्वा का प्रशंसा भवेत्परे ।
स्थाने वापि व्रजन्तो वा सदा हेषन्ति वाजिनः ॥ २३
सदा च वायवो वान्ति नित्यं वर्षति वासवः ।
स्तनयित्नोश्च निर्घोषः श्रूयते बहुशस्तथा ॥ २४
किमत्र कार्यं पार्थस्य कथं वा स प्रशस्यते ।
अन्यत्र कामाद्द्वेषाद्वा रोषाद्वास्मासु केवलात् ॥ २५
आचार्या वै कारुणिकाः प्राज्ञाश्चापायदर्शिनः ।
नैते महाभये प्राप्ते संप्रष्टव्याः कथंचन ॥ २६
प्रासादेषु विचित्रेषु गोष्ठीष्वावसथेषु च ।
कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः ॥ २७
बहून्याश्चर्यरूपाणि कुर्वन्तो जनसंसदि ।
इष्वस्त्रे चारुसंधाने पण्डितास्तत्र शोभनाः ॥ २८
परेषां विवरज्ञाने मनुष्याचरितेषु च ।
अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः ॥ २९
पण्डितान्पृष्ठतः कृत्वा परेषां गुणवादिनः ।
विधीयतां तथा नीतिर्यथा वध्येत वै परः ॥ ३०
गावश्चैव प्रतिष्ठन्तां सेनां व्यूहन्तु माचिरम् ।
आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परान् ॥ ३१

इति श्रीमहाभारते विराटपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

त्रिश्रमेद्यथा सेना in $^{c}$). — B1 Dn D11 ins. after 22: D12 (which om. 22), after 811*:

812* इष्टा हि पाण्डवा नित्यमाचार्यस्य विशेषतः ।

B1 Dn1 cont.:

813* आसयन्नपरार्थांश्च कथ्यते स्म स्वयं तथा ।

[ Dn1 आसन्यन्नप°; Cn आसयन्नप° (as above). ]

23 G1 om. 23 (cf. v. l. 17); K om. 23$^{ab}$. — $^{a}$) Ś1 B1.2.4 Dn2 D10–12 ह्रेषितं; T ह्येषितं (for हेषितं). — $^{b}$) Ś1 B1 Dn D11.12 कः (for का). Ś1 भवेत्परैः; B1 Dn D11.12 -परो भवेत् (for भवेत्परे). D4 corrupt. — $^{c}$) K तिष्ठंतो वा; Dn2 D7.11.12 T2 स्थाने चापि (for स्थाने वापि). Cr cites स्थाने. B3–5 D1–5.7.9.10 व(D3 वृ)हंतो; D6 वहस्थो (for व्रजन्तो). D8 स्थाने वा प्रवहंतो वा. — $^{d}$) Ś1 B1.2.4 Dn2 D10–12 ह्रेषंति (cf. $^{a}$).

24 $^{a}$) D1–3 माधवो (for वायवो). — $^{b}$) B4 D4 सदा (for नित्यं). — $^{c}$) Dn1 D3 घोषश्च; D1.2 संघोषः (for निर्घोषः). D4.8 तडित्तोयदनिर्घोषः. — $^{d}$) B4.5 T1 G2.3 तदा; Dn2 D4.7.8.11.12 T2 सदा (for तथा). — After 24, S ins.:

814* भीषयन्पाण्डवेयेभ्यो भवान्सर्वानिमाञ्जनान् ।
प्रमुखे सर्वसैन्यानामबद्धं बहु भाषते ।
यथैवाश्वान्मार्गमाणास्तानेवाभिपरीप्सवः ।
हेषितान्येव शृण्वन्ति स्यादिदं भवतस्तथा ।

25 $^{a}$) D6 मानुष्ये (for पार्थस्य). — $^{b}$) D6 M4 सं- (for स). — $^{c}$) D4.8 कामाद्धर्षाद्वा. Cv cites कामाद्धर्षात्. M5 लोभाद् (for द्वेषाद्). — $^{d}$) G1.3 दोषाद्; M5 क्रोधाद् (for रोषाद्). Ś1 B1.2.5 Dn1 D11.12 T2 M1 om. वा. Ca cites क्रोधाद्वा. T G केवलं (for °लात्).

26 $^{a}$) T2 ये (for वै). B2 D5 आर्याः कारुणिकाः प्राज्ञाः. Crp कारणिकाः (for कारुणिकाः). — $^{b}$) B2 D5 वैद्याश् (for प्राज्ञाश्). B1.3.5 Dn2 D7.11.12 Cn अपाप°; T1 G1.3 Cv उपाय°; Ca.vp अपाय° (as in text). — $^{c}$) D7 ते (for एते). S महाहवे (T2 °भये) घोरे (for महाभये प्राप्ते).

27 $^{b}$) Ś1 B1.4.5 Dn D4.5m.7–9.11.12 उपवनेषु; B2.3 D5.6 Cc उपासनेषु; D1.2 च वनेषु; D3 चेतनेषु; D10 इष्टजनेषु (for आवसथेषु). S गोष्ठीपानाश(T1 G2 °स)नेषु च. — D8 om. 27$^{c}$–29$^{b}$. — $^{c}$) T2 कथां विचित्रां कु°. — $^{d}$)=28$^{d}$, 29$^{d}$.

28 D8 om. 28 (cf. v. l. 27); B1 D12 M3 also om. (hapl.) 28. K1 transp. 28 and 29. D5 reads 28 in marg. — $^{a}$) Ś1 K M2 °भूतानि; Cs °रूपाणि (as in text). — $^{b}$) B2 Dn1 D10 M1 कुर्वाणा; Dn2 D11 कुर्वतां; T G2 कुर्वं(T1 °वं)ते. D1.8 परेषां गुणवादिनः. — $^{c}$) B2.3 Dn2 D11 T2 Cn.s इज्यास्त्रे; Ca.v इष्वस्त्रे (as in text). Ś1 B3 Dn2 D11 S चाप°; K1 चार°; D5 चास्त्र°; D6 चाव°; Cv चारु° (as in text). Cn.s cite उपसंधाने. Dn1 D1–3.10 इष्वस्त्रेषु च संधाने; D7 इष्वस्त्राचारसं°. — $^{d}$) =27$^{d}$, 29$^{d}$. K D5 नात्र (for तत्र). — After 28, B5 ins. a passage given in App. I (No. 40).

29 D8 (cf. v. l. 27) M2 om. 29$^{ab}$; K2 D5 om. (hapl.) 29. K1 transp. 28 and 29. — $^{b}$) Ś1 B (except B3) D (D5.8 om.) T2 Cs मनुष्य°. — After 29$^{ab}$, B1 Dn D11.12 ins.:

815* हस्त्यश्वरथचर्यासु खरोष्ट्राजाविकर्मणि ।
गोधनेषु प्रतोलीषु वरद्वारमुखेषु च ।

— $^{c}$) B3 D1–3 G1.3 M1.3.5 °दोषे च; Ca.v °दोषेषु (as in text). — $^{d}$) 27$^{d}$, 28$^{d}$.

# ४३

कर्ण उवाच ।

सर्वानायुष्मतो भीतान्संत्रस्तानिव लक्षये ।
अयुद्धमनसश्चैव सर्वांश्चैवानवस्थितान् ॥ १
यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः ।
अहमावारयिष्यामि वेलेव मकरालयम् ॥ २
मम चापप्रमुक्तानां शराणां नतपर्वणाम् ।
नावृत्तिर्गच्छतामस्ति सर्पाणामिव सर्पताम् ॥ ३
रुक्मपुङ्खाः सुतीक्ष्णाग्रा मुक्ता हस्तवता मया ।
छादयन्तु शराः पार्थं शलभा इव पादपम् ॥ ४
शराणां पुङ्खसक्तानां मौर्व्याभिहतया दृढम् ।
श्रूयतां तलयोः शब्दो भेर्योराहतयोरिव ॥ ५
समाहितो हि बीभत्सुर्वर्षाण्यष्टौ च पञ्च च । C. 4. 1512 B. 4 48 6 K. 4. 48. 11

30 D1 om. $30^{ab}$. — $^{b}$) G1.3 बल° (for गुण°). — $^{d}$) K तप्येत वै परः; B4 corrupt; B5 Dn1 D3 वध्यो भवेत्परः; D4.5 बा(D5 ब)ध्येत वै परः; T2 broken.

31 $^{a}$) D2 G M एताः; T1 एते (for एव). Ś1 प्रतिष्ठंतु; K D9 प्रतिष्ठंति: Cnp गावश्च संप्रतिष्ठंतां. — $^{b}$) Ś1 K D1.4.6 G2 M1.2 सेनाः; B2 D5 सैन्यं (for सेनां). B4 Dn2 D4.5.7–9.11.12 व्यूहत; D1–3 व्यूहतु. D1.3 वाचिरात् (for माचिरम्). Dn1 सेनां व्यूह्य समंततः. T2 broken. — $^{c}$) K आशु रक्षा; D6 आरक्ष्याश्च. Ca.s.v cite आरक्षाः. — $^{d}$) B4 यथा; M यत्ता (for यत्र). B5 S परैः (G1 वयं) (for परान्). — After 31, S ins.:

816* यथास्माकं जयो वीर चिन्तनीयस्तथा त्वया ।
[ M2–5 चिंतनीयं (for °नीयस्). ]

Colophon. D7 reads it in marg. — *Sub-parvan:* Ś1 K D7 गोग्रह; B1–4 Dn D1–4.6.8–12 उत्तरगोग्रह; M1.2 गोग्रहण. — *Adhy. name:* B D4.5.8–10 M2 दुर्योधनवाक्यं; D7m राजवाक्यं. — *Adhy. no.* (figures, words or both): K1 D5 42; B4 M2–4 45; D3.6 44; D9 38; D10 41; T G M1.5 46. — *S'loka no.:* D3 33; G3 36.

## 43

1 $^{b}$) D10 उप- (for इव). — $^{c}$) B2 D6 सर्वे (for चैव). — $^{d}$) B2 D6 धनंजयकृताद्भयात्; G M (except M3) सर्वांश्चैता(M1.4.5 °नेता)नव(G1.3 °नुप)स्थितान्. Cr.s.v cite अनवस्थितान्, Crp (Cat.) अनुप°. — After 1, S ins.:

817* यद्येष जामदग्न्यो वा यदि वेन्द्रः पुरंदरः ।
[ G1.3 वैष (for वेन्द्रः). ]

2 G1 om. 2. — $^{a}$) Ś1 राजैष (by transp.). S (G1 om.) वासुदेवेन सहितो. — D1 is missing from $2^{b}$ up to 4. 45. $2^{b}$. — $^{c}$) Dn2 D2–4.7(m as in text).8–12 अहमावार(D7 °ह)याम्येनं; S (G1 om.) अहमेनं (T G2 M2 °व) निरोत्स्यामि. — $^{d}$) Dn2 D2–4.8.10–12 सरितां पतिं; S (G1 om.) वरुणालयं (T2 लवणार्णवं). Ś1 K वेलामिव महोदधिः.

3 D1 missing (cf. v.l. 2). S (T2 broken) transp. 3 and 4. — $^{a}$) Ś1 °विमुक्तानां; B (except B4) D T1 G °प्रयुक्तानां. — $^{c}$) D8 S (T2 broken) निवृत्तिर्; Cv नावृत्तिर् (as in text). Ca cites आवृत्तिः, Cn.s अवृत्तिः. B2 Dn1 तेषां; S (T2 broken) नास्ति (for अस्ति). — $^{d}$) Dn2 D4.7–9.11.12 G1.3 सर्पतामिव; T1 असतामिव; T2 G2 M2–5 श्वसतामिव (for इव सर्पताम्). M1 वैश्वानरशिखार्चिषां.

4 D1 missing (cf. v.l. 2). S (T2 broken) transp. 3 and 4. — $^{a}$) D2.3 S प्रसन्ना° (for सुतीक्ष्णा°). — $^{c}$) S सूर्यं (for पार्थं). — $^{d}$) B5 D2.3.8.10 पावकं (for पादपम्). S पार्थस्यायुर्निरोधकाः.

5 D1 missing (cf. v.l. 2). — $^{a}$) D3 °युक्तानां; D5 °मुक्तानां (m as in text); D6 °शब्दानां; Cs °सक्तानां (as in text). ❀Cv: बाणो बाणस्य पुङ्खसक्तो याति एकबाण इव ।❀ — $^{b}$) D9 निहतयोर्; G अभिहतयोर् (for अभिहतया). Ś1 S भृशं (for दृढम्). — $^{c}$) S (except M1.2) (for श्रूयतां). — After 5, S (M4 om. lines 2–3) ins.:

818* एकैकं चतुरः पञ्च क्वचित्षष्टिं क्वचिच्छतम् ।
मया पश्यत मत्स्यानामिषुभिर्निहतान्रथान् ।
एकं द्वौ चतुरः पञ्च क्वचित्षष्टिं क्वचिच्छतम् ।
हतान्पश्यत मातङ्गान्कीर्णानेकेषुणा मया ।
मद्बाहुमुक्तैरिषुभिस्तैलधौतैः पतत्रिभिः ।
खद्योतैरिव संवृत्तमन्तरिक्षं व्यराजताम् ।

[ (L. 2) G1 रणे (for रथान्). — (L. 6) T2 संपृक्तं (for संवृत्तं). T2 विराजतां; G1 विराजतु (for व्यरा°). ] — After the above insertion, S reads 17–18 (with 828*).

C. 4. 1512
B. 4. 48. 6
K. 4. 48. 11

जातस्नेहश्च युद्धस्य मयि संप्रहरिष्यति ॥ ६
पात्रीभूतश्च कौन्तेयो ब्राह्मणो गुणवानिव ।
शरौघान्प्रतिगृह्णातु मया मुक्तान्सहस्रशः ॥ ७
एष चैव महेष्वासस्त्रिषु लोकेषु विश्रुतः ।
अहं चापि कुरुश्रेष्ठा अर्जुनान्नावरः क्वचित् ॥ ८
इतश्चेतश्च निर्मुक्तैः काञ्चनैर्गार्ध्रवाजितैः ।
दृश्यतामद्य वै व्योम खद्योतैरिव संवृतम् ॥ ९
अद्याहमृणमक्षय्यं पुरा वाचा प्रतिश्रुतम् ।
धार्तराष्ट्रस्य दास्यामि निहत्य समरेऽर्जुनम् ॥ १०
अन्तरा छिद्यमानानां पुङ्खानां व्यतिशीर्यताम् ।
शलभानामिवाकाशे प्रचारः संप्रदृश्यताम् ॥ ११
इन्द्राशनिसमस्पर्शं महेन्द्रसमतेजसम् ।

6 D1 missing (cf. v. l. 2). — $^{a}$) K B4 अपि; S च (for हि). — $^{b}$) D2.3 वर्षान् (for वर्षाणि). — B2 om. from $6^{c}$ up to नि (of निहतो) in $17^{b}$. — $^{c}$) D2.4 °स्नेहस्य; G1 °स्तस्य च; M1.4.5 °स्नेहस्तु; M2 °स्नेहात्तु (for °स्नेहश्च). Ca.v cite जातस्नेहः. Ś1 B1.5 Dn D8.9.11.12 युद्धेस्मिन्; K D7.10 T2 G3 युद्धेषु (for युद्धस्य). D8 जातस्नेहं स तु मयि. — $^{d}$) D3 पार्थः (for मयि). T1 G2 M1.2 संदर्शयिष्यति (for संप्रहरि°). G3 स समं दर्शयिष्यति.

7 D1 missing (cf. v. l. 2). B2 om. 7 (cf. v. l. 6). — $^{a}$) D7 अथ; T1 G2 M तु; G1.3 स (for च). — $^{c}$) S शरमालां स (T1 G2.3 M3 प्र-) गृह्णातु. — $^{d}$) D2.3 सहस्रधा; Cv सहस्रशः (as in text). S (T2 broken) मत्प्रसृष्टां स्व(G2 सु-; M3 यु)धामिव.

8 D1 missing (cf. v. l. 2). B2 om. 8 (cf. v. l. 6). — $^{a}$) D10 T1 G3 M चापि; G1 बली; G2 चाप- (for चैव). — $^{c}$) B3 D8 चैव (for चापि). Ś1 B1 Dn1 D11.12 नरश्रेष्ठात्; K2 B3.5 Dn2 D2–7.9.10 T G2 M कुरुश्रेष्ठात् (M4 महेष्वासात्); D8 G1.3 कुरुश्रेष्ठ; only K1 B4 कुरुश्रेष्ठा (as in text). — $^{d}$) K2 D2–4 अवरः; T G2 नावमः; Cv नावरः (as in text). Cc cites अवरः. ❀ Ca: अर्जुनावयवः अर्जुनसदृश इत्यर्थः । अर्जुनादवरो नाम पुमान् कश्चित् ।❀ — After 8, S (except M5) ins.:

819* मम हस्तप्रमुक्तानां शराणां नतपर्वणाम् ।

T G M2.3 cont.: M1.4.5 ins. after $9^{ab}$:

820* निवृत्तिर्गच्छतां नास्ति वैश्वानरसमत्विषाम् ।

[ Cf. $3^{cd}$ and v. l. — T2 यथार्चिषां; G1 M शिखार्चिषां (for समत्विषाम्). ]

— After 820*, M reads 11.

9 D1 missing (cf. v. l. 2). B2 (cf. v. l. 6) M2.3 om. 9. — $^{a}$) S (M2.3 om.) मुक्तानां (for निर्मुक्तैः). — $^{b}$) Ś1 D9 °वाससैः; D3.8 °वाजिभिः; D7 °पक्ष्मभिः; Ca.c.s °वाजितैः (as in text). S (M2.3 om.) शराणां नतपर्वणां (= $3^{b}$). — After $9^{ab}$, M1.4.5 ins. 820*, which, in M, is followed by 11. — T G ins. after $9^{ab}$: M1.4, after 819*:

821* तुमुलः श्रूयतां नादः षट्पदां गायतामिव ।

[ T1 G1.3 शब्दः (for नादः). M4 सर्पाणां श्वसतामिव (for the posterior half). ]

— T G read 11 after 821*; M, after 820*. — S om. $9^{cd}$, but cf. last line of 818*. — $^{c}$) K अत्र (for अद्य). — $^{d}$) D6 शलभैरिव. Ś1 K चित्रितं (for संवृतम्).

10 D1 missing (cf. v. l. 2). B2 om. 10 (cf. v. l. 6); B5 om. 10–20. — $^{ab}$) D6 तस्य (for अद्य). S (T2 broken up to यन्मया) अद्य (G3 यदि) त्वहमृणं (T1 °णान्) मोक्ष्ये यन्मया तत्प्रतिश्रुतं. — $^{c}$) Ś1 B1.3 D (except D6; D1 missing) धार्तराष्ट्राय; B4 दुर्योधनाय (for धार्तराष्ट्रस्य). S तत्काले (for दास्यामि). — $^{d}$) T2 निपात्य (for निहत्य). — After 10, Ś1 K B3.4 D4.5 (marg.).7.10 ins.:

822* मत्कार्मुकविमुक्तानां शराणां नतपर्वणाम् ।
क: सहेताग्रतः स्थातुमपि सर्वैः सुरासुरैः ।

[ Line 1 = var. $3^{ab}$. — (L. 2) B3 शक्तो हि (for सहेत). Ś1 K नावृत्तिरस्ति (Ś1 आवृत्तिर्नास्ति) कायेषु सर्पाणामिव सर्पताम्. ]

11 D1 missing (cf. v. l. 2). B2.5 om. 11 (cf. v. l. 6, 10). D5 reads $11^{a}$–$13^{b}$ in marg. For the sequence of S, cf. v. l. 8–9. — $^{ab}$) K1 संख्यात-; K2 संख्येन (for पुङ्खानां). K व्यवशीर्यतां; B3 D6 Cc °कीर्यतां; B4 °ईर्यतां (for °शीर्यताम्). S (T2 broken up to शिला) अंतरा संपतद्भिस्तु गृध्रपत्रैः (T1 G °पक्षैः) शिलाशितैः (G1 तथा हितैः). — $^{d}$) S छाया (M3 कुलैः) संप्रतिदृश्यतां (G2 °ते). — After 11, S reads 15.

12 D1 missing (cf. v. l. 2). B2.5 om. 12 (cf. v. l. 6, 10). — $^{a}$) K1 °समैः संघैः; K2 °समैः सर्वैः; B4 D3.4.6.7 °समस्पर्शैः; D10 °समस्पर्शी. — $^{b}$) B1.3.4 D7.8 S °विक्रमं; D2.3 °तेजसा. D5 महेंद्राशनिविक्रमं. — $^{c}$) D3 दर्शयिष्याम्यहं पार्थं. — B1 Dn D11.12 ins. after 12: S (T2 line 1 broken) ins. after 824*:

823* रथादतिरथं शूरं सर्वशस्त्रभृतां वरम् ।
विवशं पार्थमादास्ये गरुत्मानिव पन्नगम् ।

अर्दयिष्याम्यहं पार्थमुल्काभिरिव कुञ्जरम् ॥ १२
तमग्निमिव दुर्धर्षमसिशक्तिशरेन्धनम् ।
पाण्डवाग्निमहं दीप्तं प्रदहन्तमिवाहितान् ॥ १३
अश्ववेगपुरोवातो रथौघस्तनयित्नुमान् ।
शरधारो महामेघः शमयिष्यामि पाण्डवम् ॥ १४
मत्कार्मुकविनिर्मुक्ताः पार्थमाशीविषोपमाः ।
शराः समभिसर्पन्तु वल्मीकमिव पन्नगाः ॥ १५
जामदग्न्यान्मया ह्यस्त्रं यत्प्राप्तमृषिसत्तमात् ।
तदुपाश्रित्य वीर्यं च युध्येयमपि वासवम् ॥ १६
ध्वजाग्रे वानरस्तिष्ठन्भल्लेन निहतो मया ।
अद्यैव पततां भूमौ विनदन्भैरवान्रवान् ॥ १७
शत्रोर्मयाभिपन्नानां भूतानां ध्वजवासिनाम् ।
दिशः प्रतिष्ठमानानामस्तु शब्दो दिवं गतः ॥ १८
अद्य दुर्योधनस्याहं शल्यं हृदि चिरस्थितम् ।
समूलमुद्धरिष्यामि बीभत्सुं पातयन्रथात् ॥ १९
हताश्वं विरथं पार्थं पौरुषे पर्यवस्थितम् ।
निःश्वसन्तं यथा नागमद्य पश्यन्तु कौरवाः ॥ २०
कामं गच्छन्तु कुरवो धनमादाय केवलम् ।
रथेषु वापि तिष्ठन्तो युद्धं पश्यन्तु मामकम् ॥ २१ C. 4. 1529 B. 4. 48. 23 K. 4. 48. 28

इति श्रीमहाभारते विराटपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[ (L. 1) S (T2 broken) लोके (for शूरं). — (L. 2) M1.2.4 आसाद्य (for आदास्ये). ]

13 D1 missing (cf. v. l. 2). B2.5 om. 13 (cf. v. l. 6, 10). — a) S शरजालमहाज्वालं. — b) S °गदेंधनं. — cd) For S cf. v. l. 14. Ś1 B1.3.5 Dn D5.6.10–12 Cr अहितं (for अहितान्).

14 D1 missing (cf. v. l. 2). B2.5 om. 14 (cf. v. l. 6, 10). For S see below. — b) Ś1 K Dn1 D4.8 °यित्न(D8 °त्नु)वान्. Cr cites स्तनयित्नु. — c) K °धारा (for °धारो). — For 13c–14d, S subst.:

824* निर्दहन्तमनीकानि शमयिष्येऽर्जुनानलम् ।,

which is followed by 823* (cf. v. l. 12), which latter in its turn is followed by:

825* क्षुद्रकैर्विविधैर्भल्लैर्निपतद्भिश्च मामकैः ।
संमूढचेताः कौन्तेयः कर्तव्यं नाभिपद्यते ।

15 D1 missing (cf. v. l. 2). B2.5 om. 15 (cf. v. l. 6, 10). S reads 15 after 11. — ab) S अद्य मत्कार्मुकोत्सृष्टाः शराः (G1.3 M1–3 शिताः) पार्थस्य म(G1 क)र्मगाः. — c) S (except G2) शरीरमभिसर्पंतु (T2 °वर्षंतु). — After 15, N (D1 missing; B2.5 om.) ins.:

826* सुतेजनै रुक्मपुङ्खैः सुपीतैर्नतपर्वभिः ।
आचितं पश्य कौन्तेयं कर्णिकारैरिवाचलम् ।

[ (L. 1) Dn1 D2–4.6.8 सुतेजसैः; Ca सुतेजितैः; Cap.rp सुराजितैः; Cc.r सुतेजनैः (as above). Dn1 D7 सुधौतैर् (for सुपीतैर्). Ś1 शरैः संनतपर्वभिः (for the posterior half). — (L. 2) Dn1 D2.3 अर्चितं; Cv अंचितं; Cc आचितं (as above). ]

On the other hand, S ins. after 15:

827* बर्हिबर्हिणवाजानां बर्हिणां बर्हिणामिव ।
पततां पततां घोषः पततां पततामिव ।

16 D1 missing (cf. v. l. 2). B2.5 om. 16 (cf. v. l. 6, 10). S reads 16 after 20. — a) S लब्धं (T G2 चास्त्रं) (for ह्यस्त्रं). — b) B3 D5 संप्राप्तं; S दिव्यास्त्रं (for यत्प्राप्तम्). — c) Ś1 Dn2 D2.3.7.11.12 M4.5 तदपा° (for तदुपा°). B3 समरे; D2 वै वीर्यं (for वीर्यं च). — d) D6 अमरैरपि (for अपि वासवम्).

17 D1 missing (cf. v. l. 2). B2 om. up to नि (cf. v. l. 6). B5 om. 17 (cf. v. l. 10). S reads 17–18 after 818* (cf. v. l. 5). — a) S ध्वजाग्राद् (for ध्वजाग्रे). K D6 वानरश्रेष्ठो; S °रस्तस्य (G1 °रस्तस्मात्) (for °रस्तिष्ठन्). — b) K2 बलेन; D5.7.9 भल्लैर् (for भल्लेन). B4 Dn2 D2–5.7–11 अभिहतो; S उ(G3 M1.4 अ)पहतो (M1 °हतो) (for निहतो). — d) D2.3 विनर्दन् (for विनदन्). G1.3 भैरवस्वनान्.

18 D1 missing (cf. v. l. 2). B5 om. 18 (cf. v. l. 10). For sequence of S, cf. v. l. 17. — a) D5 m.7 शस्त्रैः; Cr शत्रोः (as in text). K दयाभि°; B3 भयाभि°; B4 D3 मायाभि°; T2 वशाभि° (for मयाभि°). B1 D8.11.12 Cn वि°; Cc अभि° (as in text). — c) D6 प्रद्रवमाणानां. — d) B1.3 Dn1 D4–7 दिवंगमः (for दिवं गतः). — After 18, S ins.:

828* क्रुद्धेनास्त्रं मया मुक्तं निर्दहेत्पृथिवीमिमाम् ।
स्थितं संग्रामशिरसि पार्थमेकाकिनं किमु ।

19 D1 missing (cf. v. l. 2). B5 om. 19 (cf. v. l.

C. 4. 1530
B. 4. 49. 1
K. 4. 49. 2

# ४४

कृप उवाच ।
सदैव तव राधेय युद्धे क्रूरतरा मतिः ।
नार्थानां प्रकृतिं वेत्थ नानुबन्धमवेक्षसे ॥ १
नया हि बहवः सन्ति शास्त्राण्याश्रित्य चिन्तिताः ।
तेषां युद्धं तु पापिष्ठं वेदयन्ति पुराविदः ॥ २
देशकालेन संयुक्तं युद्धं विजयदं भवेत् ।
हीनकालं तदेवेह फलवन्न भवत्युत ।
देशे काले च विक्रान्तं कल्याणाय विधीयते ॥ ३
आनुकूल्येन कार्याणामन्तरं संविधीयताम् ।
भारं हि रथकारस्य न व्यवसन्ति पण्डिताः ॥ ४
परिचिन्त्य तु पार्थेन संनिपातो न नः क्षमः ।
एकः कुरूनभ्यरक्षदेकश्चाग्निमतर्पयत् ॥ ५

10). — b) S शोकं (for शल्यं). D9 हृदि शल्यं (by transp.). Dn1 S (except G2 M4) चिरं स्थितं; D7.9 व्यवस्थितं (for चिरस्थितम्). — c) S अप(M5 °व)नेष्यामि (for उद्धरि°). — d) S हरन्पार्थशिरः शरैः.

20 D1 missing (cf. v. l. 2). B5 om. 20 (cf. v. l. 10). — b) Ś1 सम° (for पर्य°). — D3 om. $20^{cd}$. — After 20, S reads 16.

21 D1 missing (cf. v. l. 2). D3 transp. $21^{ab}$ and $21^{cd}$. — b) S गाः प्रगृह्य (G1 प्रगृह्य च) परंतपाः. — c) Dn D7.11.12 T2 चापि; D4 वाति-; G1.3 व्यव-; M वा(M3 चा)व- (for वापि). — d) Ś1 K D2.4.7m.8 अमानुषं; D3.9 कौरवाः (for मामकम्). — After 21, D7.9 ins.:

829* पश्यन्तु वीर्यमिह मामकमद्य नाम
मग्ने जने समनुजाः सुरसिद्धसंघाः ।
शक्रात्मजस्य समरे विरथीकृतस्य
एवं पुनः स विरराम कृपो बभाषे ।

Colophon om. in B2; D1 missing; T2 damaged. — *Sub-parvan:* Ś1 K गोग्रह; B4 Dn2 D2.4–12 उत्तरगोग्रह; M2.3 गोग्रहण. — *Adhy. name:* B1.3.5 D5.6 कर्णाभिगर्जनं; B4 Dn1 D4.7–9 कर्णवाक्यं; D3 कर्णगर्जरन: (sic); D10 कर्णगर्जनं. — *Adhy. no.* (figures, words or both): K1 D5 43; B4 M2.4 46; D3.6 45; D7 41; T1 G M1.5 47; M3 40. — *S'loka no.:* D3 23; D10 42; G3 26.

## 44

☞ D1 is missing in this whole adhy. (cf. v. l. 4. 43. 2).

1 Before 1, S ins.:

830* वैशंपायनः ।
तस्य तद्वचनं श्रुत्वा नीतिशास्त्रविशारदः ।
आचार्यः कुरुवीराणां कृपः शारद्वतोऽब्रवीत् ।
[ (L. 2) M2.4.5 °पांडूनां (for °वीराणां). ]

— B2 om. 1–5 (with the ref.). — b) B3 °गता; D10 °तमा (for °तरा). T1 क्रूरमता गतिः. — c) B4 Ca.c.r अर्थानां; D6 आत्मानं; Ccp.rp नार्थानां (as in text). Dn1 D2.5.6.8.10 S वेत्सि; Ca वेत्थ (as in text).

2 B2 om. 2 (cf. v. l. 1). — a) K2 D6 तथा; Dn2 D11.12 Cn.ap माया; Cap मया; Ca.s.np नया (as in text). — b) Dn1 T G2 शास्त्रम्; Ca.v शास्त्राणि (as in text). D10 आहृत्य; Ca.v आश्रित्य (as in text). — c) B4 G2 M युद्धं सु-; D4 तु युद्धं; D10 हि युद्धं (for युद्धं तु). Ś1 K तेषां युद्धमुपाविष्टं. Cs cites पापिष्ठं.

3 B2 om. 3 (cf. v. l. 1). — a) B3 देशे काले च. — c) Ś1 K B3–5 D3.9 °काले (for °कालं). — d) Dn1 Cn फलं न लभते पुनः; Dn2 D7.9.11.12 फलवन्न भवेत् पुनः (D7.9 क्वचित्); S (except G1.3) अ(T G2 ह्य)नर्थायोपकल्पते (T G2 °पद्यते). — e) D3.4.8.10 S (except G1.3 M2) Cv देशकालेन. — f) Ś1 K कल्याणमवधीयते.

4 B2 om. 4 (cf. v. l. 1); T1 M3 om. $4^{ab}$. — a) D5 B3m आनुपूर्व्येण; Cap °पूर्व्यां च; Cc.v आनुकूल्येन (as in text). B3m देशानां; Cnp मंत्राणां (for कार्याणां). — b) S (T1 M3 om.) उत्तरं (for अन्तरं). B1.3.4 Dn D4.6.11.12 Ca.s संविधीयते; D5 संप्रधीयते; S (T1 M3 om.) तु विधीयतां (T2 G1.2 °ते); Cv as in text. D7.9 Cap संविधानं विधीयते (D7 °तां). — Ca cites the entire stanza (v. l. न विधीयते for संविधीयताम्).

5 B2 om. 5 (cf. v. l. 1). — a) D2.4.7.9 च; D6 स (for तु). Ś1 परिचिंत्य तमेवार्थं. — b) Dn2 D7.11.12 ते (for नः). — Ca cites $5^{ab}$ (v. l. सानुयातो). — After $5^{ab}$, S ins.:

831* एको हि समरे शत्रून्समर्थः प्रतिबाधितुम् ।
[ T G1.3 M4 शत्रून्समरे (by transp.). ]

— c) Ś1 अभिरक्षेत्; D9 अभ्यगच्छत् (for अभ्यरक्षत्).

एकश्च पञ्च वर्षाणि ब्रह्मचर्यमधारयत् ।
एकः सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयत् ।
अस्मिन्नेव वने कृष्णो हृतां कृष्णामवाजयत् ॥ ६
एकश्च पञ्च वर्षाणि शक्रादस्त्राण्यशिक्षत ।
एकः सांयमिनीं जित्वा कुरूणामकरोद्यशः ॥ ७
एको गन्धर्वराजानं चित्रसेनमरिंदमः ।
विजिग्ये तरसा संख्ये सेनां चास्य सुदुर्जयाम् ॥ ८
तथा निवातकवचाः कालखञ्जाश्च दानवाः ।
दैवतैरप्यवध्यास्ते एकेन युधि पातिताः ॥ ९
एकेन हि त्वया कर्ण किं नामेह कृतं पुरा ।
एकैकेन यथा तेषां भूमिपाला वशीकृताः ॥ १०
इन्द्रोऽपि हि न पार्थेन संयुगे योद्धुमर्हति ।
यस्तेनाशंसते योद्धुं कर्तव्यं तस्य भेषजम् ॥ ११
आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणम् ।
अविमृश्य प्रदेशिन्या दंष्ट्रामादातुमिच्छसि ॥ १२
अथ वा कुञ्जरं मत्तमेक एव चरन्वने ।
अनङ्कुशं समारुह्य नगरं गन्तुमिच्छसि ॥ १३
समिद्धं पावकं वापि घृतमेदोवसाहुतम् । C. 4. 1544 B. 4. 49. 15 K. 4. 49. 17

— $^{d}$) B3.5 हि (for च). — After 5, B4 D7 (marg.) ins. 832*.

6 $^{a}$) B3 एको द्वादश वर्षाणि. — $^{c}$) D5 आहृत्य; Cc.r आरोप्य (as in text). — B1–3.5 Dn D2.3.5.6.9–12 ins. after $6^{cd}$: B4 D7 (marg.), after 5:

832* एकः किरातरूपेण स्थितं शर्वमयोधयत् ।

[ B1 Dn D2.9.11.12 रुद्रं; Ca.c शर्वं (as above). ]

— K2 B2 M2 om. $6^{ef}$. D4 reads $6^{ef}$ in marg.; D5, after 8. — $^{e}$) Ś1 B5 D3.6 तस्मिन्; D4.8 एक (for अस्मिन्). Ś1 अवसरे (for एव वने). B1.4.5 Dn1 D5 पार्थो; D6 हृष्टो; Ca कृष्णो (as in text). S (M2 om.) सैंधवं वनवासे तु. — $^{f}$) S (M2 om.) जित्वा (G1 हृत्वा); Cc.v हृतां (as in text). D5 भार्याम् (for कृष्णाम्). T G2 M (M2 om.) अथानयत्; G1 असारयत्; G3 अधारयत् (for अवाजयत्).

7 M2 om. $7^{ab}$; D4 reads it in marg. — $^{a}$) D8 सन्नव (for च पञ्च). — After $7^{ab}$, D2 ins.:

833* एको देवेश्वरं जित्वा अस्त्रराजमवाप्तवान् ।

— $^{c}$) D8 एष (for एकः). Ś1 सांयमनिं; K1 सांयामितं; K2 संयमिनं; B1.3–5 Dn1 D5.6 सोयमीरं (B3 D5 °रीन्); B2 योधमीरं; Dn2 D7 चायमीरं; D2.9.11.12 चायमरीन्; D3 संयमनं; D4 M5 संयमनीं; D8 सोमगिरिं; D10 G1 संयमनिं; T1 G3 संयमिनीं; T2 broken; only M1–4 *exactly* as in text! G2 एकः सपत्नाञ्जित्वा तु.

8 $^{a}$) K °राजं तं; Cr °राजानं (as in text). — $^{b}$) K B4 D4.6.8 G3 M (except M5) अरिंदमं (for °दमः). — $^{c}$) K व्यजेष्यत्; D6 T2 विजित्य (for विजिग्ये). — After 8, D5 reads $6^{ef}$; while S ins.:

834* पाञ्चालीं श्रीमतीं प्राप्तः क्षत्रं जित्वा स्वयंवरे ।
आदाय गतवान्पार्थो भवान्क नु गतस्तदा ।

[ (L. 1) T2 प्राप; M2 प्राप्य; M4.5 प्राप्तां (for प्राप्तः). ]

9 $^{a}$) M4 °कवचान्. — $^{b}$) B3.5 D6 कालकंजाः; T G M1–3.5 °केयाः (for °खञ्जाः). M2 इवासुराः (for च दानवाः). M4 कालकेयांश्च दानवान्. — $^{c}$) G2 अमरैर् (for दैवतैर्).

10 $^{a}$) D2 इह; D6 अपि (for हि). — $^{b}$) D4 पुरा कृतं (by transp.). — $^{c}$) B4 D6 एकेन हि; Cr एकेकैन (as in text). B3.4 D5.6 तेन (for तेषां). — $^{d}$) B1 Dn2 D2.3.7–12 T G1.2 M (except M5) वशे कृताः; G3 वशं गताः.

11 $^{a}$) K G3 न हि; G1 नैव (for हि न). — $^{b}$) K समरे; B2 D5.7 M3 संग्रामे (for संयुगे). K इच्छति (for अर्हति). — $^{c}$) B2.5 D6 आशंस मे; B4 D5 (m as in text) आशंससे (for आशंसते). B2.3.5 D5.6 युद्धं; B4 त्वं तु (for योद्धुं). D8 यत्ते तेन समं योद्धुं — $^{d}$) D3 M1 तत्र (for तस्य). B (except B1) D5 (m as in text).6 कर्तु(B4 योद्धु)मुत्तमतेजसा; Cv as in text.

12 $^{c}$) Ś1 B2.4 D4–6.8.9 Ca अवमृष्य (D4–6.9 °श्य); K1 अविमृष्य; B1.3.5 Dn2 D11.12 अवमुच्य; Dn1 अवमृज्य; D7 (m as in text) अपमृश्य; D10 अंगुष्ठेन; S अनुसृत्य. — $^{d}$) D6 दंष्ट्रा व्यादातुमिच्छसि.

13 G1 (hapl.) om. 13. — $^{b}$) D3.4 T एकमेव. D2 अवशं (for चरन्). B4 D3.10 T G2 वनेचरं (D10 °रन्). Cv: चरं वने वनेचरम् । व्यत्ययो बहुलम् ।❀ G3 M (except M3) एकमेकचरं वने. — $^{c}$) K Dn2 D6.10–12 अनंकुशः. B4 इवारुह्य. — $^{d}$) S (G1 om.) यातुम् (for गन्तुम्).

14 $^{a}$) Ś1 K B2 Dn1 चैव; B4 D7.9.10 S चापि (T1 घोरं; G1 क्वापि) (for वापि). — $^{b}$) D2.3 °वसाप्लुतं (D3 °तः); D4 °वसादनं (for °वसाहुतम्). T1 घृतदोहसमुक्षितं. — After $14^{ab}$, T1 ins.:

835* प्रावृतः कुशचीरेण पतितुं मूर्ख मन्यसे ।

C. 4. 1545 B. 4. 49. 15 K. 4. 49. 17 घृताक्तश्रीरवासास्त्वं मध्येनोत्तर्तुमिच्छसि ॥ १४
आत्मानं यः समुद्बध्य कण्ठे बद्ध्वा महाशिलाम् ।
समुद्रं प्रतरेद्दोर्भ्यां तत्र किं नाम पौरुषम् ॥ १५
अकृतास्त्रः कृतास्त्रं वै बलवन्तं सुदुर्बलः ।
तादृशं कर्ण यः पार्थं योद्धुमिच्छेत्स दुर्मतिः ॥ १६
अस्माभिरेष निकृतो वर्षाणीह त्रयोदश ।
सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति ॥ १७
एकान्ते पार्थमासीनं कूपेऽग्निमिव संवृतम् ।
अज्ञानादभ्यवस्कन्द्य प्राप्ताः स्मो भयमुत्तमम् ॥ १८
सह युध्यामहे पार्थमागतं युद्धदुर्मदम् ।
सैन्यास्तिष्ठन्तु संनद्धा व्यूढानीकाः प्रहारिणः ॥ १९
द्रोणो दुर्योधनो भीष्मो भवान्द्रौणिस्तथा वयम् ।
सर्वे युध्यामहे पार्थं कर्ण मा साहसं कृथाः ॥ २०
वयं व्यवसितं पार्थं वज्रपाणिमिवोद्यतम् ।
षड्रथाः प्रतियुध्येम तिष्ठेम यदि संहताः ॥ २१
व्यूढानीकानि सैन्यानि यत्ताः परमधन्विनः ।
युध्यामहेऽर्जुनं संख्ये दानवा वासवं यथा ॥ २२

इति श्रीमहाभारते विराटपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

— c) Ś1 K च (for त्वं). — d) Ś1 मध्ये वै; K2 मध्ये त्वं (for मध्येन). Ś1 गंतुं; K1 तर्तुं; K2 चर्तुं; Dn1 D7 Cn.s उत्सर्तुं; Dn2 D8.11.12 T2 G2 M3.5 उद्धर्तुं (for उत्तर्तुं).

15 T1 om. 15–17. — a) Dn1 अथ वा (for आत्मानं). Ś1 B5 Dn1 D10 कः (for यः). B4 Dn1 D5 यः समुद्यम्य; Dn2 D11.12 बंधयित्वा तु; T2 G M1–4 यः समाबध्य. M5 आत्मानं स्वयमाबध्य. — b) Dn2 D11.12 तु वा; D2–4.7.9.10 G2 M अथ वा; D8 G1.3 तथा (for महा-). — c) Ś1 B2.4 Dn1 तरते (for प्रतरेद्). — d) S (T1 om.; T2 broken) कर्ण (for नाम).

16 T1 om. 16 (cf. v. l. 15). — a) Ś1 M4 च (for वै). B2 D5 (by transp.) कृतास्त्रमकृतास्त्रो वै. — c) B8 पार्थं वै; D8 पार्थ त्वं (for यः पार्थं). — d) Ś1 K1 D6 इच्छसि; K2 D10 M1 इच्छति; B2.3 इच्छेः सु; D9 T2 G1 M2.4.5 इच्छेत्सु (for इच्छेत्स).

17 T1 om. 17 (cf. v. l. 15). — a) Ś1 B1.2.4.5 Dn D2–4.7–12 ह्येष; K1 चैष; K2 चैव; B3 D5.6 M4 एव (for एष). — c) D4 स हि (for सिंहः). D5 T2 G2 M °विमुक्तो वा; Ccp °विनिर्मुक्तः (as in text). Cr cites निर्मुक्तः, Cc पाशविनिर्मुक्तौ वा. — d) K2 ननु; D3.8 स निः; D6 न वः (for न नः). S (T1 om.) निः(T2 G2.3 M2 न)शेषं कर्तुमर्हति.

18 a) M2 आसाद्य (for आसीनं). — b) D4.6 M2 अग्निरिव (for °सिव). Ś1 संभृतं (for संवृतम्). — c) Ca cites प्रत्यवस्कन्द्य, Cc अवस्कन्द्य. — d) S स्म (for स्मः). — After 18, S ins.:

836* उत्सृष्टं तूलराशौ तु एकोऽग्निं शमयेत्कथम् ।

19 K2 (hapl.) om. 19–20ab. — a) M1 योत्स्या° (for युध्या°). — c) B4 सेनास्तिष्ठंतु; Dn2 D2–4.7–9 सेना तिष्ठतु. Cc cites सैन्याः. K1 संरब्धा (for संनद्धा). T G2 यत्ता वयं पराक्रांता; G1 युक्ताः सेनापरिक्रांता; G3 M यत्त(M1 या तु; M2–4 यत्तु)सेना(M5 °नाः)पराक्रांता. — d) D2–4.7.8 G1 M1 °नीका प्रहारिणो. — After 19, S ins.:

837* युद्धायावस्थितं पार्थमागतं पाकशासनिम् ।,

which is followed by 839*.

20 K2 om. 20ab (cf. v. l. 19). S reads 20 (with 838*), after the S substitute of 21–22 (=839*). — b) D2.3 चापि (for द्रौणिः). — After 20 (which is transposed in S, see above), S ins.:

838* न ह्यसंहत्य समरे पार्थं जेष्यामहे वयम् ।

21 For S, cf. v. l. 22. — a) Dn1 D6.8 व्यवसिताः; D5 व्यवस्थितं (for व्यवसितं). — b) Ś1 K1 D2–4.7–10 °वेगम् (for °पाणिम्). B2.5 Dn1 D2 उद्धतं; D3 उद्यमं (for उद्यतम्). — d) D4.8.10 यदि संगताः; D6 सहिता यदि. Cs cites संहताः.

22 For S see below. — a) D5m.7 व्यूह्यानीकानि. B4 D3–5.7–10 सर्वाणि (for सैन्यानि). — b) B4 तिष्ठंतु (for परम-). — c) Ś1 D10 सर्वे (for संख्ये). — d) B4 Dn D2.3 दानवा इव वासवं. — For 21–22, S subst. the foll. lines (reading them after 837*):

839* यत्ताः सर्वे रथश्रेष्ठं परिवार्य समन्ततः ।
षड्रथाः परिकीर्यन्तां वज्रपाणिमिवासुराः ।

Colophon missing in D1; D7 reads it in marg.; T2 damaged. — *Sub-parvan:* Ś1 K गोग्रह; B2.4 Dn D2–6.8–12 उत्तरगोग्रह; M2 गोग्रहण. — *Adhy. name:* B Dn1 D4–6.7m.8–10 M2 कृपवाक्यं. — *Adhy. no.*

# ४५

अश्वत्थामोवाच ।

न च तावज्जिता गावो न च सीमान्तरं गताः ।
न हास्तिनपुरं प्राप्तास्त्वं च कर्ण विकत्थसे ॥ १
संग्रामान्सुबहूञ्जित्वा लब्ध्वा च विपुलं धनम् ।
विजित्य च परां भूमिं नाहुः किंचन पौरुषम् ॥ २
पचत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः ।
तूष्णीं धारयते लोकान्वसुधा सचराचरान् ॥ ३
चातुर्वर्ण्यस्य कर्माणि विहितानि मनीषिभिः ।
धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति ॥ ४
अधीत्य ब्राह्मणो वेदान्याजयेत यजेत च ।
क्षत्रियो धनुराश्रित्य यजेतैव न याजयेत् ।
वैश्योऽधिगम्य द्रव्याणि ब्रह्मकर्माणि कारयेत् ॥ ५
वर्तमाना यथाशास्त्रं प्राप्य चापि महीमिमाम् ।
सत्कुर्वन्ति महाभागा गुरून्सुविगुणानपि ॥ ६
प्राप्य द्यूतेन को राज्यं क्षत्रियस्तोष्टुमर्हति ।
तथा नृशंसरूपेण यथान्यः प्राकृतो जनः ॥ ७ C. 4. 1562 B 4. 50. 8 K. 4. 50 21

(figures, words or both): K1 44; D6 46; D9 49; D10 43; T1 G M1.5 48; M2–4 47. — *S'loka no.:* D3 24; G3 26.

## 45

1 Before 1, S ins. a passage given App. I (No. 41). 1–$2^{ab}$ is missing in D1 (cf. v. l. 4. 43. 2). — c) T G2 हस्तिन°. — d) K किं च; D4 किं त्वं; D5 त्वं तु; D6 त्वं तु (for त्वं च). Ca cites the entire stanza (v. l. त्वं तु for त्वं च). — After 1, S (except M1–3) ins.:

840* बहूनि धर्मशास्त्राणि पठन्ति द्विजसत्तमाः ।
तेषु किं स्विदिदं दृष्टं द्यूते जीयेत यन्नृपः ।

2 $2^{ab}$ missing in D1. — a) B1 Dn1 D11.12 च बहूञ्; S विपुलाञ् (for सुब°). — D1 resumes from $2^{cd}$. — c) Dn1 परां सेनां; S महीं कृत्स्नां (for परां भूमिं). — d) Ś1 K भूमिपाः; B4 D6–8 पूरुषाः; Ca पौरुषम् (as in text). S नैव (T1 G1.3 M4 नैवं; T2 न हि; G2 नेह) कत्थेत पंडितः.

3 a) B (except B4) Dn D5.6.10–12 Cr.ap.vp दहति; Ca.v.rp (Dev.) पचति (as in text). D4.10 G1 अवाक्यो हि; G3 अनिर्वाक्यः (for अवाक्यस्तु). — b) Ś1 भाति चैव; K1 तथा भाति; K2 यथा भाति (for तूष्णीं भाति). — d) D7 G3 च (for स-).

4 a) K D4.9 T1 M1–3 Ca चातुर्वर्णस्य. — b) B4 Dn D1–4.5m.7–12 स्वयंभुवा; Ca मनीषिभिः (as in text). — c) D1.2 अव° (for अधि°). K1 कर्मभिस्त्वधिगंतव्यं; B D5(m as in text).6.10 वर्णै(B1.2 बलै)र्यै(B4 D5 °स्त)दिह कर्तव्यं. Cr.v cite यैः. — d) K यैश्च; B5 तत्तु (for यच्च). T1 G3 न दूष्यति.

5 b) D2 transp. याजयेत and यजेत. G1 याजयेद्वा. K2 B1.3 Dn2 D1–3.7.9.11.12 S वा (for च). — c) D7 S धनमाहृत्य (for धनुराश्रित्य). — d) K1 यजते च; B1–3.5 Dn1 D1.2.5.6 यजेच्चैव; D4 जयत्येव (for यजेतैव). B4 जयेन्न तु पराजये; D8 जयेदवति मा जयेत्; D10 यजेत न च याज°. — e) B D वित्तानि (for द्रव्याणि). — f) B2 D5.6 कृषि°; D10 विप्र°; S वार्ता° (G1 वृद्धि°); all commentaries ब्रह्म° (as in text). — After 5, N ins.:

841* शूद्रः शुश्रूषणं कुर्यात्त्रिषु वर्णेषु नित्यशः ।
वन्दनायोगविधिभिर्वैतसीं वृत्तिमास्थितः ।

[(L. 2) K B1–3.5 D4–6 वंचना° (for वन्दना°). B4 वंचनावेदविधिभिः. Ś1 K B5 D4.10 आश्रितः (for आस्थितः).]

6 M om. $6^{a}$–$8^{b}$. — a) Cap वर्तयंतः. — c) D8.10 Ca शक्नुवंति; T G2 अकुर्वन्निह; G1.3 प्रकुर्वंति; Cs as in text. Ś1 महाभागान्. — d) B4 प्रति°; D1–3.6–8 शुचि°; D4 स्वान्वि°; D10 सर्व°; Ca सुवि° (as in text). Cs cites विगुणान्. T G यज्ञान्सुविपुलानपि. — After 6, T G (G1.3 om. lines 1–2) ins.:

842* का जातिस्तेषु सूतेयं केऽन्यमन्त्राः क्रियाश्च काः ।
केयं वर्णेषु या राज्ञो वक्तृभोक्तृनियन्तृषु ।
वैशंपायनः ।
दुर्योधनमभिप्रेक्ष्य कर्णं च कुरुसंसदि ।
अश्वत्थामा भृशं क्रुद्धो दुर्योधनमतर्जयत् ।

7 M om. 7 (cf. v. l. 6). Before 7, T G2 ins. अश्वत्थामा. — b) B3–5 D5.6 तुष्टिम्; D1.3.8 स्तोतुम्; D4.7.9.10 तोषम्; T G भोक्तुम् (for तोष्टुम्). — c) D2 यथा (for तथा). Dn1 D12 °रूपोयं (for °रूपेण). T G यथावृत्तं स्वभावेन. — d) T G यथा (for जनः). B3 Dn1 धार्तराष्ट्रश्च निर्घृणः. — After 7, T G2 ins.:

C. 4. 1563 B. 4. 50. 9 K. 4. 50. 22 तथावाप्तेषु वित्तेषु को विकत्थेद्विचक्षणः ।
निकृत्या वञ्चनायोगैश्चरन्वैतंसिको यथा ॥ ८
कतमद्द्वैरथं युद्धं यत्राजैषीर्धनंजयम् ।
नकुलं सहदेवं च धनं येषां त्वया हृतम् ॥ ९
युधिष्ठिरो जितः कस्मिन्भीमश्च बलिनां वरः ।
इन्द्रप्रस्थं त्वया कस्मिन्संग्रामे निर्जितं पुरा ॥ १०
तथैव कतमं युद्धं यस्मिन्कृष्णा जिता त्वया ।
एकवस्त्रा सभां नीता दुष्टकर्मन्रजस्वला ॥ ११
मूलमेषां महत्कृत्तं सारार्थी चन्दनं यथा ।
कर्म कारयिथाः शूर तत्र किं विदुरोऽब्रवीत् ॥ १२
यथाशक्ति मनुष्याणां शममालक्षयामहे ।
अन्येषां चैव सत्त्वानामपि कीटपिपीलिके ॥ १३
द्रौपद्यास्तं परिक्लेशं न क्षन्तुं पाण्डवोऽर्हति ।
दुःखाय धार्तराष्ट्राणां प्रादुर्भूतो धनंजयः ॥ १४
त्वं पुनः पण्डितो भूत्वा वाचं वक्तुमिहेच्छसि ।
वैरान्तकरणो जिष्णुर्न नः शेषं करिष्यति ॥ १५
नैष देवान्न गन्धर्वान्नासुरान्न च राक्षसान् ।
भयादिह न युध्येत कुन्तीपुत्रो धनंजयः ॥ १६

843* यद्वृत्तं प्राकृतैश्चीर्णं लोके सद्भिर्विगर्हितम् ।

8 M om. $8^{ab}$ (cf. v. l. 6). D3.7.8 यथा (for तथा). B D1–3.5.7.9 Ca.v प्रा(B4 चा)प्तेषु (for अवाप्तेषु). Dn1 D6.7m.10 T G तथा (T1 G तेना)धि(D6 °भि)गम्य वित्तानि. — $^{b}$) K को हि कत्थेद्. B4 (? gloss) अवानिशः [ ? read अबालिशः ] (for विचक्षणः). — After $8^{ab}$, T G2 ins.:

844* बुद्धिमान्नीतिमान्राजा क्षत्रियो यदि वेतरः ।

— $^{c}$) K1 वंचनायोगाः; D1–4.10 वंचनोपायैः. S न चानृतैर् (T2 G2 °ते) योगविधिं. — $^{d}$) B4 D6 S चरेद् (for चरन्).

9 S transp. 9 and 10 (cf. v. l. 10). — $^{a}$) Ś1 K कतरद्; B1–4 Dn2 D1–3.8.11.12 कतमं; B5 D10 S कतमे (for कतमद्). K1 D1–3.10 S द्वैरथे (for द्वैरथं). D10 युद्धे; S राजन् (T2 राजा) (for युद्धं). — $^{b}$) S त्वम् (for यत्र). Many MSS. अजैषीद्. — $^{c}$) D6 S वा (for च). — $^{d}$) Ś1 ह्येषां (for येषां).

10 S transp. 9 and 10, transposing at the same time $10^{ab}$ and $10^{cd}$, so that the S sequence becomes: $10^{cd}$, $10^{ab}$, 9. — $^{ab}$) D1–3 कच्चिद् (for कस्मिन्). D8 युधिष्ठिरोधिकस्तस्मिन् (for $^{a}$). S युधिष्ठिरश्च भीमश्च कस्मिन्युद्धे त्वया जितौ. — D10 om. (hapl.) $10^{bc}$. — $^{c}$) B3.5 D5 इंद्रप्रस्थः; B4 Dn1 D6 M °प्रस्थे; Cn as in text. B4 तदा; D1–3 कदा (for त्वया). D1–3 कच्चित् (for कस्मिन्). — $^{d}$) B1 Dn2 D1–4.7–12 विजितं; B3–5 D5.6 M1–4 विजि(M1–4 निर्जि)तः (for निर्जितं). T1 G2.3 पुरं (for पुरा).

11 $^{a}$) Ś1 B (except B2) D5–9 कतमद् (for कतमं). S भूयश्च कतमे युद्धे. — $^{b}$) B4 S यत्र (for यस्मिन्). B4 हृता (for जिता). B2.5 D5 S transp. जिता and त्वया. — $^{d}$) S क्षुद्र° (for दुष्ट°).

12 $^{a}$) D5 तेषां (for एषां). T1 अपकृतः; G1 अपाक्रांतः; G2.3 M4.5 अपाकृंतः; M1–3 अपाकृंतन् (for महत्कृत्तं). — $^{b}$) Ś1 साराथैं चंदनं; K सरथे चोदने; Cs.v as in text. — $^{c}$) Dn1 कारयिता; D1.3.4.8 कारयतः; D5 कारयितुं; D7 Cc कारयथाः. B1 Dn2 D11.12 Cn सूत; B4 शूद्रः; Dn1 D3.4.8 Cv शूरः; D5 धीरः; D7 वीर (for शूर). B2 D2.6.9.10 Cap.vp कर्मकार इवाधीरः (D2 °शूरः); D5m कर्मकार यथा वीर; S क्षुद्रकर्म समास्था(G1 °ज्ञा)य. — Ca cites the entire stanza (v. l. कारयथाः).

13 $^{b}$) K B2 D4 समम्; Cc.s.v शमम् (as in text). Ś1 K आलक्षयाम्यहं; Cv नालक्षयामहे; Cc.r आलक्षयामहे (as in text). Cn.s cites लक्षयामहे. S अमर्षं लक्षयामहे. — $^{c}$) Ś1 B1 Dn1 D1–3.11.12 T2 अपि; B3 D4.8.10 चापि (for चैव). B2 D5 भूतानां (for सत्त्वानां). — $^{d}$) B (except B2) Dn2 D8.11.12 T1 Cn.r.s °पिपीलिकैः; D1–4.6 °पिपीलिका (D4.6 °काः).

14 $^{a}$) B1.3 S तु (M3 च); Dn1 D8 सं-; Dn2 D11.12 तत् (for तं). — $^{b}$) D10 कः (for न). T पार्थिवो (for पाण्डवो). — $^{c}$) B Dn1 D5.6 क्षयाय (for दुःखाय). — $^{d}$) Cv आविर्भूतः (for प्रादुर्भूतः). — After 14, D5 reads 17.

15 D5 reads 15–16 in marg. — $^{a}$) B3 कर्णं (for पुनः). — $^{b}$) Dn2 D3.6.11.12 इहार्हसि (for इहेच्छसि). S ह्या(T1 G1.3 om. हि)चार्यं क्षेप्तुमिच्छसि (G1 क्षन्तुमर्हसि). — $^{d}$) = 4. 44. $17^{d}$. S निःशेषं (G1 न शोकं) कर्तुमर्ह(M4 °मिच्छ)ति.

16 D5 reads 16 in marg. (cf. v. l. 15). — $^{a}$) Dn2 D11.12 S Cn नैव (G1 न च); D5 नैनं; Cs नैष (as in text). D5.6 S (except T2) देवा (for देवान्). K2 B (except B4) D2.5.6 S गंधर्वा (for गन्धर्वान्). D8 न देवा न च गंधर्वा. — $^{b}$) D8 S °सुरा (for °सुरान्). Dn2 D11.12 पन्नगान्; D8 S राक्षसाः (for राक्षसान्). D5.7

यं यमेषोऽभिसंक्रुद्धः संग्रामेऽभिपतिष्यति ।
वृक्षं गरुडवेगेन विनिहत्य तमेष्यति ॥ १७
त्वत्तो विशिष्टं वीर्येण धनुष्यमरराट्समम् ।
वासुदेवसमं युद्धे तं पार्थं को न पूजयेत् ॥ १८
दैवं दैवेन युध्येत मानुषेण च मानुषम् ।
अस्त्रेणास्त्रं समाहन्यात्कोऽर्जुनेन समः पुमान् ॥ १९
पुत्रादनन्तरः शिष्य इति धर्मविदो विदुः ।
एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः ॥ २०
यथा त्वमकरोर्द्यूतमिन्द्रप्रस्थं यथाहरः ।
यथानैषीः सभां कृष्णां तथा युध्यस्व पाण्डवम् ॥ २१
अयं ते मातुलः प्राज्ञः क्षत्रधर्मस्य कोविदः ।
दुर्द्यूतदेवी गान्धारः शकुनिर्युध्यतामिह ॥ २२
नाक्षान्क्षिपति गाण्डीवं न कृतं द्वापरं न च ।
ज्वलतो निशितान्बाणांस्तीक्ष्णान्क्षिपति गाण्डिवम् ॥
न हि गाण्डीवनिर्मुक्ता गार्ध्रपत्राः सुतेजनाः ।
अन्तरेष्ववतिष्ठन्ति गिरीणामपि दारणाः ॥ २४
अन्तकः शमनो मृत्युस्तथाग्निर्वडवामुखः ।
कुर्युरेते क्वचिच्छेषं न तु क्रुद्धो धनंजयः ॥ २५
युध्यतां काममाचार्यो नाहं योत्स्ये धनंजयम् ।
मत्स्यो ह्यस्माभिरायोध्यो यद्यागच्छेद्गवां पदम् ॥ २६ C. 4. 1582 B. 4. 50. 28 K. 4. 50. 41

इति श्रीमहाभारते विराटपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

नासुरोरगराक्षसाः. — D3 om. $16^{c}$–$17^{b}$. — $^{c}$) D5 S युध्येरन् (M1 °युः); Cs युध्येत (as in text). — $^{d}$) D5 तं पार्थं को न पूजयेत्; S कुंती(T1 G2 पांडु)पुत्रेण धीमता.

17 D5 reads 17 after 14; D3 om. $17^{ab}$ (cf. v. l. 16). — $^{a}$) D7.9 S एको (for एषो). B Dn1 अति-; Dn2 D7.9.11.12 हि; S (except M1.2) अपि (for अभि-). — $^{b}$) B D (except D5.7.9; D3 om.) G3 Ca.c नि-; T2 G2 हि (for ऽभि-). — Dn1 M3 om. $17^{cd}$. — $^{c}$) D7.9 तं तं (for वृक्षं). B1.5 गरुत्मान्वेगेन; B2.3 Dn2 D1–6.8.10–12 S गरुडवेगो (D2 °गे) वा (G1 वा गरुडो वापि); D7 निहत्य वेगेन. Ca cites गरुडो वा (cf. Cc). — $^{d}$) D1–3.8 समे° (for तमे°). Dn2 D11.12 निहत्य तमिहेष्यति; D7.9 वृक्षं तार्क्ष्य इवेष्यति; T G2 विनिहत्यांतमेष्यति; G1 न निहत्य तमेष्यति.

18 $^{a}$) S त्वया (for त्वत्तो). K D4 M1 विशिष्टो. M3 संग्रामे (for वीर्येण). — $^{b}$) B2 D2 M1.2.4 (*inf. lin.* as in text) स्वयं (for -समम्). — $^{c}$) Dn2 D11(m as in text).12 वीर्ये (for युद्धे). — $^{d}$) Ś1 K नु जीवयेत् (for न पूज°).

19 $^{a}$) Ś1 K1 B2.4 Dn2 D8 G2.3 देवं देवेन; B5 दैवेन देवं; D2.4.6.7 दैवेन दैवं (by transp.); D9 देवेन दैवं; T देवं दैवेन; G1 M1.2 दैवं देवेन. Cn cites देवेन. D8 युद्धेन; G1 युध्येरन् (for युध्येत). — $^{b}$) K2 B5 D1–3.9 तु; D4 एव (for च). Ś1 K1 B1–3 D5 मानुषं (K1 मनुष्यं) मानुषेण च (K1 तु); G1 मनुष्यो मानुषेण वा. — $^{c}$) Ś1 K महद्धन्यात् (for समाह°). B4 Dn1 अस्त्रं ह्यस्त्रेण यो (B4 समा-) हन्यात्; Dn2 D11.12 S अस्त्रेण चास्त्रमा(T1 G M2–4 °स्त्रं को; T2 M1.5 °स्त्रं यो)हन्यात्. — $^{d}$) G1.3 om. कः. S (except G3 M5) अधिकः (for समः). — After 19, D7 (marg. *sec. m.*) ins.:

845* एवमाभाष्य राधेयं दुर्योधनमथाब्रवीत् ।

20 $^{a}$) Ś1 B3–5 Dn1 अनंतरं; Dn2 D1.3.5.11.12 अनवरः; S अनवमः; Cc.r as in text.

21 $^{c}$) S (by transp.) सभां कृष्णां यथानैषीः (G1 यथा कृष्णा सभां नीता). — $^{d}$) D1.2 भारत (for पाण्डवम्). G2 (*inf. lin.*) यद् द्यूतस्थानमद्य हि.

22 $^{c}$) K गांधारे; D4.7–9 M3 गांधारिः. — $^{d}$) D1–3 इति (for इह).

23 $^{a}$) Ś1 S (except M3) गांडीवी; K गांडीवो (for गाण्डीवं). — $^{b}$) G1 न द्यूतस्थानमद्य वै (cf. v. l. $21^{d}$). — $^{c}$) B4 ज्वलंताग्निशिखाकारान्; T G ज्वलता(T1 °लिता; G1 °लद)ग्निशिखान्बाणान्; M ज्वलिताग्निशितान्बाणान्. — $^{d}$) Ś1 B1.5 Dn2 D1.11.12 तांस्तान्; B4 नाराचान् (for तीक्ष्णान्). Ś1 M5 गांडिवी; K गांडिवः; Dn2 D11.12 शत्रुषु; T G M1.2 पांडवः (for गाण्डिवम्). — Ca cites the entire stanza as in text.

24 $^{b}$) Ś1 K2 गार्ध्रपक्षाः; K1 गार्द्ध्रपक्षाः; D1–3.7.8.10 गार्धपत्राः; T G2 गृध्रपक्षाः; G1 गृध्रवक्त्राः; G3 M गृध्रपत्राः. D1–4.7–10 सुतेजसः; S शिलाशिताः (G1.3 शिलीमुखाः). Dn2 D11.12 शरा ह्याशीविषोपमाः. — $^{c}$) Dn D11.12 नांतरेषु; Cc अन्तरेषु (as in text). B1–3.5 Dn D5 D11.12 T G2 M2–4 अव(Dn2 इव)तिष्ठंते; B4 D4 G3 अपि तिष्ठंते (B4 °ति); D1.3 G1 एव (D3 चैव) तिष्ठंति (G1 °ते); M1.5 अवतिष्ठंतो.

# ४६

C 4. 1583
B 4. 51. 1
K 4. 51. 2

भीष्म उवाच ।

साधु पश्यति वै द्रोणः कृपः साध्वनुपश्यति ।
कर्णस्तु क्षत्रधर्मेण यथावद्योद्धुमिच्छति ॥ १
आचार्यो नाभिषक्तव्यः पुरुषेण विजानता ।
देशकालौ तु संप्रेक्ष्य योद्धव्यमिति मे मतिः ॥
यस्य सूर्यसमाः पञ्च सपत्नाः स्युः प्रहारिणः ।
कथमभ्युदये तेषां न प्रमुह्येत पण्डितः ॥ ३
स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः ।
तस्माद्राजन्ब्रवीम्येष वाक्यं ते यदि रोचते ॥ ४
कर्णो यदभ्यवोचन्नस्तेजःसंजननाय तत् ।
आचार्यपुत्रः क्षमतां महत्कार्यमुपस्थितम् ॥ ५
नायं कालो विरोधस्य कौन्तेये समुपस्थिते ।
क्षन्तव्यं भवता सर्वमाचार्येण कृपेण च ॥ ६
भवतां हि कृतास्त्रत्वं यथादित्ये प्रभा तथा ।

25 $^{a}$) B5 D5.6 पवनो; Dn1 प्रति यो; D7–9 स्वसनो; Cs शमनो (as in text). — $^{b}$) B4 पावको; D4.7–9 अथाग्निः; D5 पातालं (m अथ वा); G1.3 यथाग्निः (for तथाग्निः). — After $25^{ab}$, B4 ins.:

846* क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ।

— $^{d}$) G1.3 कुर्याद् (for क्रुद्धो). — After 25, Dn2 D11.12 ins.:

847* यथा सभायां द्यूतं त्वं मातुलेन सहाकरोः ।
तथा युध्यस्व संग्रामे सौबलेन सुरक्षितः ।

26 $^{b}$) D1.2 न हि (for नाहं). — $^{c}$) S मात्स्यस्त्व- (T2 मात्स्य अ; G3 मत्स्यस्त्व)स्त्वभिर्. — After 26, D7 ins. a passage given in App. I (No. 42).

Colophon. D7 reads it in marg. — *Sub-parvan:* Ś1 K गोग्रह; B2.4 Dn D1–4.6.8.10–12 उत्तरगोग्रह; M1.2.5 गोग्रहण. — *Adhy. name:* B1 D5m T1 G2 M2.5 अश्वत्थामवाक्यं (M2.5 °मवचनं); B3.4 D3.4.7–10 अश्वत्थामा- (D8 °म्नो)वाक्यं; B2 Dn1 D6 द्रौणिवाक्यं. — *Adhy. no.* (figures, words or both): B4 M3.4 48; D3 46; D5.10 44; D6 47; D7 43; T G M1.5 49; M2 58. — *S'loka no.:* G3 36.

## 46

1 Before the ref., T G ins.:

848* वैशंपायनः ।
ततः शांतनवस्तत्र धर्मार्थकुशलं हितम् ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ।

— $^{a}$) B2.5 D (except D4.6.7.9) द्रौणिः (for द्रोणः). — $^{b}$) K1 D10 साधु च; D6 च साधु; D8 साधु प्र° (for साध्वनु°). G1 साधु पश्यति वै कृपः. — After $1^{ab}$, T G ins.:

849* आचार्यपुत्रः सहजं निश्चितं साधु भाषते ।

— $^{c}$) D6 M5 क्षात्र° (for क्षत्र°). — $^{d}$) Dn1 केवलं (for यथावद्). D1–3.8 S अर्हति (for इच्छति).

2 $^{a}$) Ś1 K2 B1 Dn2 D10–12 नाभिवक्तव्यः; B2–5 D5.6 Ca.c नाभियोक्तव्यः; Dn1 D4.5m.7.8 S नाव(Dn1 °भि)मंतव्यः. Cr cites योक्तव्यः; Crp (Dev.) वक्तव्यः; Cap क्षेप्तव्यः. — $^{b}$) B4 कदाचन; T G2 विपश्चिता (for विजानता). — $^{c}$) Ś1 K2 B2.4 D1–3 G3 च (for तु).

3 $^{c}$) K D1.2.8 °दयस्; G1.3 °दयं (for °दये). — $^{d}$) Dn2 D11.12 पूरुषः (for पण्डितः).

4 D1 om. $4^{a}$–$5^{b}$. — $^{a}$) B2.4 D3.7.10 प्र° (for वि°). S स्वार्थे हि (T G2 M5 -पि) सर्वे मुह्यंति. — $^{b}$) M5 ये च (for येऽपि). — After $4^{ab}$, S (M om. lines 4–5) ins. the following (all omitting $4^{cd}$ altogether):

850* तस्मात्त्वं न जानाति यत्तु कार्यं नराधिपः ।
धार्तराष्ट्रो हि दुर्बुद्धिः पश्यन्नपि धनंजयम् ।
नैव पश्यति नाघ्राति मन्दः क्रोधवशं गतः ।
वैशंपायनः ।
एवमुक्त्वा तु राजानं पुनर्द्रौणिमुवाच ह ।
प्राञ्जलिर्भरतश्रेष्ठः साम्ना बुद्धिमतां वरः ।

— $^{c}$) B2 D6.7 एतत् (for एष). — $^{d}$) B2 वाच्यं (for वाक्यं). B3 यदि च (for ते यदि).

5 D1 (cf. v. l. 4) M om. $5^{ab}$. Before 5, T1 G2 ins. भीष्मः. — $^{a}$) K2 B2.3.5 D2–4.8.9 ते; B4 त्वां; Dn2 D11.12 वै; D7 तत् (for नः). Ś1 यत्कर्णो ह्यद्य वोचन्नः; B1 कर्णो यदयमावोचत्; Dn1 Cn कर्णो हि यदवोचत्त्वां; D6 T G कर्णो यद्यदवोचद्धि (D6 °न्नः; G3 °त्तं). — $^{b}$) G1 °संदहनाय. K1 यत्; K2 D4 च; D2 T G1 ते; D7.9 वै; D8 वः; G2 नः (for तत्). G3 पश्यन्नपि धनंजयं. — $^{c}$) K2 B1 D1.3.8 T2 M4.5 °पुत्र.

6 $^{d}$) G1.3 कृपेणाचार्यसूनुना (G1 °जेन च). — After 6, T1 G1.3 ins. a variant of 11:

यथा चन्द्रमसो लक्ष्म सर्वथा नापकृष्यते ।
एवं भवत्सु ब्राह्मण्यं ब्रह्मास्त्रं च प्रतिष्ठितम् ॥ ७
चत्वार एकतो वेदाः क्षात्रमेकत्र दृश्यते ।
नैतत्समस्तमुभयं कस्मिंश्चिदनुशुश्रुमः ॥ ८
अन्यत्र भारताचार्यात्सपुत्रादिति मे मतिः ।
ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ॥ ९
आचार्यपुत्रः क्षमतां नायं कालः स्वभेदने ।
सर्वे संहत्य युध्यामः पाकशासनिमागतम् ॥ १०
बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।
मुख्यो भेदो हि तेषां वै पापिष्ठो विदुषां मतः ॥ ११

अश्वत्थामोवाच ।

आचार्य एव क्षमतां शान्तिरत्र विधीयताम् ।
अभिषज्यमाने हि गुरौ तद्वृत्तं रोषकारितम् ॥ १२

वैशंपायन उवाच ।

ततो दुर्योधनो द्रोणं क्षमयामास भारत ।
सह कर्णेन भीष्मेण कृपेण च महात्मना ॥ १३

द्रोण उवाच ।

यदेव प्रथमं वाक्यं भीष्मः शांतनवोऽब्रवीत् । C. 4. 1606 B. 4. 51. 18 K. 4. 51. 20

851* बलस्य व्यसनान्याहुस्तानि धीरा मनीषिणः ।
मुखे भेदं च तेषां तु पापिष्ठं विदुषां मतम् ।
[ (L. 2) T1 मुख्ये (for मुखे). ]

7 a) Dn2 D10–12 भवतां च; S भवतोपि (T1 M3 °तो हि). — c) K तथा (for यथा). B D (except D2.9) T G2 लक्ष्मीः (for लक्ष्म). G1.3 यथा च सोमे लक्ष्मीश्च. — d) Ś1 K2 D8 नावकृष्यते; D9 M2 नोप°. — Ś1 K1 om. (? hapl.) 7e–9d. — ef) S ब्रह्मास्त्रं ब्रह्म चैव (G1.3 ब्रह्मास्त्रं ब्राह्मण्यं च) (for ब्राह्मण्यं ब्रह्मास्त्रं च). K2 ब्रह्मास्त्रेश; D1–3.8 ब्रह्मास्त्रं (D1 °स्त्र-) त्वं (for °स्त्रं च).

8 Ś1 K1 om. 8 (cf. v. l. 7). — a) = 1. 1. 208a. S एकतश्चतुरो वेदाः. — b) K2 B2 D2.4.7.8 T1 G1.3 M2.3 क्षत्रम् (for क्षात्रम्). — M3 om. 8c–9d. — d) Dn2 D4.7.9.11.12 अपि; T2 उप- (for अनु-). K2 B5 Dn D2.4.7.8 T G M5 -शुश्रुमः (as in text); the rest -शुश्रुम.

9 Ś1 K1 M3 om. 9 (cf. v. l. 7, 8). — a) D7 T G2.3 M5 भरताचार्यात्; Cs as in text. — After 9ab, Dn D11.12 ins.:

852* वेदान्ताश्च पुराणानि इतिहासं पुरातनम् ।
जामदग्न्यमृते राजन्को द्रोणादधिको भवेत् ।

10 a) K2 B1.4 D8.10 T2 M आचार्यपुत्र. — b) T G1.3 नैष (for नायं). M2 शांतिरत्र (for नायं कालः). B2 Dn2 D11.12 प्र-; Dn1 S वि-; D4.9 च (for स्व-). — c) T G2 संगम्य (for संहत्य). B4 योत्स्यामः (for युध्यामः). — After 10, D11 ins. 853* and erases it.

11 Before 11, Dn2 D11.12 ins. दुर्योधन उ°. — For a variant of 11 in T1 G1.3, cf. 851* (under v. l. 6). — c) K1 मुख्यभेद्रे; K2 मुख्ये भेदे; T1 G2 मुखभंगो; G1 मुख्यभेदो; G3 मुखे भेदो (for मुख्यो भेदो). B D G1 तु (B1 हि) (for वै).

12 B4 द्रौणिः (for अश्वत्थामा). — After the ref., B Dn D3 (om. lines 1–2).5–7.10–12 ins.:

853* नैव न्याय्यमिदं वाच्यमस्माकं पुरुषर्षभ ।
किं तु रोषपरीतेन गुरुणा भाषिता गुणाः ।
शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ।
सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ।
दुर्योधन उवाच ।

[ (L. 1) B4.5 D5–7 नैवं; Cs नैव (as above). B4.5 Dn1 D7.10 इमं कालम्; B3 इदं कालम्; D6 इदं वाक्यम्; Cn इदं वाच्यम् (as above). Ca cites वाच्यं. Dn2 D11.12 परमर्षभ (for पुरुषर्षभ). — (L. 3) B (except B5) Dn2 D5.6.11.12 वाच्या (for ग्राह्या). — (L. 4) Dn2 D11.12 तस्मात्सर्वप्रयत्नेन (for prior half). Dn2 पुत्रैः शिष्ये; D3 पुत्रैः शिष्यैः (for पुत्रे शिष्ये). — D3.10 om. दुर्योधन उ°; D11 reads it in marg. (*sec. m.*). ]

— a) B Dn D6.12 T2 G2.3 एष (for एव). — b) B4 नीतिर् (for शान्तिर्). — c) Hypermetric! K2 अभिवाद्य°; B1 Dn2 D11.12 अभिद्यमाने; B2.5 Dn1 D5.9 (cf. Cv) आक्षिप्य°; B3m Cnp.sp अभिमृष्य°; B4 प्रक्षिप्य°; D1–3.7.8 Cc.np.s.v अभिषह्य°; D4 अविद्य°; D6 असह्य°; Ca.vp अभिषज्यमाने (as in text). B Dn D4–7.9.11.12 तु (for हि). S प्रशांते हि गुरौ मे स्यात्. — d) Dn2 D11 (marg. *sec. m.* as in text).12 न कृतं; S निवृत्तं (G1.3 प्रशांतं); Ca.r.v तद्वृत्तं (as in text). Cc cites वृत्तं. D1.3 दोष°; D11.12 Cn (cf. Cs) शेष°; S कोप°; Ca (cf. Cv) as in text.

13 d) T G कृपं चैव महाबलं; M5 कृपेण द्रौणिना सह.

14 a) Ś1 K1 B2.5 Dn D6.7.9.11.12 यदेतत्; K2 D4 यद्येतत्; B4 D8 यदेवं; D10 T2 G1.3 M यदैव (for यदेव). — c) Ś1 K तत्राहं च (Ś1 वै); Dn2 D11.12 एतेनाहं; D10 G1 तदैवाहं; T G2.3 M तदैवावां (for तेनैवाहं). Ś1 प्रसन्नस्तु; K प्रसक्तस्तु; B2 D5 प्रसन्नोस्मि; Dn2 D11.12

4. 1800 / 4. 51. 18 / 4. 51. 20 तेनैवाहं प्रसन्नो वै परमत्र विधीयताम् ॥ १४
यथा दुर्योधनेऽयत्ते नागः स्पृशति सैनिकान् ।
साहसाद्यदि वा मोहात्तथा नीतिर्विधीयताम् ॥ १५
वनवासे ह्यनिर्वृत्ते दर्शयेन्न धनंजयः ।
धनं वालभमानोऽत्र नाद्य नः क्षन्तुमर्हति ॥ १६
यथा नायं समायुज्याद्धार्तराष्ट्रान्कथंचन ।
यथा च न पराजय्यात्तथा नीतिर्विधीयताम् ॥ १७
उक्तं दुर्योधनेनापि पुरस्ताद्वाक्यमीदृशम् ।
तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हसि ॥ १८

इति श्रीमहाभारते विराटपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## ४७

भीष्म उवाच ।
कलांशास्तात युज्यन्ते मुहूर्ताश्च दिनानि च ।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ॥ १
ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि ।

प्रसन्नोसौ; T G3 M2 प्रसन्नौ वै; M1.3 प्रसन्नौ स्व: (for प्रसन्नो वै). — d) B1.5 Dn D11.12 नीतिर्; Cc परम् (as in text).

15 D9 om. 15. — a) B2 M1.2 तथा (for यथा). Ś1 K B3 D5.6.10 S दुर्योधनो; B1.2.4.5 Dn D11.12 °धनं (for °धने). Ś1 K यत्तो; B1.2.4.5 Dn D9.11.12 पार्थो; B3 D6 पार्थं; D2 यत्नो; D3 यत्ने; D5.10 ह्रदं; D8 याते; S राजा (for ऽयत्ते). — b) Ś1 K1 B4 D2.4 नाप(B4 °व)स्पृश(K1 D4 °शं)ति; B1.5 D6 नोपसर्पति; B2 नोपयुज्यत; B3 नोपसर्पेत; Dn D3.11.12 नायं पश्यति; D1 नापत्स्पृशति (for नागः स्पृशति). B (except B4) D6 संगरे; D4 सैनिकाः. S न गंच्छेत्कांचिदापदं. — D6 repeats $15^{ab}$ (v. l. नेदमागः for ऽयत्ते नागः). ❀ Cr: सैनिकान् षष्ठ्यर्थे। सैनिकानां मध्ये दुर्योधनमिदमागः अर्जुनेन सह युद्धम्॥ Cv: द्रोणादीनागः मङ्गलक्षणोऽपराधो न स्पृशति। हे सैनिकाः यथा दुर्योधनो यत्तो यत्नवानमुं दूरवर्तिनमर्जुनं न स्पृशति ॥❀

16 a) K1 ह्यतिवृत्ते; Dn1 D1-4 ह्यनिवृत्ते; S तु निर्वृत्ते (for ह्यनिर्वृत्ते). — b) T G दृश्यते च (T2 G2 तु); M2.5 दर्शयी(M2 °ये)त (for दर्शयेन्न). B2 D5 स्वमर्जुनः; D10 हि पांडवः (for धनंजयः). M1.3 यदि बीभत्सुरागतः. — c) Ś1 K एवं; Cr.s धनं (as in text). B1 D (except D2.4.6.10) S च (for वा). — d) T G नार्जुनः; M4 नात्र तत् (for नाद्य नः). B1 Dn2 D11.12 तत् (for नः). T1 क्षेप्तुम् (for क्षन्तुम्). B4 न ह्येवं कर्तुमर्हति.

17 M3 om. $17^{ab}$. — a) Ś1 B1.2.5 Dn2 D11.12 Cn.s °युंज्यात्; B3 °युध्येत्; D6 °युज्येत्; D10 °सज्येत् (for °युज्यात्). B4 D1-5.7-9 T G1.2 M (M3 om.) यथा नायमसा युज्येत् (D4.8 युध्येत्; D5 मुह्येत् [m युज्येत्]; D7 G1 M1.2.5 युज्यात्; D9 M4 युंज्यात्; T G2 युक्तो); G3 यथा नाशाय नो युंज्यात्. — b) K B3.4 D1-3.5.7.9.10 T G2.3 M (M3 om.) धार्तराष्ट्रः; B2 D6 °राष्ट्रं; D4.8 °राष्ट्र (for °राष्ट्रान्). — c) B1 न च सेना; B2.3 य(B3 त)था न च; B4 यथान्यायं; Dn1 न च सेनां; Dn2 D11.12 न वशेन (for यथा च न). B2.4 D5-7 परो जय्यात्; D9 T G2 M पराजैषीत्; Cr.s पराजय्यात् (as in text). G1.3 यथा च नापरो(G1 °रा)जैषीत्. — d) D9 S पार्थो नस्तद्विधीयतां.

18 a) Ś1 अथ (for अपि). — b) B3 D6 पुनस्तद्; D1-3 तत्तथा; Cs पुरस्तात् (as in text). — c) Ś1 तदनुसृत्य. D1-4.6-9 S (except T1) गांगेयो. — d) D1-3.7.9 S वक्तुमर्हति.

Colophon om. in D7. — *Sub-parvan:* Ś1 गोगूडे (sic); K गोग्रह; B Dn D1-4.6.8.9.11.12 उत्तरगोग्रह; M1 गोग्रहण; M2 गोहरण. — *Adhy. name:* B4.5 M2 भीष्मवाक्यं; D4 द्रोणप्रशंसा; G2 द्रोणप्रसादं. — *Adhy. no.* (figures, words or both): B4 D6 M2.4 49; D3 47; D5.10 45; D9 42; T G M1.5 50; M3 illegible. — *S'loka no.:* D3 20; G3 23.

**47**

1 a) Ś1 K1 कालशस्; B D5.10 Ca.r कालतस्; D4 T1 G1 कालांशास्; G3 कलाश्च (for कलांशास्). K2 D7-9 कलाश्चात्र प्रयुज्यंते; Dn D3.6.11.12 कला काष्ठाश्च यु° (cf. Cs); D1.2 कलास्तास्तात (D1 °सु) यु°. Cv कालतश्चात्र युज्यन्ते. — b) S मुहूर्तानि (for °र्ताश्च).

2 b) B2.3.5 D5 संवत्सराणि; D6 °त्सरान्. B3 च (for अपि).

3 a) Ś1 तस्मात्; K तथा; Cr.v तेषां (as in text).

एवं कालविभागेन कालचक्रं प्रवर्तते ॥ २
तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।
पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः ॥ ३
तेषामभ्यधिका मासाः पञ्च द्वादश च क्षपाः ।
त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ॥ ४
सर्वं यथावच्चरितं यद्यदेभिः परिश्रुतम् ।
एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ ५
सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः ।
येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराध्नुयुः ॥ ६
अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करम् ।
न चापि केवलं राज्यमिच्छेयुस्तेऽनुपायतः ॥ ७
तदैव ते हि विक्रान्तुमीषुः कौरवनन्दनाः ।
धर्मपाशनिबद्धास्तु न चेलुः क्षत्रियव्रतात् ॥ ८
यच्चानृत इति ख्यायेद्यच्च गच्छेत्पराभवम् ।
वृणुयुर्मरणं पार्था नानृतत्वं कथंचन ॥ ९
प्राप्ते तु काले प्राप्तव्यं नोत्सृजेयुर्नरर्षभाः ।
अपि वज्रभृता गुप्तं तथावीर्या हि पाण्डवाः ॥ १०
प्रतियुध्याम समरे सर्वशस्त्रभृतां वरम् ।
तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम् ।
तत्संविधीयतां क्षिप्रं मा नो ह्यर्थोऽतिगात्परान् ॥ ११ C 4. 1617 B 4. 52. 11 K. 4. 52. 14

— d) Ś1 K उपजायते; B3 (m as in text). 4. 5 D5. 6 Ca. c. rp उपचीयतः; D4. 10 उपजायेतां; S अधिमासकौ; Cap. rp उपचीयते; Cr उपजायतः (as in text). D1. 3. 7–9 द्वौ जायेतेधिमासकौ (cf. Cv).

4 a) B1. 3. 5 Dn D4–6. 8. 11. 12 Ca. c. s. v एषाम् (for तेषाम्). B (except B5) Dn1 D4–7. 9. 10 G2 Ca. c अप्यधिका; D8 T1 अध्य°; M1 च द्य° (for अभ्य°). — b) B (except B4) Dn1 D5. 6 G1 M1 Ca. c. r च द्वादश (by transp.). — d) Ś1 K निश्चिता (for वर्तते). — Ca. c cite the entire stanza. — After 4, S ins.:

854* पूर्वेद्युरेव निर्वृत्ते ततो बीभत्सुरागतः ।;

while D7 (marg.) ins.:

855* गते वर्षद्वये चैव पञ्चपक्षे दिनद्वये ।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः ।

5 b) K तद्यदेभिः. Ś1 B Dn1 D1–5. 8–12 T G2 M4. 5 प्रति° (for परि°). — c) Ś1 यथा; K तथा; Dn D11. 12 द्रुतं (for ध्रुवं). Ś1 K1 श्रुत्वा; S मत्वा (for ज्ञात्वा).

6 a) S (except M5) पंच (for चैव). — d) D1. 3. 5 कथं (for कस्माद्). K2 पराङ्मुखः (for ऽपराध्नुयुः). — After 6, T G2 ins.:

856* कामात्क्रोधाच्च लोभाच्च कामक्रोधभयादपि ।
स्नेहाद्वा यदि वा मोहाद्धर्मं नात्येति धर्मजः ।

7 d) D6 Cc अभ्युपायतः; D10 च पापतः; D11. 12 उपायतः; T G2 ह्यधर्मतः; Cv अनुपायतः (as in text).

8 a) Ś1 Dn1 D8 M3 तदेव; T2 तथैव (for तदैव). B3. 4 D4. 8 M1–3 Ca विक्रांतम्; M5 °तिम्. D6 तदैव ते विनिष्क्रांताः; G1 यदैव हि बहिर्याताः; G3 यदैव ते वनं प्राप्ताः. — c) D7 °पाशैर्. B2–4 M3 ते (for तु). — d) K2 D6 M2 °व्रताः.

9 a) K D4. 8 T1 G2 M2. 3 यश्च; B1. 5 D5. 6. 7m तच्च; D7. 9 यथा; Cs यच्च (as in text). B (except B1) Dn1 D5. 6. 10 Cr अनृतम्; Cn. s. v अनृतः (as in text). K B2. 4 D5 ध्यायेत्; Dn2 D11. 12 Cn. s ख्यायात्; D1–3 ख्याय; T G ख्यातः (for ख्यायेत्). — b) Ś1 B1–3. 5 Dn1 D5. 6. 10 यः स; K G1. 3 M2. 3 यश्च; B4 तच्च; D1–3 यत्र; D7. 9 T G2 स च; D8 कुत्र (for यच्च). M परां गतिं (for पराभवम्). — c) T G2. 3 वृणीयुर्. — d) B4 D5–7 नानृतं तु; Cv नानृतत्वं (as in text).

10 a) B (except B4) Dn D1–3. 5. 6. 8. 10–12 प्राप्ते (B1–3. 5 Dn1 D3. 5 °प्त-) काले तु (B3. 5 D8 च) (for प्राप्ते तु काले). D7. 9 S स्वानर्थान् (for प्राप्तव्यं). D4 प्राप्तव्यं प्राप्तकाले तु. — b) B4 कथंचन (for नरर्षभाः). — c) D1–3 चक्र° (for वज्र°). D7. 9 S गुप्तान् (M1–3 गुप्ताः).

11 a) B1 Dn2 D11. 12 G1. 3 प्रतियुध्येम; B3. 4 °युध्यामि; D7. 9 °योत्स्यंति. D10 प्रतियुध्यामहे पार्थं. — b) K °शास्त्र°. Dn1 वर; D7. 9 वराः; G2 वरः. — After 11ab, B4. 5 D6 ins.:

857* आगतं फाल्गुनं राजन्सर्वे तत्र न संशयः ।

— c) K यत्र हि (for यदत्र). — e) B4 तथा विधीयतां. B (except B5) Dn D4–12 शीघ्रं; D2 यत्नं (for क्षिप्रं). — f) K2 B1. 2 D11. 12 मा वो; Dn1 D1. 3 मनो (for मा नो). Ś1 K ह्यर्थातिगो; B1. 2 Dn D2. 4. 6–9. 11. 12 ह्यर्थोऽभ्य- (Dn1 D4. 6. 8 °त्य)गात्; T1 M3 व्यर्थोति (T1 °रि)गात्; M1. 2 -त्यर्थोत्य (M2 -त्यर्थाति)गात्. Ca. rp (Dev.) अभिगात्; Cr अत्यगात्; Cvp अतिगात् (as in text). Ś1 B Dn1 D4–7. 9. 10 G2 Cc. r. vp परं; D8 परः. Cv मा नो ह्यर्थोऽत्यगात्परः.

12 a) D8 समरे (for संग्रामे). — b) K1 गारव; K2

:.4 1617 3.4 52.12 C.4.52.15 न हि पश्यामि संग्रामे कदाचिदपि कौरव ।
एकान्तसिद्धिं राजेन्द्र संप्राप्तश्च धनंजयः ॥ १२
संप्रवृत्ते तु संग्रामे भावाभावौ जयाजयौ ।
अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥ १३
तस्माद्युद्धावचरिकं कर्म वा धर्मसंहितम् ।
क्रियतामाशु राजेन्द्र संप्राप्तो हि धनंजयः ॥ १४

दुर्योधन उवाच ।

नाहं राज्यं प्रदास्यामि पाण्डवानां पितामह ।
युद्धावचारिकं यत्तु तच्छीघ्रं संविधीयताम् ॥ १५

भीष्म उवाच ।

अत्र या मामकी बुद्धिः श्रूयतां यदि रोचते ।
क्षिप्रं बलचतुर्भागं गृह्य गच्छ पुरं प्रति ।
ततोऽपरश्चतुर्भागो गाः समादाय गच्छतु ॥ १६
वयं त्वर्धेन सैन्येन प्रतियोत्स्याम पाण्डवम् ।
मत्स्यं वा पुनरायातमथ वापि शतक्रतुम् ॥ १७
आचार्यो मध्यतस्तिष्ठत्वश्वत्थामा तु सव्यतः ।

गौरवं; B3 G1 कौरवाः (for कौरव). — $^{d}$)=(var.) $14^{d}$. B3 अयं; B4 M3. 5 हि (for च).

13 $^{a}$) D1–3 संप्राप्तेपि (for संप्रवृत्ते). B3 अपि; D1–3 हि; T G2. 3 च (for तु). G1 सम्यक्प्रवृत्ते संग्रामे. — $^{c}$) D3. 10 G3 स्पृशते. — $^{d}$) Ś1 K B5 D7 M3 दिष्टम्; Ca दृष्टम् (as in text). A few MSS. न संशयः, असंशयः etc.

14 $^{a}$) Cf. $15^{c}$. D6 अस्माद् (for तस्माद्). K2 युद्धोवितर्कं वा; B1 Dn D11. 12 Crp (Dev.) युद्धोचितं कर्म; B4. 5 D5–10 S Ca. c युद्धाव(B4. 5 °नु; D5. 7–9 G1. 3 °य; T G2 °प)चरितं; D1–4 युद्धं विचार्यैकं (for युद्धावचरिकं). ❀ Cr: अपचरितं? युद्धोचितम्। (दे) अनुचरितम्। ❀ — $^{b}$) M5 कदाचिदपि कौरव. — M3 om. $14^{c}$–$15^{d}$; M5 om. $14^{cd}$. — $^{c}$) Ś1 कौरव्य (for राजेन्द्र). — $^{d}$) B1. 2. 5 Dn D11. 12 M2 च; D1–3 G3 अयं (for हि). — S (except M3) ins. after 14 (M5, which om. $14^{cd}$, after $14^{ab}$):

858* एकोऽपि समरे पार्थः पृथिवीं निर्दहेच्छरैः ।
भ्रातृभिः सहितस्तात किं पुनः कौरवान्रणे ।
तस्मात्संधिं कुरुश्रेष्ठ कुरुष्व यदि मन्यसे ।

[ (L. 1) M5 त्रैलोक्यं (for पृथिवीं). G1 M5 अपि निर्दहेत् (for निर्दहेच्छरैः). — (L. 2) T G2 पार्थः; G1. 3 M1. 4 वीरैः (for तात). ]

15 M3 om. 15 (cf. v. l. 14). — $^{a}$) M1 न हि (for नाहं). — $^{b}$) S (M3 om.) पांडवेभ्यः. — After $15^{ab}$, T G ins.:

859* ग्रामं सेनां च दासीं च स्वल्पं द्रव्यमपि प्रभो ।

— $^{c}$) Cf. $14^{a}$. Ś1 B2–5 D5. 6 S (M3 om.) युद्धाव(B5 °नु; D5 T G M2 °य)चरितं (T1 M2 °तुं); B1 Dn D11. 12 युद्धोपचारिकं; D1. 3 युद्धाविचारिकं; D2. 4. 7–9 Cv युद्धाधिकारिकं (D4. 8 °तं). Ś1 यच्च (for यत्तु). — $^{d}$) T G सर्वं (for शीघ्रं). B1 Dn D11. 12 प्र° (for सं°). Ś1 D1. 3 तत्तु शीघ्रं विधी°. — After 15, S (except M3) ins.:

860* वैशंपायनः ।
भीष्मस्योपरते वाक्ये तथा दुर्योधनस्य च ।
प्राप्तमर्थ्यं च यद्वाक्यं द्रोणश्चाह द्विजोत्तमः ।

16 S द्रोणः (for भीष्मः). — S ins. after the ref. (M3, which om. $14^{c}$–$15^{d}$, after $14^{ab}$):

861* यत्तु युद्धाय चरितं भवेद्वा धर्मसंहितम् ।
कस्त्वया सदृशो लोके भूयस्त्वं वक्तुमर्हसि ।

[ (L. 1) M3 om. line 1. M1 युद्धावचरितुं धर्मं वा (for युद्धाय चरितं भवेद्वा). — (L. 2) T1 G3 M2 कर्तुम् (for वक्तुम्). ]

— $^{a}$) S इयं तु (for अत्र या). Ś1 मामिकी; B1–3 Dn D1. 5. 6. 9–12 S Cc मामिका; D2–4. 8 मामका. S प्रज्ञा (for बुद्धिः). — After $16^{ab}$, all MSS. except M ins.:

862* सर्वथा हि मया श्रेयो वक्तव्यं कुरुनन्दन ।
[ D1 G1. 3 च; D2–4 तु (for हि). ]

— $^{c}$) S राजा (for क्षिप्रं). K2 B2. 4. 5 Dn D11. 12 G3 बलं (for बल-). — $^{d}$) S क्षिप्रमादाय गच्छतु. — G1 om. $16^{ef}$.

17 $^{a}$) G1 स्वयं (for वयं). B1–3 Dn D2. 11. 12 चार्धेन; B5 D7. 9 S अर्धेन (G1 मध्येन); D3 तदर्धेन (hypermetric!) (for त्वर्धेन). Ś1 K B1 Dn1 D7 G1 सैन्यस्य (for सैन्येन). — $^{b}$) S प्रतियोत्स्यामहेर्जुनं. — After $17^{ab}$, N T1 G1. 3 ins.:

863* अहं द्रोणश्च कर्णश्च अश्वत्थामा कृपस्तथा ।
प्रतियोत्स्याम बीभत्सुमागतं कृतनिश्चयम् ।

[ (L. 1) T1 G3 भीष्मश् (for द्रोणश्). D6 द्रोणिः शारद्वतस्तथा (for the posterior half). — (L. 2) G1 °योत्स्यंति (for °योत्स्याम). T1 G1. 3 संग्रामे (for आगतं). T1 °निश्चयाः. ]

T1 G1. 3 cont.: T2 G2 M ins. after $17^{ab}$:

864* एवं राजा सुगुप्तः स्यान्न क्लैब्यमनुपश्यति ।
[ T G2 M4. 5 ह्यनु° (for अनु°). ]

— $^{c}$) S मात्स्यं. Dn2 D11. 12 S पुनरायांतं. — $^{d}$) N (except Ś1 K D7) आगतं वा (for अथ वापि). D4 पुरंदरं. — After 17, Dn1 ins.:

कृपः शारद्वतो धीमान्पार्श्वं रक्षतु दक्षिणम् ॥ १८
अग्रतः सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः ।
अहं सर्वस्य सैन्यस्य पश्चात्स्थास्यामि पालयन् ॥ १९

इति श्रीमहाभारते विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७

## ४८

वैशंपायन उवाच ।
तथा व्यूढेष्वनीकेषु कौरवेयैर्महारथैः ।
उपायादर्जुनस्तूर्णं रथघोषेण नादयन् ॥ १
ददृशुस्ते ध्वजाग्रं वै शुश्रुवुश्च रथस्वनम् । C. 4 1631 B. 4 53 2 K. 4. 54. 2

865* अहमावारयिष्यामि वेलेव मकरालयम् ।;
while S ins.:

866* युध्याम सह संहत्य पाकशासनिमागतम् ।
[=(var.) 4. 46. $10^{cd}$. — T G संगम्य; $M_4$ संगत्य (for संहत्य). ]

M cont.: T G ins. after 868*:

867* वैशंपायनः ।
द्रोणस्योपरते वाक्ये भीष्मः प्रोवाच बुद्धिमान् ।

N ins. after 17 ($Dn_1$, after 865*): T $G_1$ after 866*:

868* वैशंपायन उवाच ।
तद्वाक्यं रुरुचे तेषां भीष्मेणोक्तं महात्मना ।
तथा हि कृतवान्राजा कौरवाणामनन्तरम् ।
भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरम् ।
सेनामुख्यान्व्यवस्थाप्य व्यूहितुं संप्रचक्रमे ।

[ T G om. उवाच. — (L. 1) T G द्रोणेन (for भीष्मेण). — (L. 2) $D_{7.9}$ धनुर्धरः (for अनन्तरं). — (L. 4) $D_{1-4.8.10}$ T G अवस्थाप्य; $D_7$ प्रतिष्ठाप्य (for व्यव°). ]
Thereafter T G ins. 867*.

18 Before 18, all MSS. except M ins. भीष्म उवाच ($T_1$ $G_{1.3}$ वैशं°). Ś$_1$ $B_{1.5}$ Dn $D_8$ आचार्यं मध्ये तिष्ठ त्वं; $D_{6.7.9}$ $T_1$ $G_{1.3}$ आचार्यो मध्यतस्तिष्ठेत्; $D_{10}$ आचार्य मध्यतस्तिष्ठ. — $^{b}$) $B_5$ $D_{4.7.9.10}$ च (for तु). $B_{1.3.5}$ वामतः; $G_3$ मध्यतः. — After 18, S ins.:

869* विकर्णश्च महावीर्यो दुर्मुखश्च परंतपः ।
शकुनिः सौबलश्चैव दुःसहश्च महाबलः ।
द्रोणस्य पार्श्वमजिताः पालयन्तु महारथाः ।

19 $^{a}$) $D_7$ T $G_2$ $M_4$ च (for तु). — $^{b}$) $K_1$ S दंसितः; Cs दंशितः (as in text). — $^{c}$) $D_{1-3.8}$ वै सर्व- (for सर्वस्य). — $^{d}$) $D_{1.2}$ पार्ष्णिं (for पश्चात्). $B_4$ तिष्ठामि (for स्थास्यामि). — After 19, S ins.:

870* सर्वे महारथाः शूरा महेष्वासा महाबलाः ।
युध्यन्तु पाण्डवश्रेष्ठमागतं यत्नतो युधि ।
वैशंपायनः ।
अभेद्यं परसैन्यानां व्यूहं व्यूह्य कुरूत्तमः ।
वज्रगर्भं व्रीहिमुखं पद्मचन्द्रार्धमण्डलम् ।
तस्य व्यूहस्य पश्चार्धे भीष्मश्चाथोद्यतायुधः ।
सौवर्णं तालमुच्छ्रित्य रथे तिष्ठन्नशोभत ।

[ (L. 4) $M_1$ °चक्रार्ध°; $M_{2.3}$ °चक्रांत°; $M_{4.5}$ °चंद्रार्क° (for °चन्द्रार्ध°). ]

Colophon om. in $D_7$. — *Sub-parvan:* $K_1$ गोग्रह; $B_{2.4}$ Dn $D_{1-3.6.8-12}$ उत्तरगोग्रह; $M_{1.2}$ गोग्रहण. — *Adhy. name:* B $D_5$ भीष्मवाक्यं; $D_4$ दुर्योधनस्य गोधनस्य च प्रचलनः; T $G_2$ $M_2$ भीष्म($M_2$ om. it)व्यूहकरणं. — *Adhy. no.* (figures, words or both): $K_1$ $D_3$ 47; $B_4$ $M_{2-4}$ 50; $D_5$ 46; $D_{6.9}$ 49; $D_{10}$ 45; T G $M_{1.5}$ 51. — *S'loka no.:* $D_1$ 24; $G_3$ 34.

In S, this adhy. is followed by (the S version of) adhy. 51.

## 48

1 $^{a}$) $T_2$ $G_2$ ततो (for तथा). — $^{b}$) Dn $D_{11.12}$ कौरवेयेषु भारत; $D_6$ कौरवाणां महा°.

2 $^{a}$) S तद् (for ते). $D_{7.9}$ तु; S (except $G_{1.3}$) तें (for वै). — $^{b}$) $K_2$ B D (except $D_6$) महा° (for रथ°). — $D_9$ om. $2^{cd}$. — $^{d}$) $D_{7.9}$ गांजीवस्य. N निःस्वनं. — After 2, S ins.:

871* त्रिकोशमात्रं गत्वा तु पाण्डवः श्वेतवाहनः ।
सेनामुखमभिप्रेक्ष्य पार्थो वैराटिमब्रवीत् ।
राजानं नात्र पश्यामि रथानीके व्यवस्थितम् ।
दक्षिणं पक्षमास्थाय कुरवो यान्त्युदङ्मुखाः ।
उत्सृज्यैतद्रथानीकं महेष्वासाभिरक्षितम् ।
गवाग्रमभितो याहि यावत्पश्यामि मे रिपुम् ।
गवाग्रमभितो गत्वा गाश्चाशु विनिवर्तय ।
यावदेते निवर्तन्ते कुरवो जवमास्थिताः ।
तावदेव पशून्सर्वान्निवर्तिष्ये तवाभिभो ।
इत्युक्त्वा समरे पार्थो वैराटिमपराजितः ।
सव्यं पक्षमनुप्राप्य जवेनाश्वानचोदयत् ।

C. 4. 1631 B. 4. 53. 2 K. 4. 54. 2 दोधूयमानस्य भृशं गाण्डीवस्य च निस्वनम् ॥ २
ततस्तत्सर्वमालोक्य द्रोणो वचनमब्रवीत् ।
महारथमनुप्राप्तं दृष्ट्वा गाण्डीवधन्विनम् ॥ ३
एतद्ध्वजाग्रं पार्थस्य दूरतः संप्रकाशते ।
एष घोषः सजलदो रोरवीति च वानरः ॥ ४
एष तिष्ठन्रथश्रेष्ठो रथे रथवरप्रणुत् ।
उत्कर्षति धनुःश्रेष्ठं गाण्डीवमशनिस्वनम् ॥ ५
इमौ हि बाणौ सहितौ पादयोर्मे व्यवस्थितौ ।
अपरौ चाप्यतिक्रान्तौ कर्णौ संस्पृश्य मे शरौ ॥ ६
निरुष्य हि वने वासं कृत्वा कर्मातिमानुषम् ।

ततोऽभ्यवादयत्पार्थो भीष्मं शांतनवं कृपम् ।
द्वाभ्यां द्वाभ्यां तथाचार्यं द्रोणं च निशितैः शरैः ।

[ (L. 3) T1 यथानीकं; T2 G2 M5 (*sup. lin.*) यथानीके (for रथा°). — (L. 4) M1.2 आश्रित्य (for आस्थाय). — M2 om. line 6. — (L. 7) M1-3 गाश्चैवाशु निव°. — (L. 8) M1.2 निवर्तंति. — (L. 13) M2.3 विशिखैः (for निशितैः). T G2 द्रोणं प्रथमतः क्रमात् (for the posterior half). ]

T G2 cont.:

872* द्रोणं कृपं च भीष्मं च पृषत्कैरभ्यवादयत् ।

3 [a]) T G2 सोपि (for ततस्). B1 Dn D11.12 तु; B4 ते; D9 तं (for तत्). D6 ततः सर्वं समा°. — T1 ins. after 3[ab]: G1.3, after 4:

873* द्रोणः ।
न कश्चिद्योद्धुमिच्छेत न च गुप्तं स्वजीवितम् ।
अयं वीरश्च शूरश्च दुर्धर्षश्चैव संयुगे ।

[ (L. 1) G1.3 सु° (for स्व°). — (L. 2) G1.3 अयं रथिवरः शूरः. ]

In G1.3, 873* is followed by line 4 of 874* (cf. v. l. 4), while the remaining three lines thereof follow stanza 3.

4 Before 4, N ins. द्रोण उ°. — After द्रोण उ°, D6 (marg.) ins. 686* (v. l. प्रमाथी for किरीटी); cf. also 4. 41. 19, and stanza 17 below. — [b]) D3 संप्रकाशयेत्; S प्रतिदृश्यते (T2 G1 परिदृश्यते). — [c]) B (except B2) D (except Dn1 D4.10) Ca घोरः (for घोषः). B4 सनिनदो; Dn1 स रथजो; D1.3 त्वनिलजो; D2.4 Cap सजलजो; D5.7.9 जलदवत्; Ca सजलदो (as in text). S मेघः सविद्युत्स्तनितो. — [d]) K2 B1 Dn D4.11.12 रौरवीति; Cc as in text. D1-3 स (for च). — S ins. after 4 (G1.3, after 3):

874* अवस्थाय रथं याति गाण्डीवं विक्षिपन्धनुः ।
अश्वानां स्तनतां शब्दो वहतां पाकशासनिम् ।
रथस्याम्बुधरस्येव श्रूयते भृशदारुणः ।
दारयन्निव तेजस्वी वसुधां वासवात्मजः ।

[ G1.3 ins. line 4 after 873*. ]

On the other hand, after 4, G1.3 ins. 873*, while D3 (marg.) ins.:

875* एष उदार आयाति रथे च रथिनां वरः ।

5 [a]) B4 तिष्ठत्येष (for एष तिष्ठन्). Ś1 K1 B Dn D1.4-7.9.11.12 G1 M1-3 रथश्रेष्ठे; D3 नरश्रेष्ठः; D8 T G2.3 रथिश्रेष्ठः. — [b]) Ś1 रथी रथवरं प्रणुत्; K2 D8 रथे रथवरप्रभुः; B1.3.5 D6 रथी रथ°; B2.4 (corrupt) रथी रथवरप्रभुत (B4 °भूत्); Dn D3.11.12 रथे (Dn °थी) च रथिनां वरः; D1.2.10 रथे पररथ(D2 °थं)प्रणुत्; D5 रश्मी रथ°; D5m.7.9 रथे रथ(D7 °थि)वरोत्तमः; T1 G2 M3-5 रथे रथशतप्र°; G1 रथे रथवरः प्र°; G3 रथे रथवरं प्र°; M1.2 युद्धे रथशतप्रणुत्. Ca cites रथवरप्रणुत्. — After 5[ab], S (which om. 5[cd]) ins.:

876* एष दृष्ट्वा रथानीकमस्माकमरिमर्दनः ।
ह्रीमान्वदान्यो धृतिमान्सत्करोति च पाण्डवः ।

— [c]) K1 D10 तत्कर्षति; D7.9 प्रकर्षति. — [d]) D8 गांजीवम्.

6 [ab]) B1.3 Dn D7.9.11.12 च; Cv हि (as in text). B5 D7 (m as in text) प्रहितौ (for सहि°). S इमौ बाणावनुप्राप्तौ पादयोः प्रत्युपस्थितौ. — After 6[ab], S ins.:

877* बन्धुराग्रौ निखातौ मे चित्रपुङ्खावजिह्मगौ ।

[ G1 बंधुराग्रे; M1.3 रथस्याग्रे. ]

— [c]) K अपरौ चास्य विक्रांतौ; B1.3.5 D1.5.6 °रौ च व्यति°; S इमौ चाप्यपरौ बाणौ. — [d]) S अभितः (M1.3 सुस्पर्शौ) कर्णमूलयोः. — After 6, S ins.:

878* संस्पृशन्तावतिक्रान्तौ पृष्ट्वेवानामयं भृशम् ।

S cont.: B D (except D1.2.4.8-10; D7 marg. *sec. m.*) ins. after 7:

879* चिरदृष्टोऽयमस्माभिः प्रज्ञावान्बान्धवप्रियः ।
अतीव ज्वलितो लक्ष्म्या पाण्डुपुत्रो धनंजयः ।

[ (L. 1) S धर्मज्ञो (for प्रज्ञावान्). — (L. 2) S ज्वलते (for ज्वलितो), and °पुत्रः प्रतापवान्. ]

7 [a]) B1.3.4 D5.6.10 निर्वर्त्य (for निरुष्य). K2 स निरुष्य; D3 तं निरुष्य (for निरुष्य हि). B4 S च (for हि). — [b]) S कृत्वा कर्म सु(G1 M1.2 च)दुष्करं. — [d]) D5m.7.9 कुशलं (for श्रोत्रे च). S पूजयन्मामरिंदमः. — After 7, D10 ins.:

880* कुशलं परिपृष्ट्वा च गतास्ते कङ्कवाससः ।;

while B D (except D1.2.4.8-10; D7 marg. *sec. m.*)



इषुपाते च सेनाया हयान्संयच्छ सारथे ।
यावत्समीक्षे सैन्येऽस्मिन्क्वासौ कुरुकुलाधमः ॥ ४. ४८. ८.

अभिवादयते पार्थः श्रोत्रे च परिपृच्छति ॥ ७
अर्जुन उवाच ।
इषुपाते च सेनाया हयान्संयच्छ सारथे ।
यावत्समीक्षे सैन्येऽस्मिन्क्वासौ कुरुकुलाधमः ॥ ८
सर्वानन्याननादृत्य दृष्ट्वा तमतिमानिनम् ।
तस्य मूर्ध्नि पतिष्यामि तत एते पराजिताः ॥ ९
एष व्यवस्थितो द्रोणो द्रौणिश्च तदनन्तरम् ।
भीष्मः कृपश्च कर्णश्च महेष्वासा व्यवस्थिताः ॥ १०
राजानं नात्र पश्यामि गाः समादाय गच्छति ।
दक्षिणं मार्गमास्थाय शङ्के जीवपरायणः ॥ ११
उत्सृज्यैतद्रथानीकं गच्छ यत्र सुयोधनः ।
तत्रैव योत्स्ये वैराटे नास्ति युद्धं निरामिषम् । C. 4. 1645 B. 4. 53. 14

ins. 879* (cf. v. l. 6). Finally, S ins. after 7:

881* अमर्षेणाभिसंपूर्णो दुःखेन प्रतिबोधितः ।
अद्येमां भारतीं सेनामेको नाशयते ध्रुवम् ।
अधिकं दश उष्य वत्सराणां
स्वजनेनाविदितस्त्रयोदशं च ।
ज्वलते रथमास्थितः किरीटी [5]
तम इव रात्रिजमभ्युदस्य सूर्यः ।

[ (L. 1) M °र्षेण हि सं°. — (L. 5) M1 ज्वलति हि; M2.3 ज्वलयति (for ज्वलते). ]

S cont.: K2 ins. after 7: B D (except D1.2.4.8–10; D7 marg. *sec. m.*) ins. after 879* (cf. v. l. 6):

882* रथी शरी चारुतली निषङ्गी
शङ्खी पताकी कवची किरीटी ।
खड्गी च धन्वी च विभाति पार्थः
शिखी वृतः स्रग्भिरिवाज्यसिक्तः ।

[ (L. 1) K2 चारुकुली; D8 चारुतूणी; T M चारुमाली; G चारुमहा°. — (L. 2) K2 B4 D3.7 शिखी (for शङ्खी). — (L. 3) K2 सुखड्गधारी च विभाति पार्थः; D6 खड्गी च धन्वी चरितानि पा°; S खड्गी च धन्वी च विराजते यथा (G1.3 °ते यः). — (L. 4) K2 शिखी घृतेनाग्निरिवावसिक्तः; B3–5 शिखी घृतस्रुग्भिरिवाज्यसिक्तः (B4 °भिषिक्तः; B5 °ज्यषिक्तः); D3.6 शिखी घृ(D3 घृ)तः स्रुग्भिरिवावसि(D3 स)क्तः; D7 शिखी घृताहुद्भिरिवाभिवृद्धः; S शिखीव यज्ञेषु घृतावसिक्तः (G1 घृते निषक्तः; G3 घृतेन सिक्तः). ]

Thereafter S ins. a colophon (*Adhy. name:* T G2 द्रोणाभिवादनं (T2 °दिवंदनं); M2.3 अभिवाद्यशरविसर्गः. — *Adhy. no.:* T G M1 53; M2–5 52).

S cont.:

883* वैशंपायनः ।
तमदूरमुपायान्तं दृष्ट्वा पाण्डवमर्जुनम् ।
नारयः प्रेक्षितुं शेकुस्तपन्तं यथा रविम् ।
स तं दृष्ट्वा रथानीकं पार्थः सारथिमब्रवीत् ।

[ (L. 2) T प्रतपंतं; G1.3 तपंतं हि (for तपस्यन्तं). — (L. 3) T1 G1.3 M1.2.4 तद् (for तं). ]

8 S om. अर्जुन उ°. — *a*) Ś1 D7.9 G इषुपातेन; K2 D10 °पातेषु; T1 M (hypermetric!) °पातमात्रे; T2 °पातेत्र. B1.2 Dn1 D4 सेनायां. — *b*) S स्थापयाश्वानरिंदम. — *c*) D7.9 द्रक्ष्यामि; D8 ससैन्यम् (for समीक्षे). D6 सैन्यस्य; D7.9 सैन्यानि; D8 ईक्षेस्मिन्; S व्यूहेस्मिन्. D4 यावत्सैन्ये समत्स्येस्मिन्. — *d*) S मम शत्रुं सुयोधनं. — After 8, S ins.:

884* रत्नवैडूर्यविकृतं मणिप्रवरभूषितम् ।
परिजानाम्यहं तस्य ध्वजं दूरात्समुच्छ्रितम् ।
यद्येनमिह पश्यामि दुर्बुद्धिमतिमानिनम् ।
यमाय प्रेषयिष्यामि सहायोऽस्य यदीश्वरः ।

9 M2 om. 9*ab*. — *a*) B2.5 सैन्यान्; Dn D5.11.12 एतान् (for अन्यान्). D7.9 सर्वसैन्याननना°. — *b*) B4 D2 अभिमा° (for अतिमा°). — For 9*c*–12*f*, S (which om. 13–14) subst. 885* (cf. v. l. 12).

10 For S cf. v. l. 12. D8 om. 10. — *a*) Ś1 व्यवसितो; D1.2.8 चावस्थितो. — *d*) B1.2 Dn D11.12 समागताः (for व्यव°).

11 For S cf. v. l. 12. — *c*) Dn2 D11.12 पार्श्वम्; D6 पथम् (for मार्गम्). B5 आश्रित्य (for आस्था°). — *d*) D4 जीवितलिप्सया.

12 *a*) Ś1 K B (except B4) Dn D1–3.7–9.11.12 उत्सृजैतद्; D10 तस्य ह्येतद्. — *d*) Ś1 अनामिषं; D8 निरामयं; Ca.c.r.v as in text. — *e*) B4 हत्वा (for जित्वा). B1–3 D5.6 तं निहत्य निवर्तिष्ये; Dn2 D11.12 तं च जित्वा निव°; D1–4.7.8.10 तं हि जित्वा (D2 हि गत्वा; D7 विजित्वा) निवर्तिष्ये (D2 °र्तेथाः); D5m तं विजित्य निव°. — *f*) D1.3 वै पुरं; D6 सर्वशः. — For 9*c*–12*f*, S (which om. 13–14) subst.:

885*
(9*c*) सिंहः क्षुद्रमृगस्येव पतिष्ये तस्य मूर्धनि ।
हनिष्यामि तमेवाशु शरैर्गाण्डीवनिःसृतैः ।
(9*d*) तस्मिन्हते भविष्यन्ति सर्वे एव पराजिताः ।
शरैः समर्पयिष्यामि धार्तराष्ट्रं ससौबलम् ।
असभ्यानां च वक्तारं कुरूणां किल किल्बिषम् । [5]
(11*a*,12*d*) राजानं नेह पश्यामि निरामिषमिदं बलम् ।

## ४९

C. 4. 1660
B. 4. 54 1
K. 4. 55. 45

वैशंपायन उवाच ।

स शत्रुसेनां तरसा प्रणुद्य
गास्ता विजित्याथ धनुर्धराग्र्यः ।
दुर्योधनायाभिमुखं प्रयातो
भूयोऽर्जुनः प्रियमाजौ चिकीर्षन् ॥ १
गोषु प्रयातासु जवेन मत्स्या-
न्किरीटिनं कृतकार्यं च मत्वा ।
दुर्योधनायाभिमुखं प्रयान्तं

thereafter ins. 895*. — After 22, Ś1 ins.:

896* शब्देन महता राजन्संत्रस्तं गोधनं महत् ।;

while S ins.:

897* वियद्गतानां देवानां मानुषाणां रवेण च ।

23 $^{a}$) B2 D8 G1.3 पुच्छं (for पुच्छान्). S विधून्वाना. D7 ऊर्ध्वं पुच्छानि धुन्वाना. — $^{b}$) Ś1 रेफमाणाः; K मेहमानाः; B3 वेष्टयमाना; B4 वाहसाहमानाः (sic); Dn1 D5 चेष्टमानाः; D6 धावमानाः; S हेष(T1 G2 हर्ष-; T2 हेष)माणाः; Cr रेटमानाः; Cn.s.v.rp (Arj., Dev.) रेभ° (as in text). ❀ Ca: रेभमाणाः शब्दं कुर्वाणाः । पाठान्तरमवद्यम् । ❀ D8 मुहुर्मुहुः (for समन्ततः). — $^{cd}$) D3.8.10 °निवर्तत; Cv as in text. D4 दक्षिणां दिशमाश्रिताः (for $^{d}$). S गावः सवत्साः संत्रस्ता निवृत्ता दक्षिणां दिशं. — After 23, S ins. a passage given in App. I (No. 43).

Colophon om. in S; but cf. v. l. 4. 49. 2. — *Sub-parvan:* Ś1 K1 गोग्रह; B1–4 Dn D1.3.6–12 उत्तरगोग्रह. — *Adhy. name:* B2.4.5 D1.3–5.8–10 गोनिवर्तनं. — *Adhy. no.* (figures, words or both): K1 D3 48; B4 51; D6 50; D7 45; D9 42.

## 49

1 S om. the ref. — $^{a}$) S तां (G1 तत्) (for स). B2 तत्र; D7.9 तस्य (for शत्रु-). G2 सहसा (for तरसा). M1 विजित्य (for प्रणुद्य). — $^{b}$) S गाश्चैव (T2 G1.3 गाश्चापि) जित्वा धनुषा वरेण (T2 G1.3 M2 धनुषो रवेण). — S om. $1^{cd}$ and reads $2^{cd}$ in its place. — $^{c}$) B2 Dn1 D2.4–8.10–12 °मुखः (for °मुखं). — $^{d}$) D5m.7.9 पार्थस्तदा (for भूयोऽर्जुनः). D8 Cv मनःप्रियम् (for ऽर्जुनः प्रियम्). K1 जयम् (for प्रियम्). B1 Dn D11.12 भूयो रणं सोभिचिकीर्षमाणः; B2.4.5 D5.6 मत्स्यस्य राज्ञः प्रियमा(B2 राज्ञाश्च प्रियं)चिकीर्षुः; B3 भूयश्चिकीर्षुः*****; D1–4 भूयो मनःप्रीतिमसौ विकर्षन्; D7m.10 भूयो रणेसौ जय(D10 °णे सौष्ठव)माचिकीर्षन्. Cv cites आजौ.

2 $^{a}$) D7.9 नष्टप्रयातांस्तु (for गोषु प्रयातासु). M2 बलेन (for जवेन). D7.9 योधान्; S (except M4.5) मात्स्याः (for मत्स्यान्). — $^{b}$) B2.4 D5 कार्यकृतं; S प्रीतियुतं (for कृतकार्यं). S दृष्ट्वा (for मत्वा). — After $2^{ab}$, S ins.:

898* पशून्समादाय ततो निवृत्ता
गोपागणाः स्वान्प्रययुश्च राष्ट्रान् ।

[ (L. 2) T G2 समस्ताः (for गणाः स्वान्). ]

Thereafter S ins. a colophon (*adhy. no.:* G1.3 M1.5 54; M2.4 53), and cont.:

899* वैशंपायनः ।
ततस्त्रीणि सहस्राणि रथानां च धनुष्मताम् ।
घोराणि कुरुवीराणां पर्यकीर्यन्त भारत ।
कर्णो रथसहस्रेण प्रत्यतिष्ठद्धनंजयम् ।
भीष्मः शांतनवो धीमान्सहस्रेण पुरस्कृतः ।
तथा रथसहस्रेण भ्रातृभिः परिवारितः ।
पश्चाद्दुर्योधनोऽतिष्ठद्रस्तावापी श्रिया ज्वलन् ।
अतिष्ठन्नवकाशेषु पादाताः सह वाजिभिः ।
भीमरूपाश्च मातङ्गास्तोमराङ्कुशचोदिताः ।
तानि दृष्ट्वा ह्यनीकानि विततानि महात्मनाम् ।
वैराटिमुत्तरं तं तु प्रत्यभाषत पाण्डवः ।

[ (L. 1) M1–3 ततोस्त्राणि; M4.5 ततो रथ- (for ततस्त्रीणि). M1.2.5 शतानां; M3 घोराणां; M4 जनानां (*sup. lin.* वाजीनां) (for रथानां). — G1 ins. after line 2: G3, after line 7:

900* वर्मिता वाजिनोऽतिष्ठन्सहारूढैः प्रहारिभिः ।

— (L. 3) M शत° (for रथ°). — (L. 7) M °काशे तु (for °काशेषु). — After line 7, G3 ins. 900*. — After line 8, T1 ins.:

901* तत्र तत्रावकाशेषु पादाताश्च सहस्रशः ।

— (L. 10) T G2 दृष्ट्वा; G3 तत्र (for तं तु). ]

Then follows (the S version of) 4. 50. 4–23 (ending with a colophon), which is given in extenso at the end of the foot-notes of adhy. 50, which in its turn is followed by a passage given in App. I (No. 46). — S reads $2^{cd}$ in the place of $1^{cd}$ (cf. v. l. 1). — $^{c}$) D5.7.9 दुर्योधनस्या°. Ś1 K2 B (except B4) Dn D2.3.8.11.12 प्रयातं (for प्रयान्तं). — $^{d}$) S °भ्य

कुरुप्रवीराः सहसाभिपेतुः ॥ २
तेषामनीकानि बहूनि गाढं
व्यूढानि दृष्ट्वा बहुलध्वजानि ।
मत्स्यस्य पुत्रं द्विषतां निहन्ता
वैराटिमामन्त्र्य ततोऽभ्युवाच ॥ ३
एतेन तूर्णं प्रतिपादयेमा-
ञ्श्वेतान्हयान्काञ्चनरश्मियोक्त्रान् ।
जवेन सर्वेण कुरु प्रयत्न-
मासादयैतद्रथसिंहवृन्दम् ॥ ४
गजो गजेनेव मया दुरात्मा
यो योद्धुमाकाङ्क्षति सूतपुत्रः ।
तमेव मां प्रापय राजपुत्र
दुर्योधनापाश्रयजातदर्पम् ॥ ५
स तैर्हयैर्वातजवैर्बृहद्भिः
पुत्रो विराटस्य सुवर्णकक्ष्यैः ।
विध्वंसयंस्तद्रथिनामनीकं C. 4. 1665 B. 4. 54. 6 K. 4. 53. 10

---

($G_1$ $M_4$ °भि)गच्छन् (for °भिपेतुः). $D_{5.7.9}$ वैराटिरित्यर्जुनमाह हृष्टः. — After 2, $D_{5.7.9}$ ins.:

902* उत्तर उवाच ।
पुरं प्रतिनिवर्तस्व पार्थ प्रहरतां वर ।
गावस्त्वया जिताश्चेमाः किं युद्धेनेति वै वृथा ।
संदिग्धेऽर्थे न युध्येत पुष्टे वापि बले सति ।
त्वयैकेन बहूनां हि विग्रहेण तु किं वृथा ।
श्रुत्वैतदर्जुनो वाक्यं वैराटेर्भीतवत्तदा ।
प्रहस्य प्राह तं भूयो मा भैः पश्येह कौतुकम् ।
बहूनि दृष्टपूर्वाणि प्राग्युद्धान्युत्तर त्वया ।
पश्येममेवं संग्रामं बहूनामेककेन यत् ।
ततो दुर्योधनं यान्तमर्जुनं तरसा तदा ।
रथाग्र्याः कौरवेन्द्रस्य निपेतुः सहसाखिलाः ।

Thereafter $D_{5.7.9}$ *repeat* $2^{cd}$!

3 $^{a}$) $M_2$ निर्भिद्य सैन्यानि (for तेषामनीकानि). S (except $T_1$) किरीटमाली (for बहूनि गाढं). $Ś_1$ $K_1$ पार्थो (for गाढं). — $^{b}$) $K_1$ तानि (for दृष्ट्वा). S (except $T_1$) विपुल° (for बहुल°). — $^{c}$) S (except $T_1$) गांडीवधन्वा (for मत्स्यस्य पुत्रं). — After 3, S ins.:

903* अर्जुनः ।
सुसंगृहीतैरथ रश्मिभिस्त्वं
हयान्नियम्य प्रसमीक्ष्य यत्तः ।
संप्रेषयाशु प्रतिवीरमेनं
वैकर्तनं योधयितुं वृणोमि ।
यां हस्तिकक्ष्यां बहुधा विचित्रां
स्तम्भे रथे पश्यसि दर्शनीयाम् ।
विवर्तमानं ज्वलनप्रकाशं
वैकर्तनस्यैतदनीकमग्र्यम् ।

[ (L. 6) $G_1$ तां वीर पश्यस्यसि; $G_3$ तां द्वैरथे पश्यसि (for स्तम्भे रथे पश्यसि). — (L. 7) $G_3$ $M_{1-3}$ विवर्ध° (for विवर्त°). $T_2$ $G_{1.2}$ °मानां and °प्रकाशां. ]

4 $^{a}$) $G_{1.3}$ एतत्तु (for एतेन). S शीघ्रं (for तूर्णं). B (except $B_5$) $D_{5.6}$ $M_{1.2}$ प्रतिपादयैतान्; $D_{1.2}$ °पाद्यमानः; $D_8$ °पादयस्व. — $^{b}$) $Ś_1$ K $B_4$ $D_{4.6.9}$ °रश्मियुक्तान्; S °जाल($G_2$ °वाजि)कक्ष्यान्; Ca (cf. Cs) °रश्मियोक्त्रान् (as in text). — $^{c}$) $D_6$ गाढेन (for सर्वेण). S सर्वं जवं तत्र विदर्शय त्वं ($T_1$ $G_2$ विदर्शयिष्ये; $T_2$ °यिष्यन्). — $^{d}$) $B_{1.2.5}$ $Dn_2$ $D_{8.11.12}$ आसादयेहं; $B_3$ $D_{1.3.7.9}$ °दयैनं; $B_4$ $D_{5.6.10}$ Cv °दयेयं; $Dn_1$ °दयेमं; $D_{2.4}$ आसाद्य एनं; $G_2$ ह्यासाद° (for आसादयैतद्). K रथवृंदसिंहं; $B_{1.3}$ Dn $D_{1-4.5m.7-12}$ कुरुसिंहवृंदं; S रथवीरवृंदं.

5 $^{a}$) $D_{7.9}$ गजोपमेनेव. $D_{1.3}$ यथा (for मया). $B_{2.3}$ $D_5$ महात्मा ($D_5$m as in text) (for दुरात्मा). $D_8$ महादुरासदो; S हि योद्धुकामो (for मया दुरात्मा). — $^{b}$) $B_{1.5}$ Dn $D_{10-12}$ योद्धुं समा°; T $G_2$ मया सहा°; $G_{1.3}$ $M_4$ मया सदा°; $M_{1-3}$ मया समा°; $M_5$ सदा मया° (for यो योद्धुमा°). $D_5$ आशंसति (m आकाङ्क्षति as in text). — After $5^{ab}$, $M_1$ ins.:

904* तदद्य युद्धं कुरुवीरमध्ये
करोमि तं याहि तथाप्रवृत्तः ।

— M om. $5^{c}$. — $^{d}$) T °धनोपाश्रय°; $G_1$ °धनं वा भृश°. — After 5, S ($M_4$ om. the posterior half) ins.:

905* तं पातयिष्यामि रथस्य मध्ये
सहस्रनेत्रोऽशनिनेव वृत्रम् ।

[ After the prior half, $M_{1.2}$ ins.:

906* गाण्डीवमुक्तैरिषुभिः सिताग्रैः;

while $M_5$ ins.:

907* शरैः सुतीक्ष्णैर्हृदयं विभिद्य. ]

6 $M_4$ om. 6. Before 6, S ($M_4$ om.) ins. वैशं°. — $^{a}$) K सितैर्; B (except $B_4$) $D_{1-3.5.6.8.10}$ $M_2$ ततो; $G_1$ स वै (for स तैर्). T G $M_5$ जात° (for वात°). — $^{b}$) $Ś_1$ सुतो (for पुत्रो). $B_{1.3}$ S ($M_4$ om.) हिरण्य°; Cc.r सुवर्ण° (as in text). — $^{c}$) B Dn $D_{1.3.6.9}$ व्यध्वंसयत्तद्; $D_2$ $G_1$ विध्वंसयंतं; $D_{4.11.12}$ विध्वंसयत्तद्;

C. 4 1665 B. 4 54 6 K. 4 58. 10 ततोऽवहत्पाण्डवमाजिमध्ये ॥ ६

तं चित्रसेनो विशिखैर्विपाठैः
संग्रामजिच्छत्रुसहो जयश्च ।
प्रत्युद्ययुर्भारतमापतन्तं
महारथाः कर्णमभीप्समानाः ॥ ७

ततः स तेषां पुरुषप्रवीरः
शरासनार्चिः शरवेगतापः ।
व्रातान्रथानामदहत्समन्यु-
र्वनं यथाग्निः कुरुपुंगवानाम् ॥ ८

तस्मिंस्तु युद्धे तुमुले प्रवृत्ते
पार्थं विकर्णोऽतिरथं रथेन ।
विपाठवर्षेण कुरुप्रवीरो
भीमेन भीमानुजमाससाद ॥ ९

ततो विकर्णस्य धनुर्विकृष्य
जाम्बूनदाग्र्योपचितं दृढज्यम् ।
अपातयद्ध्वजमस्य प्रमथ्य
छिन्नध्वजः सोऽप्यपयाज्जवेन ॥ १०

तं शात्रवाणां गणबाधितारं
कर्माणि कुर्वाणममानुषाणि ।
शत्रुंतपः कोपममृष्यमाणः
समर्पयत्कूर्मनखेन पार्थम् ॥ ११

स तेन राज्ञातिरथेन विद्धो

---

$D_{10}$ व्यध्वंसयं तद्. — $^{d}$) $K_1$ नयं; $K_2$ वहन् (for ऽवहत्). $K_1$ $Dn_2$ $D_{11.12}$ आजिमध्यं. — S (which om. 7–8) ins. after 6 ($M_4$, which om. 6 also, ins. after line 1 of 905*):

908* तमापतन्तं परमेण तेजसा
समीक्ष्य वैकर्तनमभ्यरक्षन् ।
अभ्यद्रवंस्ते रथवीरवृन्दा
व्याघ्रेण चाक्रान्तमिवर्षभं रणे ।
चित्राङ्गदश्चित्ररथश्च वीरः
संग्रामजिद्दुःसहचित्रसेनौ ।
विविंशतिर्दुर्जयदुर्मुखौ च
विकर्णदुःशासनसौबलाश्च ।
शोणो निषेधश्च तमन्वयुस्ते
वैकर्तनं शीघ्रतरं युवानः ।
पुत्रा ययुस्ते सहसोदराश्च
वैकर्तनं पार्थगतं समीक्ष्य ।
प्रगृह्य चापानि महाबला रणे
धनंजयं पर्यकिरञ्छरौघैः ।
तेषां दृढज्याकृतनैकतन्त्रीं
प्रासोपवीणां शरसंघकोणाम् ।
कराग्रयन्त्रां स्थिरचापदण्डां
वीणामुपावादयदाशु पार्थः ।

[ (L. 9) $T_1$ $G_{1.3}$ $M_5$ शोणाश्वनामा च ($M_5$ °वाहस्तु). $M_{1-4}$ शोणा निषेधश्च तमन्वयाच्च. — (L. 14) $T_1$ $G_{1.3}$ $M_{4.5}$ शरार्चिभिः (for शरौघैः). — (L. 15) $T_1$ $G_{1.3}$ $M_{4.5}$ धनुर्ज्या° (for दृढज्या°). — (L. 17) $M_{2.3}$ शराग्र° (for कराग्र°). $T_2$ $M_1$ °यंत्रस्थित° (for °यन्त्रां स्थिर°). $M_{2-5}$ °चारु° (for °चाप°). ]

7 S om. 7–8; but cf. 908* above. — $^{a}$) $Ś_1$ $K_2$ $D_4$ निशितैर् (for विशिखैर्). — $^{b}$) $Dn_2$ $D_{11.12}$ शत्रुजयौ सहश्च. — $^{c}$) $B_4$ $D_6$ भ्रातरम् (for भारतम्). — $^{d}$) $Ś_1$ K Cv °रथं (for °रथाः). $Ś_1$ K $B_2$ $Dn_2$ $D_{6.8.11.12}$ Cv अभीप्समानं; Cn.s °मानाः (as in text).

8 S om. 8 (cf. v. l. 7). — $^{a}$) $B_2$ $D_6$ च कुरु° (for पुरुष°). — $^{c}$) $K_2$ $B_{2.5}$ $Dn_1$ $D_{6.9}$ व्रातं; Cn.s व्रातान् (as in text). — $^{d}$) $B_{3-5}$ $D_{1-4.8}$ °पुंगवाग्निः; $D_6$ °पुंगवाग्र्यः.

9 $^{a}$) $D_4$ m. $_7$ प्रवृद्धे (for °त्ते). — $^{c}$) $D_{1.2}$ °वेगेन (for °वर्षेण). $B_4$ $D_6$ °प्रवीरं (for °प्रवीरो). T G वरूथिना केतुमता नृसिंहो.

10 $^{a}$) $D_2$ विदन्य; $D_5$ विकृत्य; $D_{7.8}$ विहत्य; $D_7$ m S निकृत्य; $D_9$ विहृत्य; Cs विकृष्य (as in text). — $^{b}$) $Ś_1$ $K_1$ °नदाड्यापचितं; S °नदेनोप($T_2$ °नेव)हितं. $D_{7\ 9}$ दृढांगं; $D_8$ दृढं च (for दृढज्यम्). — $^{c}$) $T_1$ $G_{2.3}$ $M_{2.3}$ व्यपात°; $T_2$ $M_{1.5}$ न्यपात°; $G_1$ $M_4$ निपात° (for अपात°). $K_2$ $D_{1-4.8.10}$ केतुमपि प्रमथ्य; $B_1$ Dn $D_{11.12}$ तं ध्वजमस्य मथ्य; $B_{2.3}$ $D_6$ च ($B_2$ स) ध्वजमाप्रमथ्य; $B_4$ च ध्वजमस्य मुख्यं; $B_5$ Cn तं ध्वजमस्य प्रमथ्य; S तद् ($T_1$ $G_{1.2}$ तं) ध्वजमस्य विध्वा (for ध्वजमस्य प्रमथ्य). — $^{d}$) $B_4$ अप्यपतत्; $D_4$ व्यपयात्; $D_6$ अभ्यपयात् (for अप्यपयात्). Cs cites अपयात्.

11 $^{a}$) $D_7$ पार्थिवाणां (m शात्र° as in text). $D_7$ युधि (for गण-). $G_1$ °शासि° (for °बाधि°). — $^{b}$) $B_{1.4.5}$ Dn $D_{1-3.7-12}$ M (except $M_3$) कुर्वतम् (for कुर्वाणम्). — $^{c}$) $G_{1.3}$ °जयो (for °तपः). $B_{1.3.5}$ Dn $D_{1.3.4.8.11.12}$ पार्थम्; S वैरम् (for कोपम्). — $^{d}$) $Ś_1$ K B Dn $D_{1.5.6.8.11.12}$ समा($Ś_1$ $B_4$ $D_8$ °म)र्दयत्; $D_{2.4.7.9}$ समार्पयत्;

विगाहमानो ध्वजिनीं कुरूणाम् ।
शत्रुंतपं पञ्चभिराशु विद्ध्वा
ततोऽस्य सूतं दशभिर्जघान ॥ १२
ततः स विद्धो भरतर्षभेण
बाणेन गात्रावरणातिगेन ।
गतासुराजौ निपपात भूमौ
नगो नगाग्रादिव वातरुग्णः ॥ १३
रथर्षभास्ते तु रथर्षभेण
वीरा रणे वीरतरेण भग्नाः ।
चकम्पिरे वातवशेन काले
प्रकम्पितानीव महावनानि ॥ १४
हतास्तु पार्थेन नरप्रवीरा
भूमौ युवानः सुषुपुः सुवेषाः ।
वसुप्रदा वासवतुल्यवीर्याः
पराजिता वासवजेन संख्ये ।
सुवर्णकार्ष्णायसवर्मनद्धा
नागा यथा हैमवताः प्रवृद्धाः ॥ १५
तथा स शत्रून्समरे विनिघ्न-
न्गाण्डीवधन्वा पुरुषप्रवीरः ।
चचार संख्ये प्रदिशो दिशश्च
दहन्निवाग्निर्वनमातपान्ते ॥ १६
प्रकीर्णपर्णानि यथा वसन्ते
विशातयित्वात्यनिलो नुदन्खे ।
तथा सपत्नान्विकिरन्किरीटी
चचार संख्येऽतिरथो रथेन ॥ १७
शोणाश्ववाहस्य हयान्निहत्य
वैकर्तनभ्रातुरदीनसत्त्वः ।
एकेन संग्रामजितः शरेण
शिरो जहाराथ किरीटमाली ॥ १८
तस्मिन्हते भ्रातरि सूतपुत्रो　　C. 4. 1678 B. 4 54. 19 K. 4. 58. 25

D10 समर्चयत्. Ś1 K B1.5 Dn D11.12 शरवर्षेण; Ca.v कूर्मनखेन (as in text). Cc cites कूर्मनखैः.

12 a) D7.9 राज्ञः (for राज्ञा). D6 अधिरथेन; D7.9 तनयेन; D8 अतिजवेन; M5 अभिहतेन (for अतिरथेन). — b) S परेषां (for कुरूणाम्). — c) D8 शत्रुं ततः; G1.3 शत्रुंजयं (for शत्रुंतपं).

13 b) D1.3 गात्राति(D3 °भि)बलातिगेन; S कायावरणाति°; Cv as in text. — c) B2.4 D5 मह्यां; S (except T1) राजन् (for भूमौ). — d) D1 नगो नगांताद्; Ca नागो न°; Cc.v नगो न° (as in text). Cs cites नगः. D7.9 वातभग्नः; T G वायु(G1 जात)रुग्णः; Ca.c as in text.

14 a) Ś1 B1.3.4 Dn D1.2.11.12 T2 नर°; M2 भरत° (for रथ°). Ś1 B1.3.4 Dn D1.11.12 T2 G2 तेन (for ते तु). Ś1 B Dn D1–3.11.12 T2 नर° (for रथ°). K रथर्षभास्ते भरतर्षभेण. — c) B2 °जवेन; B3 °रयेण; Dn1 °वर्षेण (for °वशेन). — d) D6 प्रवेपि° (for प्रकम्पि°).

15 a) B4 S च (for तु). K रथ°; D10 G1.3 M1.3.4 (*inf. lin.* रथ) कुरु°; G2 रथि° (for नर°). — b) B5 Dn D11.12 गतासवोर्व्यां; D6 भूमौ प्रधानाः (for भूमौ युवानः). — e) T2 G2 M5 °कृष्णायस°; G1.3 °कालायस° (for °कार्ष्णायस°). — f) T G हैमवते (T1 °ति); Cv as in text. D4.8 प्रसिद्धाः (for प्रवृद्धाः).

16 a) B3 D6 निजघ्ने; D10 विनिघ्ने (for विनिघ्नन्). — b) D7.9 गांजीव° (for गाण्डीव°). — c) B1.5 Dn D2.11.12 G1.3 वि° (for प्र°). — d) K आतपेन; Cs आतपान्ते (as in text).

17 Ś1 om. 17ab; K1 M4 om. (? hapl.) 17a. — a) D4 प्रकीर्य°; T1 संचीर्ण°; T2 G M1–3 सुशीर्ण°; M5 विशीर्ण°. — b) K1 B3 विशातयेत्; B2.4.5 D1.4–6.8 विशातयन्; D3 विशर्जयन्; D7 विपातयन्; D10 वियातयत् (for विशातयित्वा). K1 वायुरुपातदन्वै; B1 Dn1 पवनोंबुदांश्च; B2 वातरथो नुदन्खे; B3 D6.7 वायुरथो नु(D6 °न्नु; D7 °तु)दन्खे; B4 वायुरिवोन्नदन्खे; B5 वायुसखो नुदन्खे; Dn2 D11.12 पवनो नुदन्खे (Dn2 °दन्मुखे); D1 वात्यनिलो नुदन्वै; D2 अत्यनिलोंबुदांश्च; D3–5 वातनिलोनु(D5 °न्नु)दन्खे (D3 °न्खैः); D8 वायुरथो निदाघे; D10 वात्यनिलो नुदार्धं; M तु रजो नुदन् (M4.5 नुदः) खे (for अत्यनिलो नुदन्खे). T G निशातयित्वा तु रजो नुदन्खे (T2 तु समीरणः खे; G1 तुरगो मरुत्सुखं; G3 तु रजोंबुदः खे). Text as in K2 D9! Cr cites उन्नदन् (see above). — c) D6 स तान् (for तथा).

18 d) B3 D5.6 T2 G1.2 आशु; D3 अस्य (for अथ).

19 b) Ś1 वीर्यमथादधानः; D6 चाथमुपाददानः; D8 वीर्यमथाजहार; S वीर्यमदप्रतापी. — c) D1–5.7.9.10 प्रोद्यस्य; G1.3 निगृह्य; Cv प्रगृह्य (as in text). Dn1 दंति°

C. 4. 1678 B. 4. 54. 19 K. 4. 58. 25

वैकर्तनो वीर्यमथाददानः ।
प्रगृह्य दन्ताविव नागराजो
महर्षभं व्याघ्र इवाभ्यधावत् ॥ १९
स पाण्डवं द्वादशभिः पृषत्कै-
र्वैकर्तनः शीघ्रमुपाजघान ।
विव्याध गात्रेषु हयांश्च सर्वा-
न्विराटपुत्रं च शरैर्निजघ्ने ॥ २०
स हस्तिनेवाभिहतो गजेन्द्रः
प्रगृह्य भल्लान्निशितान्निषङ्गात् ।
आकर्णपूर्णं च धनुर्विकृष्य
विव्याध बाणैरथ सूतपुत्रम् ॥ २१
अथास्य बाहूरुशिरोललाटं
ग्रीवां रथाङ्गानि परावमर्दी ।
स्थितस्य बाणैर्युधि निर्बिभेद
गाण्डीवमुक्तैरशनिप्रकाशैः ॥ २२
स पार्थमुक्तैर्विशिखैः प्रणुन्नो
गजो गजेनेव जितस्तरस्वी ।
विहाय संग्राममशिरः प्रयातो
वैकर्तनः पाण्डवबाणतप्तः ॥ २३

इति श्रीमहाभारते विराटपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## ५०

वैशंपायन उवाच ।
अपयाते तु राधेये दुर्योधनपुरोगमाः ।
अनीकेन यथास्वेन शरैरार्छन्त पाण्डवम् ॥ १
बहुधा तस्य सैन्यस्य व्यूढस्यापततः शरैः ।

(for नाग°). — $^{d}$) Ś1 K महर्षभो व्याघ्रं; B2.3 D5.6 महर्षभं सिंहः; D3.8.9 महर्षभं व्याघ्रं; S महाबलं सिंहं (for महर्षभं व्याघ्रः). Cv cites महर्षभं. S आजगाम (for अभ्यधावत्).

20 $^{b}$) B4 D7.8 अथाजघान; B5 Dn D1.3.11.12 अथो ज°; D2.4.9.10 इवाज° (for उपाज°). — D8 om. 20$^{cd}$. — $^{c}$) B4 आविध्य (for विव्याध). — $^{d}$) B D (D8 om.) करे (for शरैर्). Ś1 K विजघ्ने; B4 जघान; G1 प्रजघ्ने (for निजघ्ने). — After 20, all MSS. except Ś1 K D1.2.4.8 ins. a passage given in App. I (No. 44); thereafter B3 *repeats* 20. — After line 40 of this passage (No. 44), however, there is in S an insertion of 18 lines, which in turn is followed by adhy. 55.

21 D8 (which om. 20$^{cd}$) transp. 21$^{a}$ and 21$^{b}$, and om. 21$^{c}$. — $^{c}$) Ś1 K आकर्णपूरं स (Ś1 च); T1 °पूर्णं तु; T2 G2 M3-5 °पूर्णेन; G1.3 °पूर्णं स; M1.2 °पूर्णैश्च. D4 °पूर्णं धनु संनिकृष्य. — $^{d}$) D8 जघान (for विव्याध). B1.5 Dn D11.12 गात्रेष्वथ (for बाणैरथ).

22 $^{a}$) S बाहू(M4 °हुं) सशिरो° (for बाहूरुशिरो°). — $^{b}$) B1.2.5 Dn D5(m शिरां°).6.11.12 वरांगानि (for रथाङ्गानि). Cs cites वराङ्ग. B4 रथावमर्दी; Dn1 परांग°; D6 बलाव°; D10 रणाव°. S ग्रीवामुरस्कंधभुजांतरं च. — $^{c}$) B1.2.5 Dn D11.12 शितैश्च; S कर्णस्य (for स्थितस्य). S पार्थो (for बाणैर्). D1-4.8 निशितैर्बिभेद (for युधि निर्बिभेद). — $^{d}$) D9 गांजीव°. S वज्रैरिवाद्रिं भगवान् महें(T1 इवें)द्रः.

23 $^{a}$) D7.9 पार्थस्य (for स पार्थ-). Ś1 B1.2 Dn D11.12 इषुभिः (for विशिखैः). S स पार्थमुक्तानविषह्य बाणान्. — $^{b}$) B (except B1) D5-7.9.10 G1.3 हतस् (for जितस्). — $^{c}$) S °शिरोपयातो. — $^{d}$) S पार्थशराभितप्तः.

Colophon. D7 reads it in marg. — *Sub-parvan:* Ś1 K गोग्रह; B4 D1.3-6.10 उत्तरगोग्रह. — *Adhy. name:* B1.3.5 Dn D5.6.11.12 कर्णापयानं; B2 कर्णायोपयानं; B4 D4.7-10 कर्णभंगः; D1-3 वैकर्तनभंगः; T G2 कर्णपलायनं; G1 M1 कर्णपराजयः. — *Adhy. no.* (figures, words or both): K1 49; D5 48; D6 51, S 57 (M2-4 56). — *S'loka no.:* G3 76.

## 50

1 S om. 1-3; T M1.4.5 om. the ref. also. — $^{a}$) B4 अथापयाते (for अपयाते तु). — $^{c}$) D6 समासाद्य (for

अभियानीयमाज्ञाय वैराटिरिदमब्रवीत् ॥ २
आस्थाय रुचिरं जिष्णो रथं सारथिना मया ।
कतमद्यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ॥ ३
अर्जुन उवाच ।
लोहिताक्षमरिष्टं यं वैयाघ्रमनुपश्यसि ।
नीलां पताकामाश्रित्य रथे तिष्ठन्तमुत्तर ॥ ४
कृपस्यैतद्रथानीकं प्रापयस्वैतदेव माम् ।
एतस्य दर्शयिष्यामि शीघ्रास्त्रं दृढधन्विनः ॥ ५
कमण्डलुर्ध्वजे यस्य शातकुम्भमयः शुभः ।
आचार्य एष वै द्रोणः सर्वशस्त्रभृतां वरः ॥ ६
सुप्रसन्नमना वीर कुरुष्वैनं प्रदक्षिणम् ।
अत्रैव चाविरोधेन एष धर्मः सनातनः ॥ ७
यदि मे प्रथमं द्रोणः शरीरे प्रहरिष्यति ।
ततोऽस्य प्रहरिष्यामि नास्य कोपो भविष्यति ॥ ८
अस्याविदूरे तु धनुर्ध्वजाग्रे यस्य दृश्यते ।
आचार्यस्यैष पुत्रो वै अश्वत्थामा महारथः ॥ ९
सदा ममैष मान्यश्च सर्वशस्त्रभृतामपि ।
एतस्य त्वं रथं प्राप्य निवर्तेथाः पुनः पुनः ॥ १०
य एष तु रथानीके सुवर्णकवचावृतः ।
सेनाग्र्येण तृतीयेन व्यवहार्येण तिष्ठति ॥ ११ C. 4. 1746 B 4. 55. 48

यथा°). — $^{d}$) K1 B4.5 D1.2 शनैर् (for शरैर्). B4 D3 आर्दंत पांडवं; D6 पांडवमार्दयन्; D7.9 आनर्छुरर्जुनं; D8 आनर्छे पांडवं. Ca cites आर्दन्तः, Cc आर्दयन्, Cs.cp आर्छन्त.

2 S om. 2 (cf. v. l. 1). — $^{b}$) B4 D8 Cv व्यूहस्य; Cc व्यूढस्य (as in text). D1–4 शनैः; Cc शरैः (as in text). D7(m as in text).9 शरैराप(D9 °पा)तितैर्भृशं. — B Dn D5.6.11.12 (all by conflation) ins. after 2$^{ab}$ a passage given in App. I (No. 45), which S ins. after passage No. 46 of the same App. — $^{c}$) B1.3.5 D4.7 (marg. *sec. m.*).10 Cr.cp अभिज्ञानीयमाज्ञाय; B2 D6 अभ्या(D6 प्रत्या)गमनमा°; B4 Dn2 D11.12 अभिप्रायं समाज्ञात्वा (B4 °य); Dn1 D5 अभिज्ञानाय कौंतेयं. Cc cites अभिज्ञानाय, Cv अभियानीयं. — $^{d}$) D6 पार्थम् (for इदम्). — Ca cites the entire stanza (v. l. अभिज्ञानीयम् for °यानीयम्).

3 S om. 3 (cf. v. l. 1). — $^{c}$) B (except B4) D (except D6) कतमं (for कतमद्). — $^{d}$) D8 वै (for अहं).

☞ For 4–23, S subst. a passage which is given at the end of this adhy. in the foot-notes, where its points of agreement with the N version have been shown marginally, within parenthesis.

4 $^{a}$) Ś1 K2 लोहिताग्रम्; K1 °ताख्यम्; B1.4 Dn D10–12 °ताश्वम् (for °ताक्षम्). D1.2 वै (for यं). — $^{b}$) D1.2 यं व्याघ्रम्; Cr.s वैयाघ्रम् (as in text). — $^{c}$) Ś1 K सितां; D7.9 पीतां (for नीलां).

☞ D1, which is missing from 4$^{cd}$ up to the end of adhy. 51, is generally ignored here, in the critical apparatus, up to the end of the lacuna.

5 $^{a}$) D3 एव (for एतद्). B1.2.5 Dn2 D6.7.11.12 अनीकाग्र्यं; Dn1 D4.5.8.9 अनीकाग्रं (for रथानीकं). — $^{b}$) B4 D2.7.8.10 तद्; Cr एतद् (as in text). — $^{d}$) Ś1 K1 °धन्वनः; B2 °धर्मितां. D6 शीघ्रास्त्रत्वं महात्मनः. Cc cites शीघ्रास्त्रं (as in text).

6 $^{a}$) B4 Dn D2–4.7–12 (by transp.) ध्वजे कमंडलुर्यस्य. — $^{b}$) Ś1 K Dn2 D4.11.12 °कौंभ° (for °कुम्भ°). — $^{c}$) B (except B3) Dn D3.5–7.9–12 हि (for वै). — After 6, B (except B2) Dn D2–4.7–12 ins., for the first time, 10$^{ab}$ (v. l. तु for च in some MSS.), repeating it in its proper place.

7 $^{a}$) B4 D2 वीरः; D7.9 धीरः (for वीर). B1.2.5 Dn2 D11.12 सुप्रसन्नं महावीरं. Cc cites सुप्रसन्नमनाः (as in text). — $^{c}$) B1 अत्र चैवावरोहैनं; B2.5 Dn2 D11.12 Cn.s अत्रैवावावरोहैनं (B2 5 °हेयं); B3 अत्र चैवाविरोधेन; Dn1 D2–10 Cv अत्रैव चावरोहेयं (Dn1 D7 °हैनं; D10 °होयं).

8 $^{c}$) Ś1 K D6 ततोस्यै; D3 ततो ह; D8 तथैनं (for ततोऽस्य). D10 निहनिष्यामि. — $^{d}$) B (except B5) Dn D4–6.11.12 भवेदिति (D5 °त्तथा) (for भविष्यति).

9 D3 om. 9. — $^{a}$) B1.3.5 Dn D2.4.7–12 हि; B2 D5.6 च; B4 अपि (for तु). — $^{d}$) Ś1 B2 °बलः (for °रथः). D7.9 सर्वशस्त्रभृतां वरः (cf. 10$^{b}$).

10 $^{a}$) B2.5 Dn1 D5 सखा (for सदा). B1.4 Dn D4.7.9.11.12 तु (for च). — $^{b}$) D7.9 अश्वत्थामा महाबलः (cf. 9$^{d}$). — D3 reads 11$^{cd}$ before 10$^{cd}$. — $^{c}$) D2.3 च (for त्वं).

11 $^{a}$) B2–4 D2.5.7.9.10 तुरगा°; D4 कवचा° (for तु

C. 4. 1746 B. 4. 55. 49 यस्य नागो ध्वजाग्रे वै हेमकेतनसंश्रितः ।
धृतराष्ट्रात्मजः श्रीमानेष राजा सुयोधनः ॥ १२
एतस्याभिमुखं वीर रथं पररथारुजः ।
प्रापयस्वैष तेजोभिप्रमाथी युद्धदुर्मदः ॥ १३
एष द्रोणस्य शिष्याणां शीघ्रास्त्रः प्रथमो मतः ।
एतस्य दर्शयिष्यामि शीघ्रास्त्रं विपुलं शरैः ॥ १४
नागकक्ष्या तु रुचिरा ध्वजाग्रे यस्य तिष्ठति ।
एष वैकर्तनः कर्णो विदितः पूर्वमेव ते ॥ १५
एतस्य रथमास्थाय राधेयस्य दुरात्मनः ।
यत्तो भवेथाः संग्रामे स्पर्धत्येष मया सदा ॥ १६
यस्तु नीलानुसारेण पञ्चतारेण केतुना ।
हस्तावापी बृहद्धन्वा रथे तिष्ठति वीर्यवान् ॥ १७
यस्य तारार्कचित्रोऽसौ रथे ध्वजवरः स्थितः ।
यस्यैतत्पाण्डुरं छत्रं विमलं मूर्ध्नि तिष्ठति ॥ १८
महतो रथवंशस्य नानाध्वजपताकिनः ।
बलाहकाग्रे सूर्यो वा य एष प्रमुखे स्थितः ॥ १९
हैमं चन्द्रार्कसंकाशं कवचं यस्य दृश्यते ।
जातरूपशिरस्त्राणस्त्रासयन्निव मे मनः ॥ २०
एष शांतनवो भीष्मः सर्वेषां नः पितामहः ।
राजश्रियावबद्धस्तु दुर्योधनवशानुगः ॥ २१
पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् ।
एतेन युध्यमानस्य यत्तः संयच्छ मे हयान् ॥ २२
ततोऽभ्यवहदव्यग्रो वैराटिः सव्यसाचिनम् ।
यत्रातिष्ठत्कृपो राजन्योत्स्यमानो धनंजयम् ॥ २३

इति श्रीमहाभारते विराटपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

रथा°). — b) Ś1 K B2.3 सौ(Ś1 B2 सु)वर्णकवचान्वि(B3 °वृ)तः; D3 हिरण्य°. — c) Ś1 K B4 Dn1 D3.4.7.8.10 सेनाग्रेण. Cv cites अग्र्येण. Ca द्वितीयेन; Cv तृतीयेन (as in text). — d) K1 B (except B3) Dn2 D4.8.9.11.12 Ca.n.s.v ऽयावहार्येण.

12 a) K ध्वजाग्रेण; B (except B2) Dn2 D2–5.7–12 °ग्रेसौ; Dn1 °ग्रेषु. — b) K B (except B2) Dn1 D2.3.5.8.10 हे(K है)मकेतनसंवृतः; Dn2 D11 (m as in text).12 केतनेन समं धृतः; D4 °संभृतः; D4m.7.9 हिरण्यमणिभूषितः. Cc.r cite केतनं. — c) D6 °राष्ट्रसुतः (for °राष्ट्रात्मजः).

13 b) K2 B Dn D4–6.8–12 °रुजं (for °रुजः). — cd) K2 B4 राजा वै प्रमाथी; B1–3.5 D (D1 missing) राजा हि प्र° (for तेजोभिप्र°).

14 a) Dn2 D11 (m as in text).12 एको (for एष). D6 शिष्येषु (for शिष्याणां). — b) K2 B1.2.5 Dn D2.4.7–12 शीघ्रास्त्रे. K परमो (for प्रथमो). — d) D3 शीघ्रत्वं (for शीघ्रास्त्रं). Ś1 विपुलैः; D6 प्रथमं. B D (D1 missing) रणे (for शरैः).

15 a) Most MSS. & Comm. °कक्षा (for °कक्ष्या). D2–4.7.8.10 सु- (for तु).

16 a) B4 D2–4.6–10 आसाद्य (for आस्थाय). — b) B4 महा° (for दुरा°). — d) B Dn D2.3.5.7–12 स्पर्धते हि; D4 °ते स; D6 °ते यः. Ś1 सदा मम; B Dn D5–7.9.11.12 सदा मया (by transp.); D3.8.10 मया सह.

17 a) D11 (m as in text).12 नीलाभि°; Cc.r.s नीलानु° (as in text). — b) B4 °तालेन; Cr °तारेण (as in text). D2–4.8 केतुना प्रविलक्ष्यते. — Ca cites the entire stanza as in text.

18 a) D2 यस्य बालार्कबिंबोसौ. — b) B1.2 Dn D11.12 ध्वजो रथवरे स्थितः.

19 c) D2.3.10 बलाहकेषु (for °हकाग्रे). K सूर्यै वा; B4 सूर्याभः; Ca.c सूर्यो वा (as in text). — d) Ś1 K प्रमुख(Ś1 °खः)स्थितः.

20 a) Ś1 D4.5 हेम-; K D9 हेमं; Cv हैमं (as in text). — b) K च य (sic) (for यस्य). — c) B1–3 Dn D10–12 °स्त्राणं (for °स्त्राणः). — d) D8 कंपयन् (for त्रासयन्). Dn1 मनस्तापयतीव मे.

21 c) K1 वरलब्धः; B1 Dn D11.12 Crp अभिवृद्धः; B2 विवृद्धः; B3.5 D6.10 Cr प्रवृद्धः; B4 निबद्धः; D4 अपविद्धः; D5 विरुद्धः; D7.9 Ca.rp (Dev.) अवरुद्धः (for अवबद्धः). B1.3 Dn D11.12 च; D6 अयं (for तु). — d) Ś1 B1.3.4 Dn D3.5.7–12 सुयोधन°.

22 d) D8.10 यत्नात् (for यत्तः). — After 22, D8 ins.:

909* एवमुक्तस्तदा तेन पार्थेनामित्रकर्शिना ।

☞ For 4–23, S subst. the foll. passage, inserting it after 899* (which, in its turn, is ins. after 4. 49. $2^{ab}$):

910* अर्जुनः।
जाम्बूनदमयी वेदी ध्वजाग्रे यस्य दृश्यते।
शोणाश्वाश्चा रथे युक्ता द्रोण एष प्रकाशते।
आचार्यो निपुणो धीमान्ब्रह्मविच्छूरसत्तमः।
लाघवे चाप्रतिद्वन्द्वो दूरपाती महारथः।
(7ab) सुप्रसन्नमना वीरः कुरुष्वैनं प्रदक्षिणम्।
(7cd) अत्रैव चाविरोधेन एष धर्मः सनातनः।
(8ab) यदि मे प्रहरेद्द्रोणः शरीरे प्रहरिष्यतः।
(8cd) ततोऽस्मिन्प्रहरिष्यामि नान्यथा युद्धमस्ति मे।
भारताचार्यमुख्येन ब्राह्मणेन महात्मना।
तेन मे युध्यमानस्य मन्दं वाहय सारथे।
ध्वजाग्रे सिंहलाङ्गूलो दिक्षु सर्वासु भासते।
(9cd) भारताचार्यपुत्रस्तु सोऽश्वत्थामा विराजते।
ध्वजाग्रे दृश्यते यस्य बालसूर्यसमप्रभः।
दुर्जयः सर्वसैन्यानां देवैरपि सवासवैः
तेन मे युध्यमानस्य मन्दं वाहय सारथे।
ध्वजाग्रं वृषभो यस्य दिक्षु सर्वासु शोभते।
आचार्यवरमुख्यस्तु कृप एष महारथः।
द्रोणेन च समो वीर्ये पितुर्मे परमः सखा।
तेन मे युध्यमानस्य मन्दं वाहय सारथे।
(15a) यस्य काञ्चनकम्बूभिर्हस्तिकक्ष्यापरिष्कृतः।
ध्वजः प्रकाशते दूराद्रथे विद्युद्गुणोपमः।
(15c) एष वैकर्तनः कर्णः प्रतिमानं धनुष्मताम्।
(16d) एष वै स्पर्धते नित्यं मया सह सुदुर्जयः।
जामदग्न्यस्य रामस्य शिष्यो ह्येष महारथः।
सर्वास्त्रकुशलः कर्णः सर्वशस्त्रभृतां वरः।
युद्धेऽप्रतिमवीर्यश्च दृढवेधी पराक्रमी।
अद्याहं युद्धमेतेन करिष्ये सूतबन्धुना।
युद्धमेतत्तु द्रष्टासि बलिवासवयोरिव।
महारथेन शूरेण सूतपुत्रेण धन्विना।
तेन मे युध्यमानस्य मन्दं वाहय सारथे।
(12ab) यस्य चैव रथोपस्थे नागो मणिमयो ध्वजः।
(12cd) एष दुर्योधनस्तत्र कौरवो यशसावृतः।
लब्धलक्षो दृढं वेधी लघुहस्तः प्रतापवान्।
तेन मे युध्यमानस्य मन्दं वाहय सारथे।
(17ab) यस्तु श्वेतावदातेन पञ्चतालेन केतुना।
वैडूर्यदण्डेन तथा तालवृक्षेण राजते।
(17cd) हस्तावापी बृहद्धन्वा सेनां तिष्ठति हर्षयन्।
रामेण जामदग्न्येन द्वैरथे न जितः पुरा।
शीघ्रश्च लघुवेधी च लघुहस्तः प्रतापवान्।
(21ab) एष शांतनवो भीष्मः सर्वेषां नः पितामहः।
ककुदः सर्वयोधानां सर्वशस्त्रभृतां वरः।
(21cd) राजश्रियावबद्धस्तु सुयोधनवशानुगः।
(22ab) पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत्।
(22cd) एतेन युध्यमानस्य यत्नात्संयच्छ मे हयान्।
इत्येतांस्त्वरितः पार्थः कथयित्वा तु चोत्तरे।
रूपतश्चिह्नतश्चैव युद्धाय त्वरते पुनः।

[ (L. 1) $T_2$ $G_{1.3}$ $M_4$ यत्र (for यस्य). — (L. 3) $G_1$ $M_{1.5}$ शूरसंमतः; $G_3$ द्विजसत्तमः (*sup. lin.* as in text). — (L. 6) $G_{1.3}$ अत्र वेच्छाविरोधेन (for अत्रैव चावि°). — (L. 10, 15, 19, and 30) $G_1$ आवह (for वाहय). — (L. 11) $G_{1.3}$ दृश्यते; $M_5$ शोभते (for भासते). T $G_2$ कांचनो हि विराजते (for the posterior half). — $G_1$ om. lines 13–14. — (L. 13) $T_1$ $G_{2.3}$ $M_4$ ध्वजाग्रं. $M_{1-4}$ यत्र (for यस्य). $T_1$ $G_{2.3}$ $M_4$ °प्रभं (for °प्रभः). — $M_{2.3}$ om. lines 16–17; $M_2$ om. 18–19 also. — (L. 16) $G_{1.3}$ $M_5$ कांचनोभिविराजते (for the posterior half). — (L. 20) G °दंडेन (for °कम्बूभिः). — (L. 22) $G_2$ $M_{1.3}$ °मानो (for °मानं). — After 22, T ins.:

911* दृढवैरी सदास्माकं नित्यं कटुकभाषणः।
यस्याश्रयबलादेव धार्तराष्ट्रः ससौबलः।
अस्मान्निरस्य राज्याच्च पुनरद्यापि योत्स्यति।

— (L. 24) $M_{1.3}$ om. हि. — (L. 26) T $G_{2.3}$ अयं (for च). T $G_{2.3}$ °धन्वा (for °वेधी). — (L. 28) T $G_2$ द्रष्टा त्वमावयोर्युद्धं (for the prior half). — (L. 29) $M_{1.3}$ मानिना; $M_{2.5}$ बंधुना (for धन्विना). $G_3$ $M_4$ समरे सूतबंधुना (for the posterior half). — (L. 30) T $G_{1.2}$ शीघ्रं (for मन्दं). — (L. 31) $T_1$ $G_1$ $M_{1-3}$ चैष (for चैव). — (L. 33) $T_1$ $G_{2.3}$ दृढावेधी; $M_{3.4}$ दृढवेधी (for दृढं वेधी). — (L. 34) G शीघ्रं (for मन्दं). — (L. 36) $T_1$ $G_2$ $M_4$ राजता (for राजते). — (L. 38) $T_2$ °थे निर्जितः; $G_2$ $M_{1-3}$ °थेनाजितः (for °थे न जितः). — (L. 39) $M_{1-3}$ शीघ्रं च (for शीघ्रश्च). — (L. 42) T च बद्धस्; $G_2$ अवरुद्धस्; $G_3$ अभिबद्धस्; $M_{1.4}$ (*sup. lin.*) अपविद्धस्; $M_2$ बबंधस्; $M_{3.5}$ अनुबद्धस् (for अवबद्धस्). $G_1$ जरया च श्रिया वृद्धः (for prior half). $G_3$ $M_4$ दुर्योधन° (for सुयोधन°). — $G_{1.2}$ M om. line 44. — (L. 44) $G_3$ वाहय सारथे (for संयच्छ मे हयान्). — $T_2$ om. lines 45–46. — (L. 45) $G_{1.3}$ इत्येतान्कथयित्वा तु त्वरितः पार्थ उत्तरे. ]

Colophon missing in $D_1$. — *Sub-parvan:* $Ś_1$ $K_1$ गोग्रह; $B_{1-4}$ $Dn_2$ $D_{3-6.8.10-12}$ उत्तरगोग्रह; $M_{1.2}$ गोग्रहण. — *Adhy. name:* $Dn_1$ देवविमाननावर्णनं; $D_{2.3.7-10}$ ध्वजवर्णनं; $D_4$ ध्वजचिह्नलक्षणं; T $G_2$ द्रोणादिसंज्ञापनं; $M_2$ कौरवसंज्ञावचनं; $M_3$ कौरवसंज्ञापनं. — *Adhy. no.* (figures, words or both): $B_4$ 53; $D_3$ 50; $D_6$ 52; $D_7$ 47; S 55 ($M_{2-4}$ 54). — *S'loka no.:* $G_3$ 28.

# ५१

C. 4. 1759
B. 4. 56. 1

वैशंपायन उवाच ।

तान्यनीकान्यदृश्यन्त कुरूणामुग्रधन्विनाम् ।
संसर्पन्तो यथा मेघा घर्मान्ते मन्दमारुताः ।। १
अभ्याशे वाजिनस्तस्थुः समारूढाः प्रहारिभिः ।
भीमरूपाश्च मातङ्गास्तोमराङ्कुशचोदिताः ।। २
ततः शक्रः सुरगणैः समारुह्य सुदर्शनम्
सहोपायात्तदा राजन्विश्वाश्विमरुतां गणैः ।। ३
तद्देवयक्षगन्धर्वमहोरगसमाकुलम् ।
शुशुभेऽभ्रविनिर्मुक्तं ग्रहैरिव नभस्तलम् ।। ४
अस्त्राणां च बलं तेषां मानुषेषु प्रयुज्यताम् ।
तच्च घोरं महद्युद्धं भीष्मार्जुनसमागमे ।। ५
शतं शतसहस्राणां यत्र स्थूणा हिरण्मयाः ।
मणिरत्नमयाश्चान्याः प्रासादमुपधारयन् ।। ६
तत्र कामगमं दिव्यं सर्वरत्नविभूषितम् ।
विमानं देवराजस्य शुशुभे खेचरं तदा ।। ७
तत्र देवास्त्रयस्त्रिंशत्तिष्ठन्ति सहवासवाः ।
गन्धर्वा राक्षसाः सर्पाः पितरश्च महर्षिभिः ।। ८
तथा राजा वसुमना बलाक्षः सुप्रतर्दनः ।

## 51

☞ The S version of this adhy., which is considerably different from the N version and found after adhy. 47, is given *in extenso* at the end of the foot-notes of this adhy. where its points of agreement with the N version have been shown marginally, within parenthesis. — D1 is missing in this adhy. (cf. v. l. 4. 50. 5).

1 $^{a}$) Ś1 तत्र (for तानि). — B2 om. $1^{b}$–$2^{d}$. — $^{b}$) B4 D10 अग्र° (for उग्र°). — $^{c}$) Ś1 B1 Dn2 D4. 11. 12 संसर्पंते.

2 B2 om. 2 (cf. v. l. 1). — $^{a}$) B3. 4 D6 Crp आकाशे; Dn1 D3. 4. 7–10 अभ्यासे; Crp अवकाशे; Cr अभ्याशे (as in text). — $^{b}$) Ś1 K D7 प्रहारिणः. — $^{c}$) D3. 4 भीमाश्च मत्तमातंगाः. — $^{d}$) B4 °देशिताः; Dn1 D2–4. 7–10 °नोदिताः. — After 2, B (except B2) Dn D3. 5. 10–12 ins.:

912* महामात्रैः समारूढा विचित्रकवचोज्ज्वलाः ।

while D7 ins.:

$912^{a}$ आरूढा युद्धकुशलैः शिक्षितैर्गजसादिभिः ।

3 D6 om. 3–4. — $^{b}$) K प्रदर्शनं; Ca. r. s. v सु° (as in text). — After $3^{ab}$, B4 D3 ins.:

913* सर्वान्देवान्समारोप्य वैडूर्यकवचावृतम् ।
[ D3 वैडूर्यफलकस्त्रितं (for the posterior half). ]

— $^{c}$) K D2. 4. 10 सहो(D2. 4 °हा)पया(D2 °य)त्; B3 समायातः (for सहोपायात्). — $^{d}$) K विश्वैश्च; B4 वस्वश्वि°; D7 विश्वेशो (m विश्वाश्वि°, विश्वाश्वैः) (for विश्वाश्वि°). Ś1 K पतिः (for गणैः). B4 विश्वेशः समरुद्गणैः.

4 D6 om. 4 (cf. v. l. 3); D4 om. $4^{cd}$. — $^{c}$) D2 ह्यभ्र°; D3 चंद्र° (for ऽभ्रवि°). — $^{d}$) B1. 5 Dn D11. 12 ग्रहाणामिव मंडलं. — After 4, D7 ins.:

914* दर्शनार्थं तदा सर्वे समेता वासवादयः ।

5 $^{b}$) K B3 D4. 6 मनुष्येषु. Ś1 B1. 5 Dn D11. 12 Ca प्रयुंजतां; B2 प्रमुह्यतां; B4 प्रमुच्यतां. — $^{c}$) B5 Dn1 भीमं (for घोरं). B2. 3. 5 D7. 9 महायुद्धं. B4 D4 तच्च युद्धं महद्घोरं. — $^{d}$) Ś1 °समागमं; K D4 भीमार्जुनसमाकुलं (D4 °गमे); B5 Dn1 D3. 10 कृपार्जुनसमागमे (D10 °मं); D2 °समाकुले. — After 5, B (B3 marg.) Dn D5. 6. 7 (marg. *sec. m.*). 10–12 ins.:

915* द्रष्टुमभ्यागता देवाः स्वविमानैः पृथक्पृथक् ।
[ B2. 3 D5. 6 विमानैः स्वैः; D10 स्वैर्वि° (for स्ववि°). ]

6 $^{a}$) D8 Ca कोटिः (for शतं)! — $^{b}$) B2. 4 D2. 4–6. 8 तत्र; D7. 9 तस्मिन् (for यत्र). D2. 7. 9 स्तंभाः (for स्थूणाः). B1. 3. 4 Dn D5. 11. 12 Ca हिरण्मयी (B4 Ca °यीः). D10 नाकस्थानां हिरण्मयान्. — $^{c}$) Ś1 K °मयान्यासन्; B1. 2 Dn2 D11. 12 °मयी चान्या; B3. 5 D5 °मयीश्चान्याः; B4 Dn1 D10 °मयांश्चान्यान्; D2. 3 °मयैश्चान्याः. D7. 9 मणिमुक्तामयाश्चान्ये. — $^{d}$) K Dn1 D2–4. 8 प्रसादं; B2. 3. 5 D6. 10 प्रासादान्; B4 प्रसादान्. B1 Dn D11. 12 तदधारयत्; D2. 4. 8 तमधारयन् (D2 °यत्); D3 नामधारयत्; D7. 9 समधारयन्; D10 तानधारयन्; Ca as in text.

7 K2 (which om. $7^{cd}$) reads $7^{ab}$, after $10^{ab}$. — $^{a}$) K2 B2 Dn1 ततः; B1. 3–5 D4. 5. 8 तत्तु; D2. 3. 10 तं तु; D6 यत्तु; D7. 9 यच्च (for तत्र). — $^{c}$) D10 transp. विमानं and शुशुभे (in $^{d}$). D7 राज(m देव)राजस्य. — K1 (hapl.) om. from $7^{d}$ up to $10^{c}$. — $^{d}$) B2. 3. 5 D5. 6 Cc शुभं; D4 दिवि; Ccp सुभं (for तदा).

8 Ś1 om. 8–10; K1 om. 8 (cf. v. l. 7). — $^{c}$) Dn1

अष्टकश्च शिबिश्चैव ययातिर्नहुषो गयः ॥ ९
मनुः क्षुपो रघुर्भानुः कृशाश्वः सगरः शलः ।
विमाने देवराजस्य समदृश्यन्त सुप्रभाः ॥ १०
अग्नेरीशस्य सोमस्य वरुणस्य प्रजापतेः ।
तथा धातुर्विधातुश्च कुबेरस्य यमस्य च ॥ ११
अलम्बुसोग्रसेनस्य गन्धर्वस्य च तुम्बुरोः ।
यथाभागं यथोद्देशं विमानानि चकाशिरे ॥ १२
सर्वदेवनिकायाश्च सिद्धाश्च परमर्षयः ।
अर्जुनस्य कुरूणां च द्रष्टुं युद्धमुपागताः ॥ १३
दिव्यानां तत्र माल्यानां गन्धः पुण्योऽथ सर्वशः ।
प्रससार वसन्ताग्रे वनानामिव पुष्पताम् ॥ १४
रक्तारक्तानि देवानां समदृश्यन्त तिष्ठताम् ।
आतपत्राणि वासांसि स्रजश्च व्यजनानि च ॥ १५
उपशाम्यद्रजो भौमं सर्वं व्याप्तं मरीचिभिः ।
दिव्यान्गन्धानुपादाय वायुर्योधानसेवत ॥ १६
प्रभासितमिवाकाशं चित्ररूपमलंकृतम् ।
संपतद्भिः स्थितैश्चैव नानारत्नावभासितैः ।
विमानैर्विविधैश्चित्रैरुपानीतैः सुरोत्तमैः ॥ १७ C. 4. 1777 B. 4. 56 18

इति श्रीमहाभारते विराटपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

D2.9 गंधर्व-. K2 सिद्धाः; D6.8 सर्वे (for सर्पाः). — $^{d}$) B2.4 D3.6 महर्षयः; some MSS. सहर्षिभिः.

9 Ś1 K1 om. 9 (cf. v. l. 7, 8). — $^{b}$) K2 बालाकिः; D2.3.8 Cv बलाकः; D4.5 m.7.9 हर्यश्वः; Cvp बलाक्षः (as in text). K2 शुभ्रदर्शनः; Dn1 D3 सुप्रदर्शनः; D4 च सुदर्शनः; Cvp as in text. — $^{c}$) B4 तथाष्टकः (for अष्टकश्च). — $^{d}$) D10 नलः (for गयः).

10 Ś1 om. 10; K1 om. $10^{abc}$ (cf. v. l. 7, 8). — $^{a}$) K2 क्षिपो; B1 Dn D11.12 पूरुः; B3 D8 क्षपो; D2 कृपो; D3 शिक्षो; D4 क्षेपो; Cv क्षुपो (as in text). — $^{b}$) B (except B1) D5 (m as in text).6 कृष्णाक्षः (for कृशाश्वः). B1 Dn D9.11.12 नलः; B2 स्वनः; D3.7 शिलः (for शलः). — After $10^{ab}$, K2 reads $7^{ab}$

12 D3 transp. some pādas here. — $^{a}$) K2 B Dn D3.5–8.10–12 Cc अलंबुष-. Cv cites अलम्बुसः. N (except D2.3.10; D1 missing) Cc °सेनानां (for °सेनस्य). — $^{b}$) Some MSS. तुंबरोः. — $^{c}$) Dn1 D10 °मानं (for °भागं).

13 $^{a}$) K1 B3.5 सर्वे (for सर्व-). — $^{b}$) B (except B1) D5.6 सिद्धगंधर्वराक्षसाः (B2 °पन्नगाः); D8 सिद्धाश्च पुरतस्तथा. — Ś1 K1 D3 om. $13^{cd}$; D3 om. 14 also. $^{d}$) B2.4.5 D5–7.9 transp. द्रष्टुं and युद्धं. K2 उपाययुः; B4 D7 समागताः (for उपागताः).

14 D3 om. 14 (cf. v. l. 13). — $^{a}$) K1 B1 Dn D6.9.11.12 सर्व- (for तत्र). — $^{b}$) Ś1 अतिशोभनः (for अथ सर्वशः). — $^{c}$) K वनांताग्रे; D5 वसंतादौ (for वसन्ताग्रे). — $^{d}$) B1 Dn D6.11.12 भारत; B4 D2.4.7–10 Ca पुष्पिणां (for पुष्पताम्).

15 $^{a}$) Ś1 D9 रक्तरक्तानि; B1 Dn D6.11.12 तत्र रत्नानि; D8 तत्र रक्तानि (for रक्तारक्तानि). — $^{b}$) D7 (marg. *sec. m.* by corr.) विमानानि चकाशिरे (= $12^{d}$).

16 $^{a}$) K1 B Dn D5.6.9–12 उपाशाम्यद्. — $^{c}$) B2.4 दिव्य- (for दिव्यान्). — $^{d}$) D10 देवान् (for योधान्).

17 $^{c}$) B1.2.5 Dn D2–6.8.10–12 चापि; B4 वापि (for चैव). — $^{d}$) B1.3 °रत्नविभूषितैः; Dn D4.11.12 °वर्णाव-भासितैः. In Ś1, the folios containing the portion of the text from $17^{ef}$ up to 4. 56. 4 are firmly stuck together and could not be collated. — $^{f}$) B4 D2.5.6.10 उपनीतैः. — After 17, B Dn D3 (om. lines 2–3).5.6.7 (marg. *sec. m.*).10–12 ins.:

916* वज्रभृच्छुशुभे तत्र विमानस्थः सुरैर्वृतः ।
बिभ्रन्मालां महातेजाः पद्मोत्पलसमायुताम् ।
विप्रेक्ष्यमाणो बलभिन्नातृप्यत्सुमहाहवम् ।

[ (L. 1) B1 Dn D10–12 विमानस्थैः. D3 सुरैः सह. — (L. 2) B4 °युतां शुभां; B5 D5.10 °व(D10 °प)रायुतां; D6 °गणायुतां; D7 °मयीं शुभां (for °समायुताम्). — (L. 3) B2.5 सुमहाहवे; B4 D6.7 सुनुमाहवे (for सुमहाहवम्). ]

☞ For this adhy., S subst. the foll. passage, reading it after adhy. 47:

917* वैशंपायनः ।
ततः सुदर्शनं नाम प्रासादं हरिवाहनः ।
सर्वान्देवान्समारोप्य प्रययौ यत्र पाण्डवः ।
स्थूणाराजिसहस्रं तु यस्य मध्ये प्रतिष्ठितम् ।
तत्र सूर्यपथेऽतिष्ठद्विमला वासवी सभा ।
आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः । [5]
तत्र श्वेतानि छत्राणि काञ्चनस्फाटिकानि च ।

# ५२

C. 4. 1789
B. 4. 57. 12
K. 4. 61. 1

वैशंपायन उवाच ।
एतस्मिन्नन्तरे तत्र महावीर्यपराक्रमः ।
आजगाम महासत्त्वः कृपः शस्त्रभृतां वरः ।
अर्जुनं प्रति संयोद्धुं युद्धार्थी स महारथः ॥ १

मणिरत्नविचित्राणि नानारूपाणि भागशः ।
आकाशे समदृश्यन्त भानुमन्ति शुभानि च ।
(11ab) अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ।
(11cd) तथा धातुर्विधातुश्च मित्रस्य धनदस्य च ।
रुद्रस्य विष्णोः सवितुस्त्रिदशानां तथैव च ।
काञ्चनानि च दामानि विविधाश्चोत्तमस्रजः ।
दिव्यपुष्पाभिसंवीतास्तत्र छत्राणि भेजिरे ।
(6cd) तस्मिंश्च राजन्प्रासादे दिव्यरत्नविभूषिते ।
दिव्यगन्धसमाविष्टाः स्रजो दिव्याश्चकाशिरे ।
(14ab) दिव्यश्च वायुः प्रववौ गन्धमादाय सर्वशः ।
ऋतवः पुष्पमादाय समतिष्ठन्त भारत ।
प्रजानां पतयश्चैव सप्त चैव महर्षयः ।
तत्र देवर्षयश्चैव ते च राजन्दिवौकसः ।
इन्द्रेण सहिताः सर्वे त्रिदशाश्च व्यवस्थिताः ।
न पङ्को न रजस्तत्र प्रविवेश कथंचन ।
आदित्यश्चापि रूक्षोऽत्र नातिवेलमिवातपत् ।
(16cd) दिव्यं गन्धं समादाय वायुस्तत्राभिगच्छति ।
आकाशं च दिशः सर्वा दर्शनीयमदृश्यत ।
तत्र देवाः समारुह्य तं दिव्यं सर्वतःप्रभम् ।
अम्बरे विमलेऽगच्छन्प्रासादं कामगामिनम् ।
तत्र राजर्षयश्चैव समारूढा दिवौकसः ।
(9ab) श्वेतो राजा वसुमनास्तथा भद्रः प्रतर्दनः ।
नृगो ययातिर्नहुषो मान्धाता भरतः कुरुः ।
अष्टकश्च शिबिः पूरुः स च राजा पुरूरवाः ।
डम्भोद्भवः कार्तवीर्यो ह्यर्जुनः सगरस्तथा ।
दिलीपो भरतः पूरुः शय्यातिः सोमकस्तथा ।
हरिश्चन्द्रश्च तेजस्वी रघुर्दशरथस्तथा ।
भगीरथश्च राजर्षिः सर्वे च जनमेजय ।
पाण्डुश्चैव महाबाहुश्चामरव्यजनायुतः ।
छत्रेण ध्रियमाणेन राजसूयश्रिया वृतः ।
एते चान्ये च बहवः पुण्यशीलाः शुचिव्रताः ।
कीर्तिमन्तो महावीर्यास्तत्रैवासन्दिवि स्थिताः ।
गणाश्चाप्सरसां सर्वे गन्धर्वाश्चापि सर्वशः ।
दैत्यराक्षसयक्षाश्च सुपर्णाः पन्नगास्तथा ।
वासवप्रमुखाः सर्वे देवाश्च सगणेश्वराः ।
आसंस्तत्र समारूढाः संग्रामं तं दिदृक्षवः ।
इत्यम्बरे व्यवस्थाय प्रासादस्था दिवौकसः ।
(13cd) एकस्य च बहूनां च द्रष्टुं युद्धं व्यवस्थिताः ।

[(L. 1) M1-3 °वाहनं (for °वाहनः). — (L. 4) T G M2 महती (for वासवी). — (L. 6) G1.3 चित्राणि (for छत्राणि). M4 दिव्यरूपाणि भागशः (m भारत) (for the posterior half). — After line 6, T G2.3 M5 ins.:

918* तथा चित्राणि छत्राणि दिव्यरूपाणि भारत ।

— (L. 7) M2.3 तथा चित्राणि छत्राणि (for prior half). — (L. 12) T1 M1.2 विचित्राश्; G1 विविक्ताश् (for विविधाश्). — (L. 18) G1.3 M3-5 पतयः सप्त (for पतयश्चैव). G1 ब्रह्मर्षयस्तथा; G3 ब्रह्ममहर्षयः (for चैव मह°). — (L. 23) M1.5 अधिगच्छति (for अभिग°). — (L. 24) T G2 M3 प्रकाशंते (for आकाशं च). — (L. 26) T G2 व्योमगामिनं; M2 कामगामिकं (for कामगामिनम्). — (L. 27) T G2.3 समारुह्य (for °रूढा). — (L. 28) T1 G M2-5 भद्रप्रदर्शनः (for भद्रः प्रतर्दनः). — (L. 30) G1.3 चोभौ (for पूरुः). — (L. 32) G1 केरळः (for भरतः). M1.4.5 चांबरीषश्च (for भरतः पूरुः). T1 G2 शर्यातिः (for शय्यातिः). — (L. 36) T G2 M3 युतः (for वृतः). — (L. 37) G3 M1.4 शुभ° (for शुचि°). — (L. 39) M1.4 गणाश्चाप्सरसश्चैव (for the prior half). G1 संघशः (for सर्वशः). — (L. 40) T1 G2 M1 सुपर्णः (for °र्णाः). — M2 om. lines 41-43. — (L. 44) G1.3 M1.2 transp. द्रष्टुं and युद्धं.

Colophon missing in Ś1 D1; D7 reads it in marg. — *Sub-parvan:* K1 गोग्रह; B1-4 Dn D2-6.8.10-12 उत्तरगोग्रह; M1-3 गोग्रहण. — *Adhy. name:* D4 देवविमानदर्शनं; D7-9 विमानदर्शनं; T1 G2 धनंजयदर्शनं; M2.3 दिव्यसमागमः. — *Adhy. no.* (figures, words or both): B4 54; D3 M2-4 51; D5.10 49; D6 53; D7m 48; T G M1.5 52. — *S'loka no.*: G3 22.

## 52

☞ This whole adhy. is missing in Ś1 (cf. v. l. 4. 51. 17).

1 Before the ref., D8 repeats 4. 50. 3. — After the ref., N (Ś1 missing; D1 missing for lines 1–8 only) ins. a passage given in App. I (No. 47). — a) D3.4.7.9 विप्रो; B Dn D5.6.10-12 वीरो; D1.2 राजन्; D8 दर्पो (for तत्र). — M1 om. 1bc. — b) N (Ś1 missing) बलदर्प(Dn D11.12 °वीर्य)समन्वितः; G1.3

तौ रथौ सूर्यसंकाशौ योत्स्यमानौ महाबलौ ।
शारदाविव जीमूतौ व्यरोचेतां व्यवस्थितौ ॥ २
पार्थोऽपि विश्रुतं लोके गाण्डीवं परमायुधम् ।
विकृष्य चिक्षेप बहून्नाराचान्मर्मभेदिनः ॥ ३
तानप्राप्ताञ्शितैर्बाणैर्नाराचान्रक्तभोजनान् ।
कृपश्चिच्छेद पार्थस्य शतशोऽथ सहस्रशः ॥ ४
ततः पार्थश्च संक्रुद्धश्चित्रान्मार्गान्प्रदर्शयन् ।
दिशः संछादयन्बाणैः प्रदिशश्च महारथः ॥ ५
एकच्छायमिवाकाशं प्रकुर्वन्सर्वतः प्रभुः ।
प्रच्छादयदमेयात्मा पार्थः शरशतैः कृपम् ॥ ६
स शरैरर्पितः क्रुद्धः शितैरग्निशिखोपमैः ।
तूर्णं शरसहस्रेण पार्थमप्रतिमौजसम् ।
अर्पयित्वा महात्मानं ननाद समरे कृपः ॥ ७
ततः कनकपुङ्खाग्रैर्वीरः संनतपर्वभिः । C. 4. 1799 B. 4. 57. 22 K. 4. 61. 13

---

महासत्वपराक्रमः. — After $1^{ab}$, Dn1 ins.:

919* अर्जुनं प्रति संरब्धः कृपः परमदुर्जयः ।

— $^{e}$) T2 G M3 °वीर्यः (for °सत्त्वः). N (Ś1 missing) अमृष्यमाणस्तं (D4 तत्) शब्दं. — $^{d}$) N (Ś1 missing) कृपः शारद्वतस्तथा (B3 m. 4. 5 Dn1 D1. 5 °स्तदा; Dn2 D2. 4. 7–12 °स्ततः); M3 सर्वशस्त्रभृतां वरः. — $^{e}$) B Dn D1–6. 10–12 Cc संरब्धो; D7. 9 संरोद्धुं; S योद्धुं वै (for संयोद्धुं). — $^{f}$) B5 युद्धार्थं स; T1 G M3. 5 युद्धकामी; T2 M1. 2. 4 युद्धकामो (for युद्धार्थी स). B5 Dn1 D10 °बलः (for °रथः). — After 1, N (Ś1 missing) ins.:

920* महोदधिजमादाय दध्मौ वेगेन वीर्यवान् ।
स तु शब्देन लोकांस्त्रीनावृत्य रथिनां वरः ।
धनुरादाय सुमहज्ज्याशब्दमकरोत्तदा ।

[ (L. 1) K1 महोदधिसमं शंखं; K2 °समादाय; Dn1 °जमासाद्य. Ca. c. r. s cite महोदधिजं. D7. 9 शंखं दध्मौ स वीर्यवान्. ]

On the other hand S ins. after 1:

921* अथ द्रौणे रथं त्यक्त्वा कृपस्य रथमुत्तमम् ।
आजगामार्जुनस्तूर्णं सूर्यवैश्वानरप्रभम् ।

2 $^{a}$) B4 D5 S वीरौ (for रथौ). M4 वीर्यसंपन्ना (*inf. lin.* °संकाशौ) (for सूर्य°). — $^{b}$) D3 बलौजसा; D4. 5. 7 महारथौ (for °बलौ). — $^{c}$) S वार्षिकौ (for शारदौ). — After 2, N (Ś1 missing) ins.:

922* ततः शारद्वतस्तूर्णं पार्थं दशभिराशुगैः ।
विव्याध परवीरघ्नं निशितैर्मर्मभेदिभिः ।
[ (L. 2) K B3 D3. 10 परवीरघ्नो (for °घ्नं). ]

3 $^{ab}$) B3 D5 विदितं (for विश्रुतं). D9 गांजीवं. K B3 धनुरुत्तमं (for परमायुधम्). S प्रगृह्य गांडिवं लोके (G by transp. लोके गांडीवं) विश्रुतं पुनरर्जुनः. — $^{cd}$) K2 तस्मै चिक्षेप; Dn1 चिक्षेप वरान् (for चिक्षेप बहून्). D3. 8 °भेदिभिः (for °भेदिनः). S अभ्ययाद्भरतश्रेष्ठो विनिघ्नञ्शरमालया. — After 3, S ins.:

923* कृपश्च धनुरादाय तथैवार्जुनमभ्ययात् ।

4 $^{a}$) B4 D4. 7. 8 तान्प्राप्तान्निशितैर्बाणैः; S प्रगृह्य बलवच्चापं. Cc cites अप्राप्तान्. — $^{c}$) S कृपश्चिक्षेप पार्थाय. — After 4, S ins.:

924* जीमूत इव घर्मान्ते शरवर्षं विमुञ्चति ।
नन्दयन्सुहृदः सर्वान्प्रत्ययुध्यत फल्गुनम् ।
विकृष्य बलवच्चापं पाण्डवो भीमविक्रमः ।

5 $^{a}$) B Dn D4. 5. 7–12 तु; D1. 3 स; D2 सु- (for च). S चचार समरे पार्थः. — $^{b}$) B4 (? gloss) बाणान् (for मार्गान्). B5 M वि° (for प्र°). B3 शीघ्रास्त्रं तु प्रदर्शयन्; D1–6. 8. 10 शीघ्रास्त्रत्वं वि(D1. 4 प्र-; D3. 10 व्य)दर्शयन् (D5 m as in text); G1 चित्रमार्गान्प्र°; M3 चित्रमार्गं वि°. — $^{c}$) D5 प्रच्छादयन्; G1. 3 चापूरयन् (for संछा°). B5 D6 दिशः प्र(B5 सं)छादयामास; T G2 M1. 5 सर्वाश्चैव दिशो बाणैः; M2–4 स सर्वाश्च (M2 सर्वा वि-) दिशो बाणैः. — $^{d}$) K °रवैः (for °रथः). D6 बाणौघैः प्रदिशं तथा.

6 $^{b}$) B1 Dn D11. 12 अकरोत् (for प्रकुर्वन्). B2–5 D1–6. 8. 10 कुर्वंस्त्रथगतः प्रभुः; S सर्वतः कृतवान्प्रभुः. — D10 om. $6^{cd}$. — $^{c}$) B Dn D3–5. 7–9. 11. 12 S (except G1 M3) प्रा(B3 आ)च्छादयद्. D6 ततः प्रच्छादयामास. — After 6, S ins.:

925* उद्गतः समये मेघो धाराभिरिव पर्वतम् ।
[ T2 G2 M2 समरे (for समये). ]

7 $^{a}$) K B Dn D5–7. 9. 11. 12 अर्दितः; D1–4. 8. 10 आचितः; G1 अपि सं- (for अर्पितः). — $^{b}$) D1. 2 शतैर्; D4 M4 शरैर्; D10 चिच्छेद (for शितैर्). D8 °विषो° (for °शिखो°). — After $7^{ab}$, S ins.:

926* कृपो बभूव समरे विधूमोऽग्निरिव ज्वलन् ।

— $^{c}$) D6 शरैः; S ततः (for तूर्णं). B1–4 D1–8. 10 शत°; B5 Dn D9. 11. 12 दश° (for शर°). — $^{d}$) D4 पार्थस्यामिततेजसः. — $^{e}$) N (Ś1 missing) अर्द(D1 दर्श)यित्वा. D6 S महानादं (G1 °बाहुः). — $^{f}$) B1. 5 Dn D11. 12 ननर्द (for ननाद).

8 D1 om. 8. — $^{a}$) D4 कृपः (for ततः). B5 Dn

C. 4. 1800 B. 4. 57. 22 त्वरन्गाण्डीवनिर्मुक्तैरर्जुनस्तस्य वाजिनः ।
चतुर्भिश्चतुरस्तीक्ष्णैरविध्यत्परमेषुभिः ॥ ८
ते हया निशितैर्विद्धा ज्वलद्भिरिव पन्नगैः ।
उत्पेतुः सहसा सर्वे कृपः स्थानादथाच्यवत् ॥ ९
च्युतं तु गौतमं स्थानात्समीक्ष्य कुरुनन्दनः ।
नाविध्यत्परवीरघ्नो रक्षमाणोऽस्य गौरवम् ॥ १०
स तु लब्ध्वा पुनः स्थानं गौतमः सव्यसाचिनम् ।
विव्याध दशभिर्बाणैस्त्वरितः कङ्कपत्रिभिः ॥ ११
ततः पार्थो धनुस्तस्य भल्लेन निशितेन च ।
चिच्छेदैकेन भूयश्च हस्ताच्चापमथाहरत् ॥ १२
अथास्य कवचं बाणैर्निशितैर्मर्मभेदिभिः ।
व्यधमन्न च पार्थोऽस्य शरीरमवपीडयत् ॥ १३
तस्य निर्मुच्यमानस्य कवचात्काय आबभौ ।
समये मुच्यमानस्य सर्पस्येव तनुर्यथा ॥ १४
छिन्ने धनुषि पार्थेन सोऽन्यदादाय कार्मुकम् ।
चकार गौतमः सज्यं तदद्भुतमिवाभवत् ॥ १५
स तदप्यस्य कौन्तेयश्चिच्छेद नतपर्वणा ।
एवमन्यानि चापानि बहूनि कृतहस्तवत् ।
शारद्वतस्य चिच्छेद पाण्डवः परवीरहा ॥ १६
स छिन्नधनुरादाय अथ शक्तिं प्रतापवान् ।
प्राहिणोत्पाण्डुपुत्राय प्रदीप्तामशनीमिव ॥ १७
हेमविभूषिताम्

---

D11. 12 Cs °पर्वाग्रैः; S °पुंखेन (for °पुङ्खाग्रैः). — $^{b}$) S शरेण (M5 °तेन) नतपर्वणा. — After $8^{ab}$, B1. 3 D6 ins.:

927* धनुरादाय विव्याध पार्थं दशभिराशुगैः ।;

while S ins.:

928* बिभेद समरे पार्थः कृपस्य ध्वजमुत्तमम् ।
ततः पश्चान्महातेजा नाराचान्सूर्यसंनिभान् ।
जग्राह समरे पार्थो भूयो बहुशिलीमुखान् ।
तैस्तदानीं महाबाहुः कृपस्य रथरक्षिणः ।
जघान क्षत्रियश्रेष्ठान्युध्यमानान्महाबलान् ।
चन्द्रकेतुः सुकेतुश्च चित्राश्वो मणिमांस्तथा ।
मुञ्जमौली च विक्रान्तो हेमवर्मा भयावहः ।
सुरथोऽतिरथश्चैव सुषेणोऽरिष्ट एव च ।
नृकेतुश्च सहानीकास्ते निपेतुर्गतासवः ।

[ (L. 5) T2 G °श्रेष्ठः (for °श्रेष्ठान्). — (L. 6) T G बली (for तथा). — (L. 9) M1. 5 सकेतनः (for नृकेतुश्च). M2–5 निषेदुर् (for निपेतुर्). ]

Thereafter S reads a variant version of $20^{a}$–$24^{b}$, omitting altogether $8^{c}$–$16^{f}$. — $^{c}$) D9 गांजीव°.

9 S om. 9 (cf. v. l. 8). — $^{a}$) B3. 5 D5. 6 विशिखैः (for निशितैः). B1. 2 Dn D11. 12 बाणैः; B4. 5 D5. 6 स्पृष्टाः; D7. 9 भिन्नाः (for विद्धाः). — $^{b}$) K इव पावकैः; B2. 4. 5 D5. 6 पावकोपमैः (for इव पन्नगैः). — $^{d}$) D1 अवाच्यवत्; D4 अथ च्युतः (for अथाच्यवत्). K कृपं स्थानादपातयत्.

10 S om. 10 (cf. v. l. 8). — $^{ab}$) D8 च्यवंतं (for च्युतं तु). D6 च्युतं गौतममालोक्य स्थानात्कुंतीसुतस्तदा. — D4 om. $10^{cd}$.

12 S om. 12 (cf. v. l. 8). — $^{b}$) B1. 2 Dn D11. 12 ह (for च). — $^{d}$) K2 B (except B4) Dn2 D5. 6. 8. 11. 12 Cc हस्तावापम् (for हस्ताच्चापम्). D1. 3. 7 अपाहरत्; D10 अथाच्छिनत् (for अथाहरत्).

14 S om. 14 (cf. v. l. 8). — $^{b}$) K कवचं; Cc कवचात् (as in text). — $^{d}$) K त्वचं (K1 °चे) (for तनुर्). D6 यथा सर्पस्य वै तनुः.

16 S om. 16 (cf. v. l. 8). — $^{b}$) B3. 4 D5. 10 आनतपर्वणा; D3 पांडवस्तदा; D7. 9 नतपर्वभिः; D8 निशितैः शरैः. — $^{d}$) B2. 4 D5 दृढहस्तवत्; D6 दृढवंति च; Cs कृत° (as in text).

17 S reads 17–18 after $24^{ab}$. — $^{a}$) D9 शारद्वतस्तदादाय. — $^{b}$) B1–3. 5 D2. 5. 7. 8. 10–12 Cc रथशक्तिं; B4 Dn D1. 3. 4. 6. 9 रथाच्छक्तिं (D4 °च्छिन्नं) (for अथ शक्तिं). — $^{e}$) D5 चापि पार्थाय (m पाण्डुपुत्राय as in text). — For 17, S subst.:

929* अथ शक्तिं परामृश्य सूर्यवैश्वानरप्रभाम् ।
चिक्षेप सहसा क्रुद्धः पार्थायाद्भुतकर्मणे ।

[ (L. 1) M3. 4 रथशक्तिं. ]

18 For S cf. v. l. 17. — $^{a}$) K1 तदायंतीं; D1–4. 7. 8. 10 समायांतीं; S तथारूपां. — $^{b}$) D3 °विभूषणां; S °परिष्कृतां. — $^{c}$) B4 वियद्यातां; S आपतंतीं. — $^{ef}$) Dn1 D1 om. $18^{ef}$. K2 D4. 8 भिन्ना; D2 भूत्वा (for छिन्ना). S सापतद्दश(T1 G2 °च्छत)धा भूमौ पार्थेन निहता शरैः. — After 18, S ins.:

930* शक्त्यां तु विनिकृत्तायां विरथः शरपीडितः ।

युगमध्ये तु भल्लैस्तु ततः स सधनुः कृपः ।
तमाशु निशितैः पार्थं विभेद दशभिः शरैः ॥ १९
ततः पार्थो महातेजा विशिखानग्नितेजसः ।
चिक्षेप समरे क्रुद्धस्त्रयोदश शिलाशितान् ॥ २०
अथास्य युगमेकेन चतुर्भिश्चतुरो हयान् ।
षष्ठेन च शिरः कायाच्छरेण रथसारथेः ॥ २१
त्रिभिस्त्रिवेणुं समरे द्वाभ्यामक्षौ महाबलः ।
द्वादशेन तु भल्लेन चकर्तास्य ध्वजं तथा ॥ २२
ततो वज्रनिकाशेन फल्गुनः प्रहसन्निव ।
त्रयोदशेनेन्द्रसमः कृपं वक्षस्यताडयत् ॥ २३
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणिरवप्लुत्य तूर्णं चिक्षेप तां गदाम् ॥ २४
सा तु मुक्ता गदा गुर्वी कृपेण सुपरिष्कृता ।
अर्जुनेन शरैर्नुन्ना प्रतिमार्गमथागमत् ॥ २५ C. 4. 1819 B. 4. 57. 40 K. 4. 61. 26

[ T1 G2 M3 °विक्षतः (for °पीडितः). ]

19 Dn1 D1. 2 S om. 19. — [a]) K1 D3 युगमध्येन; B4 युगमस्य तु; Dn2 D11. 12 युगपच्चैव (for युगमध्ये तु). Ca. r. v cite युगमध्ये (as in text). — [b]) B5 Dn2 D10–12 सज्यधनुः; D6 सप्तधनुः; D8 समधमत् (for स सधनुः). B4 समकृंतत्ततः कृपः; D4. 7. 9 ततस्तु (D7 आदाय; D9 संधाय) सशरं धनुः. — After 19[ab], D4 ins.:

931* प्रगृहीत्वा रथस्तूर्णं रथादन्यन्महाधनुः ।

— [cd]) D7 (marg. *sec. m.* as in text). 9 तमेव (for तमाशु). K transp. निशितैः and दशभिः. D6 विव्याध (for विभेद).

20 S (which for 20 subst. 932*) reads 20[a]–24[b] after 928* (cf. v. l. 8). — [b]) B2 D5 शरानग्निशिखोपमान्. — [c]) D4 चिच्छेद दशभिः क्रुद्धः. — For 20, S subst.:

932* तान्निहत्य ततः पार्थो निमेषादिव भारत ।
पुनरन्यान्समादत्त त्रयोदश शिलीमुखान् ।

21 For S cf. v. l. 20 also. — [c]) B4 एकेन. D2 S तु (for च). S संख्ये (G2 M1–3. 5 °खे; G1. 3 °घे) (for कायात्). — [d]) B3 जहाराथ स सारथेः; D5 सारथेः पत्रिणा तथा; T G2 M1. 2. 4 कृपस्य रथसारथेः; G1. 3 M3. 5 शरेण कृपसारथेः.

22 For S cf. v. l. 20 also. — [a]) S बलवान् (for समरे). — [b]) B Dn D1–4. 6. 11. 12 S अक्षं; D10 आछैन्; Cv अक्षौ (as in text). N (except K) °रथः (for °बलः). — [c]) B3–5 D2. 4. 6–10 च; D1. 3 अथ; D5 अस्य (for तु). G3 बाणेन (for भल्लेन). — [d]) D4 महाध्वजं; D6 ध्वजोत्तमं; B4 Dn1 D9 ध्वजं तदा (for ध्वजं तथा). S कृपस्य सशरं धनुः.

23 For S cf. v. l. 20 also. — [a]) S छित्वा (for ततो). — [b]) N (Ś1 missing) फाल्गुनः (for फल्गुनः). T1 G2 (by transp.) प्रहसन्निव फल्गुनः. — [c]) K D2. 3 G3 °समं (for °समः). — [d]) B2. 4. 5 Dn1 D5. 6 अविध्यत (for अताडयत्). S प्रत्यविध्यस्तनांतरे.

24 For S cf. v. l. 20 also. — [a]) G2 M4. 5 सं- (for स). — After 24[ab], S reads 17–18. — [c]) D6 खमुत्पत्य (for अवप्लुत्य). — For 24[d], S subst.:

933* रथात्तूर्णममित्रहा ।
गदां चिक्षेप सहसा पार्थायामिततेजसे ।

25 [a]) B5 Dn D7. 11. 12 च; G1. 3 वि- (for तु). — [c]) S अर्जुनस्य (for °नेन). — [d]) Dn1 D5. 6 अथा(D5 °थो)गता; S जगाम सा; Ca अथागमत् (as in text). Cn cites अगमत्. — After 25, S ins.:

934* अथ खड्गं समुद्धृत्य शतचन्द्रं च भानुमत् ।
इयेष पाण्डवं हन्तुं कृपोऽलघुपराक्रमः ।
स शरद्वत्सुतस्तूर्णं महाचार्यः सुशिक्षितः ।
खेचरो विचचारैकः क्रमाच्चर्मासिधृग्विभुः ।
ततः क्षुराग्रैः कौन्तेयो दशभिः खड्गचर्मणी । [5]
निमेषादिव चिच्छेद तदद्भुतमिवाभवत् ।
विषण्णवदनस्तत्र युद्धादपगतोद्यमः ।
अश्वत्थाम्नस्तु स रथं कृपः समभिपुप्लुवे ।
स्वस्रीयस्य महातेजा जग्राह च धनुः पुनः ।

[ (L. 2) After line 2, G3 ins.:

935* तदा गाण्डीवनिर्मुक्तैः खड्गं तस्य न्यवारयत् ।

— (L. 4) M1. 2 खेचरीव; M3 खचरेव; M4. 5 खेचरेव (for खेचरो वि-). M1. 2 भुवि (for विभुः). — (L. 7) T2 M3 विवर्ण° (for विषण्ण°). — After the prior half of line 7, T G2 ins.:

936* विनाशात्खड्गचर्मणोः ।
दन्तैर्दन्तच्छदान्दष्ट्वा चुकोप हृदि दीर्घवत् ।
भवत्विति पुनश्चोक्त्वा.

T G2 युद्धापगमनोद्यतः (for the posterior half). — (L. 9) M1. 2 च पुनर्धनुः; M4 (*inf. lin.* as in text). सशरं धनुः (for च धनुः पुनः). ]

Thereafter S reads adhy. 57.

26 S om. 26–28. — [a]) B1. 5 Dn D3. 7–9. 11. 12 तं

C. 4. 1816
B. 4. 57. 41

ततो योधाः परीप्सन्तः शारद्वतममर्षणम् ।
सर्वतः समरे पार्थं शरवर्षैरवाकिरन् ॥ २६
ततो विराटस्य सुतः सव्यमावृत्य वाजिनः ।
यमकं मण्डलं कृत्वा तान्योधान्प्रत्यवारयत् ॥ २७
ततः कृपमुपादाय विरथं ते नरर्षभाः ।
अपाजह्रुर्महावेगाः कुन्तीपुत्राद्धनंजयात् ॥ २८

इति श्रीमहाभारते विराटपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## ५३

अर्जुन उवाच ।
यत्रैषा काञ्चनी वेदी प्रदीप्ताग्निशिखोपमा
उच्छ्रिता काञ्चने दण्डे पताकाभिरलंकृता ।
तत्र मां वह भद्रं ते द्रोणानीकाय मारिष ॥ १
अश्वाः शोणाः प्रकाशन्ते बृहन्तश्चारुवाहिनः ।
स्निग्धविद्रुमसंकाशास्ताम्रास्याः प्रियदर्शनाः ।
युक्ता रथवरे यस्य सर्वशिक्षाविशारदाः ॥ २
दीर्घबाहुर्महातेजा बलरूपसमन्वितः ।
सर्वलोकेषु विख्यातो भारद्वाजः प्रतापवान् ॥ ३

---

तु; B3.4 तत्र (for ततो). — d) D6 °व्रातैर् (for °वर्षैर्). B2 इवाकिरन् (for अवा°). D4 सर्वतः समवाकिरन्.

27 S om. 27 (cf. v. l. 26). — b) B5 Cn ऽसव्यं; D4 सर्वान्; Cs सव्यं (as in text). — c) D5 m.7 (m as in text).9 दक्षिणं; Cc.s यमकं (as in text). — d) D8 °षेधयत् (for °वारयत्).

28 S om. 28 (cf. v. l. 26). — b) D1.3 रथं तेन (for विरथं ते). D4 महारथाः (for नरर्षभाः). — c) K उपाजह्रुर्; B1.2.5 Dn D2.7.9–12 अपजह्रुर्; B4 D1.4 अपाजग्मुर्; Cc as in text. B3 D1–3 महावेगात्; D5.7 महाभागाः (D7 °ग).

Colophon missing in Ś1; S om. it. — *Sub-parvan:* K1 गोग्रह; B Dn D1–3.6.8.10–12 उत्तरगोग्रह. — *Adhy. name:* B1–3.5 Dn1 D5 कृपापयानं; B4 D10 कृपभंगः; D4.7–9 कृपपराजयः. — *Adhy. no.* (figures, words or both): K1 52; D5.10 50; D6.9 54; D7 49.

### 53

☞ This whole adhy. is missing in Ś1 (cf. v. l. 4. 51. 17).

1 Before the ref., N (Ś1 missing; B2 D3 om. lines 3–4; D4 om. 2–4) ins.:

937* वैशंपायन उवाच ।
कृपेऽपनीते द्रोणस्तु प्रगृह्य सुमहद्धनुः ।
अभ्यद्रवदनाधृष्यः शोणाश्वः श्वेतवाहनम् ।
स तु रुक्मरथं दृष्ट्वा गुरुमायान्तमन्तिकात् ।
अर्जुनो रथिनां श्रेष्ठ उत्तरं वाक्यमब्रवीत् ।

[ (L. 1) D2.8 वि° (for प्र°). B1 Dn D7.9.11.12 सशरं; B2 D5 रुचिरं; B3–5 D6 विपुलं (for सुमहद्). — (L. 2) K1 अनाधृष्यं; D7.9 दुराधर्षः (for अनाधृष्यः). — For lines 3–4 cf. 943* below. — (L. 4) B1 Dn D11.12 जयतां (for रथिनां). ]

On the other hand, S ins. before the ref. a passage given in App. I (No. 48). — B2 om. 1–19. — K D2.4.7–9 S om. the ref. — a) T1 G1.3 M1–3.5 वेदिः (for वेदी). — b) B5 दीप्ता चाग्निशिखो°; Dn1 ध्वजे यस्य प्रकाशते; S दृश्यतेग्निशिखो°. — c) K कांचनैर्दंडैः; B1.4.5 Dn D2.4–12 प्रवरे दंडे; B3 कूबरे दंडे; D1.3 प्रवरा येन (for काञ्चने दण्डे). — e) B1 Dn2 D11.12 अत्र (for तत्र). — f) B1.3 Dn1 सारथे; D4.7.9 मानद (for मारिष). S द्रोणं यास्यामि सत्तमं. — After 1, S ins.:

938* भारद्वाजेन योत्स्येऽहमाचार्येण महात्मना ।

2 B2 om. 2 (cf. v. l. 1). — a) S अमी (for अश्वाः). — b) D4 चारुदर्शनाः; D10 साधुवाहिनः. S तुरगाः साधुवाहिनः (G2 °हनाः). — S transp. 2cd and 2ef. — c) B3.4 D4 स्निग्धा वि°; S °वैडूर्यसंकाशः. — d) D4.10 ताम्राक्षाः. K B4 चारुदर्शनाः. S ताम्राक्षः प्रियदर्सनः. — After 2ef (transposed), S ins.:

939* यत्तो रथवरे शूरः सर्वशस्त्रभृतां वरः ।

3 B2 om. 3 (cf. v. l. 1). — ab) S पीनदीर्घभुजः श्रीमान् (T2 G2 आदित्य इव तेजस्वी) बलवीर्यसमन्वितः. T1 *repeats* 3ab (with v. l. as in T2 G2). — cd) B1.5 Dn D11.12 विक्रांतो; D8 विज्ञातो (for विख्यातो). S सर्वलोक-

वेदास्तथैव चत्वारो ब्रह्मचर्यं तथैव च ॥ ४
ससंहाराणि दिव्यानि सर्वाण्यस्त्राणि मारिष ।
धनुर्वेदश्च कात्स्‍र्न्येन यस्मिन्नित्यं प्रतिष्ठितः ॥ ५
क्षमा दमश्च सत्यं च आनृशंस्यमथार्जवम् ।
एते चान्ये च बहवो गुणा यस्मिन्द्विजोत्तमे ॥ ६
तेनाहं योद्धुमिच्छामि महाभागेन संयुगे ।
तस्मात्त्वं प्रापयाचार्यं क्षिप्रमुत्तर वाहय ॥ ७
वैशंपायन उवाच ।
अर्जुनेनैवमुक्तस्तु वैराटिर्हेमभूषितान् ।
चोदयामास तानश्वान्भारद्वाजरथं प्रति ॥ ८
तमापतन्तं वेगेन पाण्डवं रथिनां वरम् ।
द्रोणः प्रत्युद्ययौ पार्थं मत्तो मत्तमिव द्विपम् ॥ ९
ततः प्राध्मापयच्छङ्खं भेरीशतनिनादितम् ।
प्रचुक्षुभे बलं सर्वमुद्धूत इव सागरः ॥ १०
अथ शोणान्सदश्वांस्तान्हंसवर्णैर्मनोजवैः ।
मिश्रितान्समरे दृष्ट्वा व्यस्मयन्त रणे जनाः ॥ ११
तौ रथौ वीर्यसंपन्नौ दृष्ट्वा संग्राममूर्धनि ।
आचार्यशिष्यावजितौ कृतविद्यौ मनस्विनौ ॥ १२ C. 4. 1837 B. 4. 58. 14 K. 4. 59. 38

---

($M_{1-3.5}$ °के)धनुःश्रेष्ठः सर्वलोकेषु पूजितः.

4 $B_2$ om. 4 (cf. v. l. 1). — $^{ab}$) S अंगिरोशनसोस्तुल्यो नये वुद्धिमतां वरः. — $^{cd}$) $D_{1-3}$ तथोत्तमं (for तथैव च). S चत्वारो निखिला वेदाः सांगोपांगाः सलक्षणाः.

5 $B_2$ om. 5 (cf. v. l. 1). — S transp. $5^{ab}$ and $5^{cd}$. — $^{ab}$) $D_{1.3}$ संतिष्ठंति हि (for ससंहाराणि). K $B_1$ Dn $D_{7.9.11.12}$ transp. दिव्यानि and सर्वाणि. $B_5$ सारथे; $D_4$ यान्युत; $D_5$m यान्यपि; $D_{7.9}$ यानि च; Cs मारिष (as in text). S भारद्वाजे समस्तानि सर्वाण्येतानि सांप्रतं. — $^{d}$) S ब्राह्मं चास्त्रं ($T_1$ $G_2$ $M_{1.5}$ ब्रह्मास्त्रं च; $M_2$ ब्राह्ममस्त्रं) प्रतिष्ठितं. — After $5^{cd}$, S ins.:

940* पुराणमितिहासं च अर्थविद्या च मानवी ।
[ $T_2$ $M_5$ इतिहासश्च (for °सं च). ]

6 $B_2$ om. 6 (cf. v. l. 1). — $^{a}$) $D_7$ original धर्मार्जवश्च सत्यं च is cancelled, and क्षमा दया शमः सत्यं is noted in marg. $G_{1.3}$ दया च (for दमश्च). — $^{b}$) $D_7$ orig. दमानृशंस्यमेव च is cancelled, and text reading is noted in marg. S तेजो मार्दवमार्जवं ($M_{1.2}$ मार्दवं ह्रीरचापलं). — $^{cd}$) $B_{1.4.5}$ D यस्मिन्नित्यं ($D_{1-3}$ by transp. नित्यं यस्मिन्) द्विजे गुणाः ($D_4$ प्रतिष्ठिताः) (for $^{d}$). S प्रतिष्ठिता गुणा यस्मिन्बहवो द्विजसत्तमे. — After 6, S ins.:

941* यस्याहमिष्टः सततं मम चेष्टः सदा च यः ।

7 $B_2$ om. 7 (cf. v. l. 1). — $^{ab}$) S क्षत्रधर्मं पुरस्कृत्य तेन योत्स्यामि ($M_3$ योत्स्ये ह) संयुगे. — $^{c}$) $B_{1.5}$ $D_{11.12}$ तं; $B_3$ मां (for त्वं). $D_{7.9}$ तं ($D_7$ त्वं) मां संप्रापयाचार्यं; S आचार्यं प्रापयेदानीं. — $^{d}$) $Dn_1$ $D_{10}$ वाहनं; $D_4$ मे रथं (for वाहय). S ममोत्तर महारथं. — After 7, S ins.:

942* अपरं पश्य संग्राममद्भुतं मम तस्य च ।

8 $B_2$ om. 8 (cf. v. l. 1). $T_1$ M om. the ref. — $^{ab}$) $B_{1.4.5}$ D (except $D_6$) °भूषणान् (for °भूषितान्). S उत्तरस्त्वे($M_5$ °श्वै)वमुक्तोश्वांश्चोदयामास तं ($G_3$ सं-) प्रति. — $G_2$ $M_3$ om. $8^{cd}$. — $^{c}$) $D_{1-4.7.9}$ नोदयामास; $D_8$ प्रेरयामास. S ($G_2$ $M_3$ om.) आजगामार्जुनरथो.

9 $B_2$ om. 9 (cf. v. l. 1). — $^{a}$) $M_{1.5}$ संप्रेक्ष्य (for वेगेन). — $^{b}$) S सरथं रणे (for रथिनां वरम्). — $^{c}$) $K_2$ प्रत्याययौ; S -प्य($G_2$ द्य)भ्यद्रवत् ($G_{1.3}$ °पतत्) (for प्रत्युद्ययौ). $D_5$ यत्तो; $D_6$ क्रुद्धो (for पार्थं). — After 9, S ins.:

943* स तु रुक्मरथं दृष्ट्वा कौन्तेयं समभिद्रुतम् ।
आचार्यं तं महाबाहुः प्राञ्जलिर्वाक्यमब्रवीत् ।
[ Cf. lines 3–4 of 937*. ]

Thereafter S reads 16–17.

10 $B_2$ om. 10 (cf. v. l. 1). — $^{a}$) $D_{1-5.8}$ G $M_{3-5}$ प्रध्मापयच्. — $^{b}$) K $B_1$ $Dn_1$ $D_{1.3.4.7.9-12}$ °निनादिनं. S भेरीपणवनादितं. — $^{c}$) S व्यक्षोभयद् (for प्रचुक्षुभे). — $^{d}$) $D_{1.3}$ S उद्धूतमिव सागरं. Cv cites उद्धूत इव (as in text). — After 10, S reads 18–19.

11 $B_2$ om. 11 (cf. v. l. 1). — $^{a}$) S अश्वाञ्शोणान्महावेगान्. — $^{b}$) $G_1$ हयान्स्वर्णैः. $D_{7.9}$ महाजवैः; $D_{10}$ हयोत्तमैः; S तु (T $G_{2.3}$ च) वाजिभिः. — $^{d}$) $D_{1.3.8}$ $G_{1.3}$ विस्मयंत. S पृथग् (for रणे). $K_2$ $B_{1.3.4}$ D (except $D_{5.7.9}$) नराः; $B_5$ नृपाः (for जनाः). — After 11, S reads 14, 13, 20.

12 $B_2$ om. 12 (cf. v. l. 1). — $^{a}$) S वीरौ (for रथौ). K सूर्यसंकाशौ (for वीर्यसंपन्नौ). — $^{c}$) S रथिनौ (for अजितौ). — $^{d}$) S तर° ($M_4$ *inf. lin.* तप°) (for मन°).

13 $B_2$ om. 13 (cf. v. l. 1). — For sequence of S

C 4. 1638
B 4. 58. 15
K. 4. 59. 86

समाश्लिष्टौ तदान्योन्यं द्रोणपार्थौ महाबलौ ।
दृष्ट्वा प्राकम्पत मुहुर्भरतानां महद्बलम् ॥ १३
हर्षयुक्तस्तथा पार्थः प्रहसन्निव वीर्यवान् ।
रथं रथेन द्रोणस्य समासाद्य महारथः ॥ १४
अभिवाद्य महाबाहुः सान्त्वपूर्वमिदं वचः ।
उवाच श्लक्ष्णया वाचा कौन्तेयः परवीरहा ॥ १५
उषिताः स्म वने वासं प्रतिकर्म चिकीर्षवः ।
कोपं नार्हसि नः कर्तुं सदा समरदुर्जय ॥ १६
अहं तु प्रहृते पूर्वं प्रहरिष्यामि तेऽनघ ।
इति मे वर्तते बुद्धिस्तद्भवान्कर्तुमर्हति ॥ १७
ततोऽस्मै प्राहिणोद्द्रोणः शरानधिकविंशतिम् ।
अप्राप्तांश्चैव तान्पार्थश्चिच्छेद कृतहस्तवत् ॥ १८
ततः शरसहस्रेण रथं पार्थस्य वीर्यवान् ।
अवाकिरत्ततो द्रोणः शीघ्रमस्त्रं विदर्शयन् ॥ १९
एवं प्रवृत्ते युद्धे भारद्वाजकिरीटिनोः ।
समं विमुञ्चतोः संख्ये विशिखान्दीप्ततेजसः ॥ २०
तावुभौ ख्यातकर्माणावुभौ वायुसमौ जवे ।
उभौ दिव्यास्त्रविदुषावुभावुत्तमतेजसौ ।
क्षिपन्तौ शरजालानि मोहयामासतुर्नृपान् ॥ २१
व्यस्मयन्त ततो योधाः सर्वे तत्र समागताः ।

cf. v. l. 11. — a) K समा°; B3 D7.9 (*sup. lin.* as in text) तथा°; S (except G1) इवा° (for तदा°). — b) K B4 D6 °रथौ (for °बलौ). S द्रोणपांडवयोर्ध्वजौ. — c) K1 प्रकंपत; Cn प्राकम्पत्; Cs प्राकम्पयत्. G1 चमूः (for मुहुः). — d) K2 D1.4.7.8.10 G3 M1.2.5 Cn भारतानां. K B3 (by transp.) बलं महत्; B4.5 D4.5 महाबलं; S महाचमूः (G1 मुहुर्मुहुः).

14 B2 om. 14 (cf. v. l. 1). For sequence of S, cf. v. l. 11. S transp. 14$^{ab}$ and 14$^{cd}$. — a) B (B2 om.) Dn D5–7.9.11.12 ततः; D1–4.8.10 G1.3 M तदा (for तथा). S आचार्यः (for पार्थः). — b) S प्रत्यगृह्णत पांडवं. — c) S पार्थस्य (for द्रोणस्य). — d) S समाह- (M1–3 °प)त्य परंतपः.

15 B2 (cf. v. l. 1) S om. 15. — b) B1 Dn2 D6.7.9.11.12 साम° (for सान्त्व°).

16 B2 om. 16 (cf. v. l. 1). For sequence of S, cf. v. l. 11. — a) K B (B2 om.) Dn D1.3–6.8.10–12 स्मो (for स्म). D5m उषितोस्मि. — b) D5m.9 त्वत्प्रसादादरिंदम. Cc.s cite प्रतिकर्म, Cv प्रतिकर्म चिकीर्षवः (as in text). — c) D2 तं; D5m मे (for नः). B5 D7.9 (by transp.) कर्तुं नः (D9 मे). D6 (by transp.) कर्तुं नार्हसि कोपं नः. — d) K G3 M3 °दुर्मद (K2 M3 °दः); D1–3 °दुर्जयः; G1 °दुर्दम.

17 B2 om. 17 (cf. v. l. 1). For sequence of S, cf. v. l. 11. — a) D6 त्वया (for अहं). Dn2 D11.12 प्रहते; D4 प्रहतः; D10 प्रकृते; S ताडितः; Cc as in text. — b) D6 अहं तव (for तेऽनघ). S (except G1.2) प्रहरेयं तवानघ. — Ca cites 17$^{ab}$ as in text. — d) S क्षंतुमर्हति (M2.5 अनुमन्यतां).

18 B2 om. 18 (cf. v. l. 1). For sequence of S, cf. v. l. 11. M om. 18–19. — a) B4 D11.12 अस्मिन्; D6 असौ; T G तु (for अस्मै). — K D10 (hapl.) om. 18$^{b}$–19$^{c}$. — b) D1.3 °विंशतिः; D5 G °विंशतीन्; D7.8 °विंशति; Cv as in text. — c) B4 अपास्तान् (for अप्राप्तान्). T G एव (for चैव). — d) T1 G2 चिच्छेद लघुहस्तवान्.

19 B2 M om. 19 (cf. v. l. 1, 18). K D10 om. 19$^{abc}$ (cf. v. l. 18). For sequence of S, cf. v. l. 11. — a) Dn2 T1 G2 शत° (for शर°). — c) D1–3 अवाकिरन्. D6 रणे (for ततो). D4 अमेयात्मा (for ततो द्रोणः). — d) D10 शीघ्रास्त्रत्वं (for शीघ्रमस्त्रं). D6 T G1.2 हस्तं; D7.9 शस्त्रं (for अस्त्रम्). B3 D1–5 T2 G2 प्रदर्शयन्; Dn1 D10 व्यदर्शयन्; D7.9 उदीरयन्. — After 19, N (Ś1 missing) ins.:

944* हयांश्च रजतप्रख्यान्कङ्कपत्रैः शिलाशितैः ।
अवाकिरदमेयात्मा पार्थं संकोपयन्निव ।

20 For sequence of S, cf. v. l. 11. — ab) D4.8 प्रवर्तिते; G1 प्रवर्तते (for प्रवृत्ते). D4 युद्धे (for युद्धं). D2 एवं प्रवर्तते बुद्धिः. M तत्तु युद्धं प्रववृते आचार्यस्यार्जुनस्य च. — c) S विमुंचतोः शरानुग्रान्. — d) M1–3 विविधान् (for विशिखान्). B2 D5.6 अग्नि° (for दीप्त°).

21 a) S उभौ विश्रुतकर्माणौ. — b) D1.2.4.7–9 वात° (for वायु°). S उभौ श्रमगतौ जये (M2.3 रणे). — c) B3.4 D5.6.7m °विद्वांसौ (for °विदुषौ). S उभावतिरथौ लोके (G1.3 वीरौ). — d) D5.6 उभावतुलतेजसौ (D6 °विक्रमौ); S उभौ परपुरंजयौ. — e) G तान्शरान्दृष्ट्वा (for शरजालानि). — f) B5 भृशं; D8 नरान् (for नृपान्). T1 G2 M4.5 क्षत्रियान्मोह आविशत्; T2 G1.3 M1.2 क्षत्रिया

शरान्विसृजतोस्तूर्णं साधु साध्विति पूजयन् ॥ २२
द्रोणं हि समरे कोऽन्यो योद्धुमर्हति फल्गुनात् ।
रौद्रः क्षत्रियधर्मोऽयं गुरुणा यदयुध्यत ।
इत्यब्रुवञ्जनास्तत्र संग्रामशिरसि स्थिताः ॥ २३
वीरौ तावपि संरब्धौ संनिकृष्टौ महारथौ ।
छादयेतां शरव्रातैरन्योन्यमपराजितौ ॥ २४
विस्फार्य सुमहच्चापं हेमपृष्ठं दुरासदम् ।
संरब्धोऽथ भरद्वाजः फल्गुनं प्रत्ययुध्यत ॥ २५
स सायकमयैर्जालैरर्जुनस्य रथं प्रति ।
भानुमद्भिः शिलाधौतैर्भानोः प्रच्छादयत्प्रभाम् ॥ २६
पार्थं च स महाबाहुर्महावेगैर्महारथः ।
विव्याध निशितैर्बाणैर्मेघो वृष्ट्येव पर्वतम् ॥ २७
तथैव दिव्यं गाण्डीवं धनुरादाय पाण्डवः ।
शत्रुघ्नं वेगवद्धृष्टो भारसाधनमुत्तमम् ।
विससर्ज शरांश्चित्रान्सुवर्णविकृतान्बहून् ॥ २८
नाशयञ्शरवर्षाणि भारद्वाजस्य वीर्यवान् ।
तूर्णं चापविनिर्मुक्तैस्तदद्भुतमिवाभवत् ॥ २९
स रथेन चरन्पार्थः प्रेक्षणीयो धनंजयः । C 4 1857 B 4 58.33 K. 4.59 52

मोहमाविशन्; M3 क्षत्रियाणां महामृधे. — K2 ins. after 21: D2.4.5.7–9, after $23^{ab}$:

945* अर्जुनं वा विना द्रोणात्कोऽन्यो योद्धुं रणेऽर्हति ।

22 $^{a}$) D1–3.7–9 विस्मयंत (D1.3 °तः). K रणे; B3 तदा (for ततो). S व्य(G1.2 वि)स्मयन्त जनाः सर्वे. — $^{b}$) B1 Dn D1–4.8.11.12 ये तत्रासन्; D10 ये च तत्र (for सर्वे तत्र). S द्रोणार्जुनसमागमे. — $^{cd}$) D6 शीघ्रं (for तूर्णं). B Dn D2.4–8.10–12 अपूजयन् (for पूज°). S नराणां सृजतां (T2 G2.3 °णां ब्रुवतां; G1 शराणामब्रुवन्) वाक्यं श्रूयते सुमहा(T1 स महा-; G3 सुमहान्)स्वनः.

23 $^{a}$) D7 द्रोणं तु; D10 द्रोणेन (for द्रोणं हि). — $^{b}$) B1.3 D1–4.8 इच्छति (for अर्हति). S अथार्जुनात् (for फल्गुनात्). — After $23^{ab}$, D2.4.5.7–9 ins. 945*. — $^{d}$) S (except T G2) गुरुं वै (for गुरुणा). B4 D10 यत्र युध्यत (D10 °ते); D1.3.4 सह यु(D4 यो)ध्यते (D1 °त); S यदयोधयत् (for यदयुध्यत). — $^{e}$) Dn2 D11.12 इति ब्रुवञ्.

24 $^{a}$) D6 तौ वीरौ (by transp.). B2 Dn D5.7.9 अभि-; B5 D1–4.6.8.10 अति-; D11.12 अधि- (for अपि). S तौ समीक्ष्य तु (G1.3 सु-) सं°. — $^{b}$) K B2 संनिकृष्य; D7 (m as in text).9 °विष्टौ; G1.3 संहृष्टौ तौ. Dn D11.12 महाभुजौ. — $^{c}$) D8 छादयंतौ. S शरौघैस्तौ. — After 24, S ins.:

946* संयुगे संचकाशेतां कालसूर्याविवोदितौ ।

25 $^{a}$) T1 तन्; T2 G2 तं (for सु-). G1.3 M (except M4) स विष्फार्य महच्चापं. — $^{b}$) T G2 M1.2.4.5 (*inf. lin.* as in text) °नमं (for °सदम्). — $^{c}$) B1.2.5 Dn D1–5.8.10–12 भा(D4 भ)रद्वाजोथ (Dn1 °पि) संक्रुद्धः (B5 D1–3.5.8.10 संरब्धः); S संरब्धस्तु (T G2 सुसंरब्धस्) तथा (T2 G1 M5 तदा; G3 ततो) द्रोणः. — $^{d}$) N (Ś1 missing) फाल्गुनं (K1 फल्गुणं). B1 Dn D1–4.7.9.11.12 प्रत्य(D4 सम)विध्यत. S (by transp.) प्रत्ययुध्यत फल्गुनं (M1 पांडवं).

26 $^{d}$) S बाणैः (M4 *sup. lin.* 5 द्रोणः) (for भानोः). B1.3.4 Dn2 D1.3.5–12 T2 M1–3 प्राच्छादयत्; B5 Dn1 D2 Cc आच्छाद°. S दिशः (M1.2 द्विजः) (for प्रभाम्).

27 $^{a}$) B1.3.5 D (except D6) सु- (for स). B2 D3 °बाहो; B4 D7–9 °बाहुं. S अर्जुनस्तु तदा (T1 G2 तथा; T2 G3 ततो) द्रोणं. — $^{b}$) D1.8 वेगेन च; G1.3 महावेगो (for °वेगैः). — $^{c}$) S शतशो (for निशितैर्). — $^{d}$) S धाराभिरिव पर्वतं. — After 27, S ins.:

947* कालमेघ इवोष्णान्ते फल्गुनः समवाकिरत् ।
तस्य जाम्बूनदमयैः शितैश्चापच्युतैः शरैः ।
प्रच्छादयद्रथश्रेष्ठं भारद्वाजोऽर्जुनस्य वै ।

[ (L. 2) T1 G1.3 चित्रैश् (for शितैश्). — (L. 3) T2 G2 प्राच्छादयद्. M4 अमेयात्मा (for रथश्रेष्ठं). ]

28 $^{a}$) D9 गांजीवं. — $^{b}$) T1 G3 M2.4.5 आयम्य; M1.3 उद्यम्य (for आदाय). B2 D5.6 T1 G1.3 M2.4.5 चार्जुनः; B4.5 Dn2 D1–4.7–9.11.12 फाल्गुनः; T2 G2 सोर्जुनः (for पाण्डवः). — $^{c}$) B2.4.5 Dn1 D6.7.9 वेगवान् (for °वद्). B2 D6 दृष्ट्वा; B3.4 दृष्टः; D10 कृत्वा; M1 स्पृष्ट्वा; M2 स्रष्टुं; M3 सृष्टो; M4 सृष्टं (for हृष्टः). — After $28^{cd}$ S ins.:

948* शोभते स्म महाबाहुर्गाण्डीवं विक्षिपन्धनुः ।

— $^{e}$) K B2 D10 तीक्ष्णान् (for चित्रान्). S शरांश्च विसृजंश्चित्रान्.

29 $^{ab}$) B2–4 D5.6 शमयञ्; Dn1 D1.2.8.10 नाशयच्. D7 शरजालानि. S प्र(T G2 प्रा)च्छादयदमेयात्मा भा(T1 G1 M4.5 भ)रद्वाजरथं प्रति (M4 तदा). — D4 om. $29^{c}$–$30^{b}$; D9 om. $29^{c}$–$30^{d}$. — $^{cd}$) B2–4 D5.6 विमुक्तानि

C. 4 1858
B. 4 58 33
K. 4. 59. 52

युगपद्दिक्षु सर्वासु सर्वशस्त्राण्यदर्शयत् ॥ ३०

एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः ।
नादृश्यत तदा द्रोणो नीहारेणेव संवृतः ॥ ३१

तस्याभवत्तदा रूपं संवृतस्य शरोत्तमैः ।
जाज्वल्यमानस्य यथा पर्वतस्येव सर्वतः ॥ ३२

दृष्ट्वा तु पार्थस्य रणे शरैः स्वरथमावृतम् ।
स विस्फार्य धनुश्चित्रं मेघस्तनितनिस्वनम् ॥ ३३

अग्निचक्रोपमं घोरं विकर्षन्परमायुधम् ।
व्यशातयच्छरांस्तांस्तु द्रोणः समितिशोभनः ।
महानभूत्ततः शब्दो वंशानामिव दह्यताम् ॥ ३४

जाम्बूनदमयैः पुङ्खैश्चित्रचापवरातिगैः ।
प्राच्छादयदमेयात्मा दिशः सूर्यस्य च प्रभाम् ॥ ३५

ततः कनकपुङ्खानां शराणां नतपर्वणाम् ।
वियच्चराणां वियति दृश्यन्ते बहुशः प्रजाः ॥ ३६

द्रोणस्य पुङ्खसक्ताश्च प्रभवन्तः शरासनात् ।
एको दीर्घ इवादृश्यदाकाशे संहतः शरः ॥ ३७

एवं तौ स्वर्णविकृतान्विमुञ्चन्तौ महाशरान् ।
आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ॥ ३८

---

(for विनिर्मुक्तैः). S द्रोणचापविनिर्मुक्तान्बाणैर्बाणानवारयत्.

30 $D_{4}$ om. $30^{ab}$; $D_{3.9}$ om. 30 (cf. v. l. 29). — $^{a}$) S सरथो व्यचरत् ($G_{1}$ विचरन्) पार्थः. — $^{b}$) $D_{5}$ बभूव ह; S महारथः (for धनंजयः). — $^{c}$) $D_{7}$ बाणैश्च (for सर्वासु). — $^{d}$) $B_{1.2}$ Dn $D_{11.12}$ S सर्वतोस्त्राणि; $D_{1.2}$ सर्वशोस्त्राणि (for सर्वशस्त्राणि). K $B_{4.5}$ $D_{2.4-6.8.10}$ दर्शयन्; S अवासृजत् ($G_{1}$ $M_{5}$ °किरत्) (for अदर्शयत्). — After 30, S ins.:

949* आददानं शरान्घोरान्संदधानं च पाण्डवम् ।
विसृजन्तं च कौन्तेयं न स्म पश्यन्ति लाघवात् ।

31 $^{b}$) B (except $B_{1}$) $D_{6}$ $M_{2.4.5}$ धनंजयः; $D_{5.7.9}$ स सर्वशः (for समन्ततः). — $^{c}$) $D_{1-5.7.9.10}$ $G_{1.3}$ $M_{4.5}$ ततो (for तदा). — $^{d}$) $G_{1.3}$ नीहारैरिव. S पर्वतः. — After 31, S ins.:

950* मरीचिविकचस्येव राजन्भानुमतो वपुः ।
आसीत्पार्थस्य सुमहद्वपुः शरशतार्चिषः ।
क्षिपतः शरजालानि कौन्तेयस्य महात्मनः ।
[ (L. 2) T $G_{2.3}$ शरशताचितं ($G_{3}$ °तः). ]

32 S om. $32^{a}$–$33^{b}$. — $^{c}$) $B_{1.2.4}$ Dn $D_{11.12}$ तदा (for यथा). $D_{6}$ यथा जाज्वल्यमानस्य (by transp.). — $^{d}$) $B_{4}$ $D_{6}$ सर्वशः.

33 S om. $33^{ab}$ (cf. v. l. 32). — $^{a}$) $D_{1-4}$ स दृष्ट्वा तु रणे पार्थः; $D_{6}$ (by transp.) दृष्ट्वा पार्थस्य तु रणे. — S reads $33^{cd}$ after $34^{ab}$. — $^{c}$) $D_{3}$ विस्फार्य च (for स विस्फार्य). $B_{3}$ महच्चापं (for धनुश्चित्रं). $B_{1}$ Dn $D_{1-5.8-12}$ श्रेष्ठं (for चित्रं). S विकृष्य सुमहच् ($G_{2}$ $M_{1-3}$ बलवच्) चापं. — $^{d}$) N (mostly) °निःस्वनं. — After 33, S ins.:

951* असकृन्मुञ्चतो बाणान्ददृशुः कुरवो युधि ।
दिक्षु सर्वासु विपुलः शुश्रुवे चरतस्तदा ।
द्रोणस्यापि धनुर्घोषो विद्युत्स्तनितनिस्वनः ।
अभवद्विस्मयकरः सैन्यानां भरतर्षभ ।
[ (L. 2) $T_{1}$ $G_{1}$ च रवस्तदा; $T_{2}$ $G_{2}$ -थ जनैस्तदा (for चरतस्तदा). $M_{4.5}$ श्रूयते सुमहास्वनः (for the posterior half). ]

34 S transp. $34^{ab}$ and $34^{cd}$. — $^{a}$) $D_{5}$ m. $_{7.9}$ अग्निचक्रमिवाविद्धं. — $^{b}$) B Dn $D_{5.11.12}$ व्यकर्षत् (for विक°). S मं($G_{1}$ कुं)डलीकृतकार्मुकं ($T_{1}$ °माहवे; $T_{2}$ G °मव्रणं). — $^{cd}$) $D_{6.10}$ तीक्ष्णान् (for तांस्तु). $D_{6}$ समर° (for समिति°). S तान्विधूय ($M_{1.2}$ °धून्वञ्) शरान्घोरान् ($T_{1}$ $G_{1}$ °न्द्रोणो; $M_{4}$ °न्वेगान्) द्रोणोपि ($T_{1}$ $G_{1}$ घोरान्स) समितिंजयः. — After $34^{cd}$, S (which om. $34^{ef}$) ins.:

952* बभासे तिमिरं व्योम्नि विधूय सविता यथा ।

— $^{f}$) $D_{4}$ दीर्यतां (for दह्यताम्).

35 $^{ab}$) $Dn_{1}$ corrupt. $D_{1}$ कुंभैः (for पुङ्खैः). $B_{1}$ $Dn_{2}$ $D_{10-12}$ °विनिर्गतैः; $D_{2.9}$ °परातिगैः (for °वरातिगैः). S तस्य जांबूनदमयैर्दीप्तैरग्निशिखोपमैः. — $^{c}$) $G_{1.3}$ M प्रच्छादयद्. — $^{d}$) $K_{1}$ तदा (for दिशः). $D_{4-6}$ T $G_{2}$ $M_{2}$ प्रभाः (for प्रभाम्).

36 $^{c}$) S वियद्गतानां चरतां (T $G_{2}$ च तदा). — $^{d}$) $D_{10}$ नश्यंते (for दृश्यन्ते). B D $G_{1.3}$ $M_{4.5}$ बहवः (for बहुशः). B D $G_{3}$ $M_{4}$ व्रजाः; $T_{2}$ $G_{1.2}$ $M_{1-3}$ प्रभाः (for प्रजाः).

37 $^{ab}$) K °सक्तश्च; $D_{4.7.9}$ °संसक्ताः. S शरासनात्तु द्रोणस्य प्रभवंति स्म सायकाः. — $^{c}$) T एक- (for एको). $K_{1}$ $D_{1.2.5}$ अदृश्यः; $K_{2}$ अदृश्य-; $D_{4.7.9}$ आकाशे; $D_{3}$ अपश्यत्; S अपांगात् ($T_{1}$ अपांगाः; $G_{2}$ अभांतः) (for अदृश्यत्). — $^{d}$) K प्रकाशः; $D_{4}$ दृश्यते (for आकाशे). S प्रदृश्यंते ($M_{4}$ दृश्यंते स्म) महाशराः. — After 37, S ins.:

953* आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ।

38 $^{a}$) S सुवर्ण° (for तौ स्वर्ण°). — $^{b}$) $T_{1}$ $G_{2.3}$

शरास्तयोश्च विबभुः कङ्कबर्हिणवाससः ।
पङ्क्तयः शरदि खस्थानां हंसानां चरतामिव ॥ ३९
युद्धं समभवत्तत्र सुसंरब्धं महात्मनोः ।
द्रोणपाण्डवयोर्घोरं वृत्रवासवयोरिव ॥ ४०
तौ गजाविव चासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ४१
तौ व्यवाहरतां शूरौ संरब्धौ रणशोभिनौ ।
उदीरयन्तौ समरे दिव्यान्यस्त्राणि भागशः ॥ ४२
अथ त्वाचार्यमुख्येन शरान्सृष्टाञ्शिलाशितान् ।
न्यवारयच्छितैर्बाणैरर्जुनो जयतां वरः ॥ ४३
दर्शयन्नैन्द्रिरात्मानमुग्रमुग्रपराक्रमः ।
इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत् ॥ ४४
जिघांसन्तं नरव्याघ्रमर्जुनं तिग्मतेजसम् ।
आचार्यमुख्यः समरे द्रोणः शस्त्रभृतां वरः ।
अर्जुनेन सहाक्रीडच्छरैः संनतपर्वभिः ॥ ४५
दिव्यान्यस्त्राणि मुञ्चन्तं भारद्वाजं महारणे ।
अस्त्रैरस्त्राणि संवार्य फल्गुनः समयोधयत् ॥ ४६
तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः ।
अमर्षिणोस्तदान्योन्यं देवदानवयोरिव ॥ ४७
ऐन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः । C. 4. 1878 B. 4. 58 52 K. 4. 59 75

शराञ्शितान्; $T_{2}$ $M_{4.5}$ शरान्बहून्; $G_{1}$ शिताञ्शरान्; $M_{1-3}$ बहूञ्शरान् (for महाशरान्). — $^{c}$) $D_{6}$ आवृतं (for संवृतं).

39 $^{a}$) S transp. शराः and तयोः. K ते; $B_{1-3}$ Dn $D_{11.12}$ तु (for च). $T_{2}$ $G_{2}$ बहुशः; $G_{1.3}$ बहवः (for विबभुः). — $^{c}$) $B_{3}$ $D_{2.6}$ $T_{2}$ $G_{2}$ पंक्तिः (for पङ्क्तयः). K रम्याणां; T $G_{2}$ हंसानां; $G_{1.3}$ M मत्तानां (for खस्थानां). $D_{1.3}$ पंक्तयः शिरसिस्थानां; $D_{4}$ पंक्तयो हि शरत्काले. — $^{d}$) खगानां पक्षिणामिव; S सारसानामिवांबरे.

40 $^{a}$) $B_{4}$ तयोर्युद्धं समभवत्; S तत्तु युद्धं पुनर्घोरं ($G_{3}$ $M_{1}$ महाघोरं; $M_{4.5}$ महद्घोरं). — $^{b}$) $D_{5}$ संरब्धं सु°; $D_{6}$ सुसंवृद्धं (for सुसंरब्धं). $D_{5}$ m. 7. 9 S तयोः संरब्धयोर्महत् ($D_{5}$ m. 7. 9 °योरभूत्). — $^{c}$) S अत्यद्भुतमचिंत्यं च.

41 $^{a}$) K संसज्य; $B_{3}$ $D_{6}$ संरब्धौ; $B_{4}$ $D_{5.10}$ संक्रुद्धौ (for चासाद्य). $B_{2}$ मत्ताविव सुसंक्रुद्धौ; S महागजाविवासाद्य. Ccp cites मत्ताविव.

42 S reads 42 after 45 ($G_{2}$ $M_{3}$, after 955*). — $^{a}$) K $B_{2.4}$ $D_{5.6}$ व्यावहरतां; $D_{1.3.4.9}$ व्यवह°; S व्य($G_{2}$ द)दारयतां. K शीघ्रं; $B_{5}$ $Dn_{1}$ युद्धे; $Dn_{2}$ $D_{11.12}$ युद्धं; $T_{1}$ $G_{2}$ वीरौ (for शूरौ). $B_{2.4}$ $D_{5.6}$ उभौ व्यच($D_{5}$ प्रह)रतां शूरौ. — $^{b}$) S संनद्धौ (for संरब्धौ). — $^{c}$) $D_{1}$ उदीर्यतां हि; $D_{2}$ उदीरयेतां; $D_{3}$ उदीरयंतां. S दिव्यानि (for समरे). — $^{d}$) S ब्रह्मा($M_{1-3}$ सर्वा; $M_{5}$ शस्त्रा)-ण्यस्त्राणि(for दिव्यान्य°). — After 42, S ins.:

954* पार्थस्तु समरे शूरो दर्शयन्वीर्यमात्मनः ।
स महास्त्रैर्महात्मानं द्रोणं प्राच्छादयच्छरैः ।
[ (L. 2) $M_{1.3.5}$ महाबाहुर् (for °त्मानं). ]

In S (which om. $46^{ab}$), 954* is followed by $46^{cd}$.

43 $^{a}$) $D_{1.3}$ om. तु. $D_{2.7-9}$ स तथा (for अथ तु). — $^{b}$) $D_{1-3.7.9}$ शरासनात् (for शिला°). — $^{c}$) $Dn_{2}$ $D_{8}$ निवारयच्; S अवारयच् ($M_{2}$ अवाकिरच्).

44 $^{a}$) B Dn $D_{5.6.11.12}$ वीक्षमाणानां; $D_{1.3}$ इंद्रमात्मानं; $D_{2.4.5}$ m. 7–9 रौद्रमात्मानं; S ऐंद्रमात्मानं. — $^{b}$) B $Dn_{2}$ $D_{6.11.12}$ अस्त्रम्; $Dn_{1}$ शास्त्रम्; $D_{5}$ शस्त्रम् (m as in text); Cv उग्रम् (as in text). $Dn_{1}$ $D_{5.8}$ °पराक्रमं. $D_{3}$ समन्युश्च पराक्रमः. — $^{d}$) $G_{1.3}$ बीभत्सुः (for बहुभिः). $B_{2}$ $D_{5.6}$ स; T G तु (for च).

45 $^{b}$) K $T_{1}$ G $M_{3}$ जयतां वरं; $D_{7}$ $T_{2}$ $M_{1.2}$ भीमतेजसं; $M_{4.5}$ भीमदर्शनं; Ca तिग्म° (as in text). — After $45^{ab}$, S ($G_{2}$ om. line 2) ins.:

955* विव्याध निशितैर्द्रोणः शरैः संनतपर्वभिः ।
हृष्टः समभवद्द्रोणो रणशौण्डः प्रतापवान् ।

— S om. $45^{cd}$; $G_{2}$ $M_{3}$ om. $45^{ef}$ also. — $^{e}$) $D_{1.3}$ सह क्रीडन्; S ($G_{2}$ $M_{3}$ om.) समाक्रीडन्. $D_{5.7.9}$ अवारयत्तदा वीरः. — S reads 42 after 45 ($G_{2}$ $M_{3}$, after 955*).

46 S om. $46^{ab}$. — $^{a}$) K वै द्रोणं; Dn $D_{9.11.12}$ वर्षंतं; $D_{7}$ च द्रोणो (for मुञ्चन्तं). $D_{1.3}$ दिव्यास्त्राणि विमुंचंतं. — $^{b}$) K $D_{7}$ प्र($D_{7}$ वि)मुंचंतं; B $D_{6.10}$ भारद्वाजो ($B_{1}$ भवेद्राजा) (for भारद्वाजं). Dn $D_{9.11.12}$ तस्मिन्नेव तुमुले रणे. — $^{c}$) T $G_{2}$ संहृत्य (for संवार्य). — $^{d}$) B Dn $D_{6.7.10-12}$ फाल्गुनं. $K_{1}$ $B_{3.5}$ प्रत्य°; $K_{2}$ प्रति° (for सम°). S पार्थो द्रोणमवारयत्.

47 $^{c}$) $B_{3}$ अमृष्यतोस्; $D_{1.3}$ जयैषिणोस् (for अमर्षिणोस्). S अमृष्यमाणयोः संख्ये. — $^{d}$) T $G_{2}$ वृत्रवासव°; $G_{1.3}$ M बलिवासव°. — After 47, S ins.:

956* दर्शयेतां महास्त्राणि भारद्वाजार्जुनौ रणे ।

48 $^{ab}$) $M_{1.2}$ वारुणम् (for वायव्यम्). $D_{3}$ repeats $48^{ab}$ with v. l. वितेरेश सरासनात् (for $^{b}$). — $^{c}$) $B_{1.2.5}$ Dn $D_{9.11.12}$ मुक्तमात्रं (for मुक्तं मुक्तं). $B_{4}$ $D_{1-3.5.8}$ च

C. 4. 1877 B. 4. 58. 52 K. 4. 59. 75 द्रोणेन मुक्तं मुक्तं तु ग्रसते स पुनः पुनः ॥ ४८
एवं शूरौ महेष्वासौ विसृजन्तौ शिताञ्शरान् ।
एकच्छायं चक्रतुस्तावाकाशं शरवृष्टिभिः ॥ ४९
ततोऽर्जुनेन मुक्तानां पततां च शरीरिषु ।
पर्वतेष्विव वज्राणां शराणां श्रूयते स्वनः ॥ ५०
ततो नागा रथाश्चैव सादिनश्च विशां पते ।
शोणिताक्ता व्यदृश्यन्त पुष्पिता इव किंशुकाः ॥५१
बाहुभिश्च सकेयूरैर्विचित्रैश्च महारथैः ।
सुवर्णचित्रैः कवचैर्ध्वजैश्च विनिपातितैः ॥ ५२
योधैश्च निहतैस्तत्र पार्थबाणप्रपीडितैः ।
बलमासीत्समुद्भ्रान्तं द्रोणार्जुनसमागमे ॥ ५३
विधुन्वानौ तु तौ वीरौ धनुषी भारसाधने ।
आच्छादयेतामन्योन्यं तितक्षन्तौ रणेषुभिः ॥ ५४
अथान्तरिक्षे नादोऽभूद्द्रोणं तत्र प्रशंसताम् ।
दुष्करं कृतवान्द्रोणो यदर्जुनमयोधयत् ॥ ५५
प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम् ।
जेतारं देवदैत्यानां सर्पाणां च महारथम् ॥ ५६
अविश्रमं च शिक्षां च लाघवं दूरपातिताम् ।
पार्थस्य समरे दृष्ट्वा द्रोणस्याभूच्च विस्मयः ॥ ५७
अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणः ।
विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभ ॥ ५८
तस्य बाणमयं वर्षं शलभानामिवायतम् ।

---

(for तु). S मुक्तं मुक्तं द्रोणचापात्. — $^{d}$) B (except $B_4$) D $T_1$ ग्रसति (for °ते).

49 $D_3$ om. $49^{ab}$. — $^{a}$) $K_1$ शूर-; B (except $B_4$) $D_5$(m as in text) -भूतौ; $D_1$ वीरौ; $D_6$ भूमौ (for शूरौ). — $^{b}$) $D_{4-6}$ सृजंतौ नि-; T $G_2$ विसृजेतां. $B_5$ $D_{2.8.10}$ $G_{1.8}$ शराञ्शितान् (by transp.); T $G_2$ $M_3$ शिलाशितान्; $M_4$ शरान्बहून्. — $^{c}$) S अकुर्वां($T_2$ °र्वी)तां (for चक्रतुस्तौ). — $^{d}$) S गगनं (for आकाशं).

50 $^{a}$) D (except $D_{2.6}$) $T_2$ $G_2$ तत्र (for ततो). — $^{b}$) $B_{2-4}$ $D_{5.6}$ पतितानां (for पततां च). $B_{1.5}$ Dn $D_{11.12}$ वै (for च). — $^{d}$) $G_1$ वीराणां (for शराणां). $D_{2.7}$(m as in text).$_9$ शुश्रुवे (for श्रूयते).

51 $^{a}$) $T_1$ $G_2$ $M_{4.5}$ रथाश्वाश्च; $T_2$ $M_{1-3}$ रथाश्चाश्वाः; $G_1$ रथा ह्यश्वाः; $G_3$ रथानश्वान् (for रथाश्चैव). — $^{b}$) $B_{1.2.5}$ Dn $D_{1-3.8.10-12}$ वाजिनश्च; $D_5$(m as in text) समुद्भ्रांता (for सादिनश्च). — $^{c}$) $M_1$ शोणितार्द्रा. $B_3$ $D_{4.8}$ व्यराजंत; S च ($M_4$ स्म) दृश्यंते. — After 51, $B_4$ $D_6$ ins.:

957* अशोकानां वनानीव छन्नानि कुसुमैर्नवैः ।
रेजुः पार्थशरैस्तत्र तदा सैन्यानि भारत ।

52 $^{b}$) $B_3$ $D_{1.2.5.6}$ विचक्रैश्; S निकृत्तैश् (for विचित्रैश्). — $^{d}$) $B_{2-4}$ $D_6$ गजैश् (for ध्वजैश्). $B_{2-4}$ $D_{5.6}$ अपि (for वि-).

53 $^{a}$) $D_{10}$ यानैश्; M यौधैश् (for योधैश्). — $^{b}$) S °बाणाभि°. — $D_3$ reads $54^{cd}$ after $53^{ab}$. — $^{c}$) $B_3$ सुवित्रस्तं; $D_{3.7.9.10}$ $T_2$ $G_{1.3}$ सुसंभ्रांतं; $D_{5.6}$ सुविभ्रांतं; Cc सुविद्राणं (for समुद्भ्रान्तं).

54 $^{a}$) S विधून्वानौ. $M_{1.2}$ कृतौ (for तु तौ). $B_5$ Dn $D_{1-4.7-12}$ तत्र (for वीरौ). — $D_2$ (hapl.) om. from $54^{b}$ up to the prior half of line 2 of 958*. $D_3$ reads $54^{cd}$ after $53^{ab}$. — $^{c}$) $D_{4.10}$ आच्छादयंतौ; S प्रच्छादयेताम्. — $^{d}$) K तितिक्षंतौ; B Dn $D_{5.6.10-12}$ ततक्षतुः; $D_{1.8}$ अन्वेक्षंतौ; $D_4$ विक्षिपंतौ; $D_{7.9}$ वितक्षंतौ; $D_8$ Ca संतक्षंतौ; S दिधक्षंतौ. B Dn $D_{1.3.5-12}$ रथे°; $D_4$ शिते°; S वरे° (for रणे°). — After 54, N ($Ś_1$ missing; $D_2$ om. line 1 and prior half of line 2) ins.:

958* तयोः समभवद्युद्धं तुमुलं भरतर्षभ ।
द्रोणकौन्तेययोस्तत्र बलिवासवयोरिव ।
अथ पूर्णायतोत्सृष्टैः शरैः संनतपर्वभिः ।
व्यदारयेतामन्योन्यं प्राणद्यूते प्रवर्तिते ।

[ (L. 1) $B_{2-4}$ $D_{1.3-6}$ लोमहर्षणं (for भरत°). — (L. 2) K $B_3$ $D_7$ वृत्र°; $D_8$ बल° (for बलि°). — (L. 4) K $B_3$ न्यवार°; $D_5$ अहार°; $D_8$ विदार° (for व्यदार°). $K_2$ $B_{3.5}$ $D_{2.3.8.10}$ प्रवर्तते. ]

55 $^{a}$) $B_3$ अंतरिक्षे च (for अथान्त°). — $^{b}$) $K_2$ प्रपश्यतां (for प्रशं°).

56 $^{c}$) K $B_{2-4}$ $D_6$ देवमर्त्यानां; $D_5$ $G_{1.3}$ सर्व($D_5$ देव)सैन्यानां; T $G_2$ M सर्वदेवानां (for देव°). — $^{d}$) K नागानां; $B_1$ Dn $D_{7.9.11.12}$ S सर्वेषां. $K_1$ महाहवं; $K_2$ °हवे; $D_{7.9}$ °त्मनां (for °रथम्).

57 $^{a}$) $D_3$ च शिष्याणां; $D_8$ च शिष्यस्य; T $G_2$ सुशिक्षां च. — $^{b}$) $K_2$ हस्तपातितां; S दूरपातनं ($G_1$ °घातनं). — $^{d}$) $D_{5.7.10}$ S आसीच्च; $D_4$ आसीत्सु- (for अभूच्च). — After 57, S ins.:

959* तत्प्रवृत्तं चिरं घोरं तयोर्युद्धं महात्मनोः ।
अवर्तत महारौद्रं लोकसंक्षोभकारकम् ।

58 $^{c}$) B $D_{5.6}$ ततो (for अथ). — $^{d}$) Some MSS.

न च बाणान्तरे वायुरस्य शक्नोति सर्पितुम् ॥ ५९
अनिशं संदधानस्य शरानुत्सृजतस्तदा ।
ददृशे नान्तरं किंचित्पार्थस्याददतोऽपि च ॥ ६०
तथा शीघ्रास्त्रयुद्धे तु वर्तमाने सुदारुणे ।
शीघ्राच्छीघ्रतरं पार्थः शरानन्यानुदीरयत् ॥ ६१
ततः शतसहस्राणि शराणां नतपर्वणाम् ।
युगपत्प्रापतंस्तत्र द्रोणस्य रथमन्तिकात् ॥ ६२
अवकीर्यमाणे द्रोणे तु शरैर्गाण्डीवधन्वना ।
हाहाकारो महानासीत्सैन्यानां भरतर्षभ ॥ ६३
पाण्डवस्य तु शीघ्रास्त्रं मघवान्समपूजयत् ।
गन्धर्वाप्सरसश्चैव ये च तत्र समागताः ॥ ६४
ततो वृन्देन महता रथानां रथयूथपः ।
आचार्यपुत्रः सहसा पाण्डवं प्रत्यवारयत् ॥ ६५
अश्वत्थामा तु तत्कर्म हृदयेन महात्मनः ।
पूजयामास पार्थस्य कोपं चास्याकरोद्भृशम् ॥ ६६
स मन्युवशमापन्नः पार्थमभ्यद्रवद्रणे ।
किरञ्शरसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ६७
आवृत्य तु महाबाहुर्यतो द्रौणिस्ततो हयान् ।
अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ॥ ६८
स तु लब्ध्वान्तरं तूर्णमपायाज्जवनैर्हयैः ।
छिन्नवर्मध्वजः शूरो निकृत्तः परमेषुभिः ॥ ६९ C. 4. 1900 B. 4. 58. 76 K. 4. 59. 97

इति श्रीमहाभारते विराटपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

भरतर्षभः.

59 $^{a}$) K तत्र (for तस्य). — $^{b}$) B D (except $D_{10}$) Cn आयतिं; S अभवत् (for आयतम्). — After 59$^{ab}$, B (except $B_{1}$; $B_{3}$ marg.) Dn $D_{5.7.11.12}$ ins.:

960* दृष्ट्वा ते विस्मिताः सर्वे साधु साध्वित्यपूजयन् ।

— $^{c}$) B (except $B_{2}$) -प्यस्य; $D_{6}$ -इयस्य; $D_{7}$ S तस्य (for वायुः). — $^{d}$) B (except $B_{2}$) $D_{7}$ S वायुः; $D_{1-4.8.10}$ तस्य; $D_{6}$ राज्ञः (for अस्य). K शक्नोति स्म प्रसर्पितुं.

60 $^{a}$) S अभीक्ष्णं (for अनिशं). — $^{b}$) $T_{2}$ $G_{2}$ $M_{1-3}$ बाणान् (for शरान्). $B_{4.5}$ $D_{5.6}$ वि-; $D_{4}$ सं- (for उत्-). B D $T_{1}$ G (except $G_{1}$) तथा ($D_{4}$ बहून्). — $^{c}$) $B_{4}$ $D_{11.12}$ ददर्श (for ददृशे). $D_{10}$ transp. ददृशे and नान्तरं. B D (except $D_{6}$) $T_{1}$ $G_{2}$ M (except $M_{4}$) कश्चित् (for किंचित्). — $^{d}$) K आदधतो; S आपततो.

61 $^{a}$) K च (for तु). $B_{2.4}$ $D_{5}$ अथास्त्र($B_{4}$ तथास्त्र; $D_{5}$ अथास्य)युद्धे घोरे तु; S युद्धे तु कृतशीघ्रास्त्रे. — $^{c}$) Dn $D_{11.12}$ शीघ्रं (for शीघ्रात्). B $D_{1-5.8}$ °तरः (for °तरं). — $^{d}$) K अचोदयत्; B (except $B_{1}$) $D_{6}$ $M_{1.2}$ उदैरयत्.

62 $^{c}$) $K_{1}$ द्रोणस्य (for युगपत्). — $^{d}$) $K_{1}$ पार्थस्य (for द्रोणस्य). $D_{7.9}$ रथसंनिधौ (for °मन्तिकात्).

63 $^{a}$) Hypermetric! K B $D_{5.6}$ आ° ($K_{1}$ अ°); $D_{7.9}$ S वि° (for अव°). Dn $D_{11.12}$ कीर्यमाणे तदा द्रोणे; $D_{1-4.8.10}$ द्रोणेव($D_{4}$ वि)कीर्यमाणे तु. The text reading अवकीर्यमाणे (hypermetric!) is found only in MS. No. 472 of the Vishrambag Collection I of the Govt. MSS. library at this Institute (=H of Utgikar's Tent. Ed., cf. p. 415 there) fully collated but not included in our app. crit., it being an inferior misch-codex. — $^{b}$) $D_{2.3.7.9}$ $T_{2}$ $G_{3}$ °धन्विना ($G_{3}$ °नः).

64 $^{a}$) $D_{7.9}$ तत्पांडवस्य (for पाण्डवस्य तु). $B_{2}$ $D_{1.3}$ T $G_{2}$ M (except $M_{5}$) च (for तु). — $^{b}$) N (except $D_{1-3}$; $Ś_{1}$ missing) मघवा (for °वान्). B D प्रत्य($D_{2}$ संप्र)पूजयत्. — $^{d}$) $B_{2}$ वृतान्यत्र; $B_{3.4}$ $D_{6}$ तत्र तत्र; $B_{5}$ सर्वे तत्र; $D_{5}$ नृत्यंस्तत्र (for ये च तत्र). — After 64, S ins.:

961* द्रोणं युद्धार्णवे मग्नं दृष्ट्वा पुत्रः प्रतापवान् ।

65 $^{b}$) T $G_{2.3}$ M रथिनां (for रथानां). $G_{1}$ रथयूथेन यूथपः. — $^{c}$) S तु शरैः (for सहसा). — $^{d}$) $B_{1}$ Dn $D_{11.12}$ $T_{2}$ पर्यवारयत्; $M_{2}$ सम°.

66 $^{a}$) K कर्माणि (for तत्कर्म). — $^{d}$) $G_{3}$ अपि (for अस्य). S तदाकरोत् (for अकरोद्भृशम्).

67 $^{a}$) $D_{1-4.8.10}$ सोमर्षवश°. — $^{b}$) K अभ्या° (for अभ्य°). — $^{c}$) K मुंचन् (for किरन्).

68 $^{a}$) $D_{3}$ S आवर्त्य ($M_{3}$ आपत्य; $M_{5}$ as in text). K $M_{1.3}$ च; T G $M_{2.4.5}$ स (for तु). — $^{b}$) $M_{1}$ तमभ्ययात्; $M_{3}$ ततोभ्ययात् (for ततो हयान्).

69 $^{b}$) $D_{2}$ अप° (for अपा°). — $^{c}$) S °ध्वजरथो (for °ध्वजः शूरो). — After 69, S ins.:

962* पराजिते रणे द्रोणे द्रोणपुत्रः समागतः ।
सदण्ड इव रक्ताक्षः कृतान्तः समरे स्थितः ।

# ५४

C. 4. 1901
B. 4. 59. 1
K. 4. 60. 1

वैशंपायन उवाच ।
तं पार्थः प्रतिजग्राह वायुवेगमिवोद्धतम् ।
शरजालेन महता वर्षमाणमिवाम्बुदम् ॥ १
तयोर्देवासुरसमः संनिपातो महानभूत् ।
किरतोः शरजालानि वृत्रवासवयोरिव ॥ २
न स्म सूर्यस्तदा भाति न च वाति समीरणः ।
शरगाढे कृते व्योम्नि छायाभूते समन्ततः ॥ ३
महांश्चटचटाशब्दो योधयोर्हन्यमानयोः ।
दह्यतामिव वेणूनामासीत्परपुरंजय ॥ ४
हयानस्यार्जुनः सर्वान्कृतवानल्पजीवितान् ।
स राजन्न प्रजानाति दिशं कांचन मोहितः ॥ ५
ततो द्रौणिर्महावीर्यः पार्थस्य विचरिष्यतः ।
विवरं सूक्ष्ममालोक्य ज्यां चिच्छेद क्षुरेण ह ।
तदस्यापूजयन्देवाः कर्म दृष्ट्वातिमानुषम् ॥ ६
ततो द्रौणिर्धनूंष्यष्टौ व्यपक्रम्य नरर्षभम् ।
पुनरभ्याहनत्पार्थं हृदये कङ्कपत्रिभिः ॥ ७

[ (L. 1) M1.3.4 प्रतापवान्; M2 समाहितः (for समागतः). ]

Colophon missing in Ś1. — *Sub-parvan:* K1 गोग्रह; B Dn2 D1.3.5.6.8–10 उत्तरगोग्रह; M2 गोग्रहण. — *Adhy. name:* B1–3.5 Dn D5.6.11.12 द्रोणापयानं; B4 D1.2.4.10 द्रोणभंगः; D7–9 T G1.2 M2.3 द्रोणपराजयः. — *Adhy. no.* (figures, words or both): K1 D3 53; B4 56; D5.10 51; D6 55; D7 50; S 58 (M2–4 57). — *S'loka no.:* G3 91.

## 54

☞ This whole adhy. is missing in Ś1 (cf. v. l. 4. 51. 17).

1 After the ref., N (Ś1 missing) ins.:

963* ततो द्रौणिर्महावीर्यः प्रययावर्जुनं प्रति ।

[ D1.2.10 अथ (for ततो). Dn D4.8.9.11.12 महाराज; D1.2.10 महाभाग (D2 °गः) (for °वीर्यः). B3 m.4.5 Dn D3.6–8.10–12 रणे (for प्रति). ]

— [b]) B2 D5.6 तार्क्ष्यो नागम् (for वायुवेगम्). B1 D6 इवोद्धतः; D4.7.9 T G2 M5 इवाचलः. B3 G1.3 M1–4 वायुवेग इवोद्ध(G1.3 °स्थि)तः. — [c]) D8 °धारेण (for °जालेन). — [d]) B3–5 D6 G1.3 M वर्षमाण इवांबुदः.

2 [a]) D6.7.9 ततो (for तयोर्). — [b]) D6 तयोर् (for महान्).

3 [a]) B1–3.5 D6 दिवा (for तदा). T G M4 (*inf. lin.*) प्रतपति (for तदा भाति). B4 (by transp.) न स्म भाति तदा सूर्यो. — [b]) K2 नापि (for न च). — [c]) B1.3m शरपातैः कृते; B2.5 °सार्थैः कृते; B3 °व्रातैः कृते; B4 D6 Cap °संघैः चिते (D6 कृते); D1.2.8 शरगाधकृते; D4.7.9 °जालावृ(D7.9 °चि)ते; D5 °सार्थैर्वृते; D10 °भूते कृते; G1 M2 °जाले कृते; G3 °जालैः कृता; M1 °जाते कृते; Ca.c शरैः सांद्रीकृते (for शरगाढे कृते). G3 भूमिः (for व्योम्नि). — [d]) D6 हाहा° (for छाया°). S छायाभूतमिवाभवत्.

4 [b]) M1.2.5 यौधयोर्. B1–3 D3.5.6.8 S युध्यमानयोः; B4 विध्य°; B5 D1.2 वध्य°; D4.7 भिद्य°. — K om. 4[cd]. — [d]) B1.2.4 D (except D4.5.8.10) परपुरंजयः; S परमदारुणः

5 [a]) D8 S तस्य (for अस्य). S संख्ये (G3 °ख्ये) (for सर्वान्). — [b]) D4.7–9 अल्पजीविनः; S अल्पतेज(G3 °चेत)सः. — [c]) B4 D T G ते (for स). B1 Dn D1.4.9.11.12 T1 न प्रजानंत; B2 D6 नाभिजाना(D6 °नं)ति; B4 D2.3.7.10 T2 G न प्रजानंति; B5 प्रतिजानाति (for न प्रजानाति). — [d]) T G2 M दिशः. T2 M काश्चन; G1 केचन. B1.4 D (except D4–6) T G मोहिताः.

6 [a]) B2.4 तथा; B3 अथ; D6 तदा (for ततो). — [b]) D7.9 चरतो रणे; M3 विचकर्षतः (for °रिष्यतः). — [d]) S नुनोद (for चिच्छेद). K D3.8 हि; B4 M4 च; D6 T G M1–3 सः (for ह). — [e]) K G1 तत्तस्य (for तदस्य). — [f]) D1–3 transp. कर्म and दृष्ट्वा. — After [illegible] ins.:

964* न शक्तोऽन्यः पुमान्स्थातुमृते पार्थं धनंजयम् ।

[ M2.4 जेतुं (M4 *inf. lin.* स्थातुं as above). G3 द्रौणेः; M4 (*inf. lin.*) युधि (for पार्थं). ]

On the other hand, N (Ś1 missing) ins. after 6:

965* द्रोणो भीष्मश्च कर्णश्च कृपश्चैव महारथः ।

[ K D4 transp. द्रोणः and भीष्मः. D8 द्रोणभीष्मौ च. K कृपश्चैव कर्णश्चैव (for च कर्णश्च कृपश्चैव). B (except B4) Dn2 D3.11.12 महारथाः; D1.2 °त्मनः. ]

B1.2.3 (marg.) Dn D3.6.9 (marg.) 11.12 cont.:

966* साधु साध्विति भाषन्तो पूजयन्कर्म तस्य तत् ।

ततः पार्थो महाबाहुः प्रहस्य स्वनवत्तदा ।
योजयामास नवया मौर्व्या गाण्डीवमोजसा ॥ ८
ततोऽर्धचन्द्रमावृत्य तेन पार्थः समागमत् ।
वारणेनेव मत्तेन मत्तो वारणयूथपः ॥ ९
ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः ।
रणमध्ये द्वयोरेव सुमहल्लोमहर्षणम् ॥ १०
तौ वीरौ कुरवः सर्वे ददृशुर्विस्मयान्विताः ।
युध्यमानौ महात्मानौ यूथपाविव संगतौ ॥ ११
तौ समाजघ्नतुर्वीरावन्योन्यं पुरुषर्षभौ ।
शरैराशीविषाकारैर्ज्वलद्भिरिव पन्नगैः ॥ १२
अक्षय्याविषुधी दिव्यौ पाण्डवस्य महात्मनः ।
तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः ॥ १३
अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमभ्यस्यतो रणे ।
जग्मुः परिक्षयं शीघ्रमभूत्तेनाधिकोऽर्जुनः ॥ १४
ततः कर्णो महच्चापं विकृष्याभ्यधिकं रुषा ।
अवाक्षिपत्ततः शब्दो हाहाकारो महानभूत् ॥ १५
तत्र चक्षुर्दधे पार्थो यत्र विस्फार्यते धनुः ।
ददर्श तत्र राधेयं तस्य कोपोऽत्यवीवृधत् ॥ १६
स रोषवशमापन्नः कर्णमेव जिघांसया ।
अवैक्षत विवृत्ताभ्यां नेत्राभ्यां कुरुपुंगवः ॥ १७
तथा तु विमुखे पार्थे द्रोणपुत्रस्य सायकान् ।
त्वरिताः पुरुषा राजन्नुपाजह्रुः सहस्रशः ॥ १८
उत्सृज्य च महाबाहुर्द्रोणपुत्रं धनंजयः ।
अभिदुद्राव सहसा कर्णमेव सपत्नजित् ॥ १९
तमभिद्रुत्य कौन्तेयः क्रोधसंरक्तलोचनः ।
कामयन्द्वैरथे युद्धमिदं वचनमब्रवीत् ॥ २० C. 4 1922 B. 4. 59. 21

इति श्रीमहाभारते विराटपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

7 a) B1 Dn D11.12 धनुःश्रेष्ठं; D4 धनुः कृष्य; D7.9 धनुष्यस्य; Ca.r.v धनूंष्यष्टौ (as in text). — b) B1 Dn D11.12 अपकृष्य; B2.3.5 D3.6 Cv उपक्रम्य; D1.2 आक्रम्य तु; D4.5.8.10 Cr.vp अपक्रम्य; D9 व्युपक्रम्य; T1 व्यतिक्रम्य; G2 व्यपाक्रम्य. K1 B1 Dn D11.12 रथर्षभं; B2.3.5 D5.6 रथर्षभः; B4 च वीर्यवान्; D1.2 नरर्षभात्; D7.9 महारथः; D10 M4 नरर्षभ; T G M2.3.5 नरर्षभः; M1 परंतपः. — c) B D पुनरेवा°; S पुनरभ्य° (for पुनरभ्या°). — d) T G2 समरे (for हृदये).

8 b) D7.9 विहस्य; T G2 M3.4 प्रहसन् (for प्रहस्य). — c) S च तदा (for नवया). — d) K अंजसा (for ओजसा). — After 8, S (except M2) ins.:

967* तं दृष्ट्वा क्रुद्धमायान्तं प्रभिन्नमिव कुञ्जरम् ।
क्रुद्धः समाह्वयामास द्रौणिर्युद्धाय भारत ।

9 M2 om. 9–10. — a) S (M2 om.) आहृत्य (for आवृत्य). — b) T G2.3 °गतः; G1 M (M2 om.) °हृतः (for °गमत्). — After 9ab, T G2 ins.:

968* चिच्छेद तस्य चापं च सूतं चाश्वान्रथस्य वै ।
विव्याध निशितैश्चापि शरैराशीविषोपमैः ।
सोऽन्यं रथं समास्थाय प्रत्ययाद्रथिपुंगवः ।

— c) D1–3.6 वारणेनैव.

10 M2 om. 10 (cf. v.l. 9). — c) B3 Dn1 D1–4.10 एवं (for एव). — d) S (M2 om.) रोम° (for लोम°).

11 ab) N (except K; Ś1 missing) transp. कुरवः and ददृशुः. D3 विस्मयं गताः (for विस्मयान्विताः). — c) B D (except D7.9) महावीर्यौ (for °त्मानौ). — d) S द्विरदाविव. B2 D5 संवृतौ; B4.5 संयुतौ; D6 संहतौ.

12 a) B3 (m as in text) D6.10 M2–4 समा(M3 °मं)जग्मतुर्. — b) S परस्परममर्षि(G1.3 °जयैषि)णौ. — d) B2 D2.5.7.9 S पावकैः (for पन्नगैः).

13 b) B5 गांडीवं च महद्धनुः.

14 a) K1 ततो बाणाः; K2 M5 ततो बाणान्; D3 सुपर्वाणः (for पुनर्बाणाः). — b) Dn D11.12 अप्यस्यतो; Ca अभ्य° (as in text). — c) D (except D5.7–10) तूर्णम् (for शीघ्रम्). — d) D1.2 transp. अधिकः and अर्जुनः.

15 S om. from 15 to end of this adhy. K2 om. 15a–16b. — a) K1 B1 Dn2 D9.11.12 महाचापं. — b) K1 Dn D11.12 तथा (for रुषा). — d) D4 ज्याघातेन; D5 m.9 गोधाघातो; Cv गोघातेन (for हाहाकारो).

16 S om. 16; K2 om. 16ab (cf. v. l. 15). — a) B1.4 Dn1 D6.8.11 (m as in text).12 ततश्; B2 D5.10 अथ (for तत्र). K1 D4.10 दधत् (for दधे). — d) B Dn D1.2.5.9–12 °ह्य(B4 °प्य-; D6 °भ्य)वर्धत; D4 °भ्यवर्धयत्; D7.8 °प्य(D8 °भ्य)वीवृधत् (for ऽत्यवी°). D6

## ५५

C 4. 1923
B. 4. 60. 1
K. 4. 58. 43

अर्जुन उवाच ।
कर्ण यत्ते सभामध्ये बहु वाचा विकत्थितम् ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् ॥ १
अवोचः परुषा वाचो धर्ममुत्सृज्य केवलम् ।
इदं तु दुष्करं मन्ये यदिदं ते चिकीर्षितम् ॥ २
यत्त्वया कथितं पूर्वं मामनासाद्य किंचन ।
तदद्य कुरु राधेय कुरुमध्ये मया सह ॥ ३
यत्सभायां स्म पाञ्चालीं क्लिश्यमानां दुरात्मभिः ।
दृष्टवानसि तस्याद्य फलमाप्नुहि केवलम् ॥ ४
धर्मपाशनिबद्धेन यन्मया मर्षितं पुरा ।
तस्य राधेय कोपस्य विजयं पश्य मे मृधे ॥ ५
एहि कर्ण मया सार्धं प्रतिपद्यस्व संगरम् ।

---

कोपश्चास्य भवत्ततः.

17 S om. 17 (cf. v. l. 15). — $^{a}$) K कोप° (for रोष°). — $^{c}$) B Dn $D_{8.9.11.12}$ तमैक्षत ($B_4$ अपैक्षत); $D_{1.2.4}$ समैक्षत; $D_3$ ततक्षत; $D_6$ संप्रैक्षत; $D_7$ अन्वैक्षत (for अवैक्षत). $D_4$ अतिवक्राभ्यां (for विवृत्ताभ्यां). $D_{10}$ तमेवैक्षत वृत्ताभ्यां. — $^{d}$) $D_{7.9}$ कुरुनंदनः.

18 S om. 18 (cf. v. l. 15). — $^{a}$) K अपि (for तु). — $^{b}$) B (except $B_4$) Dn $D_{9.11.12}$ सायकात्. — $^{d}$) $Dn_2$ $D_{11.12}$ अपाजहुः; $D_6$ उपानिन्युः. K ततस्ततः (for सहस्रशः).

20 S om. 20 (cf. v. l. 15). — $^{a}$) $D_3$ ततः (for तम्). — $^{c}$) $B_{1.5}$ Dn $D_{10-12}$ द्वैरथं तेन; $B_{2-4}$ $D_{1.2.5}$ (m as in text) द्वैरथेनैनं; $D_{3.4.6}$ द्वैरथेनैव ($D_3$ °वं) (for द्वैरथे युद्धं). — $^{d}$) $B_{1.2}$ $D_{4-6.11.12}$ युद्धं; Dn युद्धे (for इदं).

Colophon missing in Ś$_1$; $K_1$ om. it. — *Sub-parvan:* $K_2$ $Dn_2$ गोग्रह; B $D_{1.3-6.8.10-12}$ उत्तरगोग्रह; $M_2$ गोग्रहण. — *Adhy. name:* $B_{1.3.5}$ अश्वत्थामापयानं; $B_{2.4}$ $D_{6.8}$ $M_2$ अश्वत्थाम($D_{6.8}$ °मा)युद्धं; $D_{1-4.7.9.10}$ अश्वत्थामा($D_9$ °म)भंगः; $D_5$ $G_1$ अश्वत्थाम($D_5$ °मा)पराजयः; T $G_2$ अश्वत्थामबाणपरिक्षयः. — *Adhy. no.* (figures, words or both): $B_4$ 57; $D_3$ 54; $D_{5.10}$ 52; $D_6$ 55; $D_7$ 51; S 59 ($M_{2.4}$ 58). — *S'loka no.:* $G_3$ 16.

In S this adhy. (54) is followed by adhy. 52; see below also.

### 55

☞ This adhy. is missing in Ś$_1$ (cf. v. l. 4. 51. 17). S reads this adhy. after an insertion of 18 lines, which follows line 40 of passage No. 44 of App. I.

1 $^{a}$) $D_3$ यं ते; $D_8$ $T_1$ $G_3$ यत्त्वं; $T_2$ $G_{1.2}$ M यत्तत् (for यत्ते). — $^{b}$) S बह्वबद्धं (for बहु वाचा). $D_8$ $M_1$ विकत्थसे; T G $M_{2-5}$ प्र($G_2$ ब)भाषसे (for विकत्थितम्). — $^{c}$) $K_2$ $B_2$ $D_{2.5.10}$ $T_2$ $G_2$ युद्धे (for युधि). — $^{d}$) B D समुपस्थितं ($B_2$ तमुप°; $D_{3.4}$ पर्युप°; $D_7$ त्वामुप°). — After 1, N (Ś$_1$ missing) ins.:

969* सोऽद्य कर्ण मया सार्धं व्यवहृत्य महामृधे ।
ज्ञास्यस्यवरमात्मानं न चान्यानवमन्यसे ।

[ (L. 1) $D_{2.6}$ सोथ; $D_{7.9}$ अद्य (for सोऽद्य). — (L. 2) $B_{3.4}$ $Dn_2$ $D_{3.4.6.8-10}$ ज्ञास्यसे (for °सि). B Dn $D_{2.3.5}$(m as in text)$_{.6.10-12}$ अबलम् (for अवरम्). $B_4$ $D_{2-4.6.8.10}$ °मंस्यसे (for °मन्यसे). ]

2 $^{a}$) $D_7$ परमा (m परुषा as in text). S सभायां पौरुषं प्रोच्य ($M_2$ प्राप्य). — $^{cd}$) S कर्तुमिच्छसि यत्कर्म तन्मन्ये दुष्करं त्वया ($M_5$ तव).

3 $^{b}$) $D_{2-4.5}$m$_{.7-9}$ अनादृ($D_2$ °धृ)त्य (for °साद्य). $D_{2.4.5.7.9}$ सूतज (for किंचन). S नास्ति मत्सम इत्यपि. — $^{c}$) $D_8$ तदिदं; S तत्सत्यं ($M_1$ °वं) (for तदद्य).

4 $D_1$ om. $4^{a}$–$5^{b}$. — $^{a}$) K $B_{2-4}$ $Dn_1$ $D_{5-7.9}$ T $G_2$ च; $Dn_2$ $D_{2.11.12}$ स (for स्म). — $^{b}$) $D_7$(marg. *sec. m.* as in text)$_{.9}$ कृष्यमाणां. S तथा (T $G_2$ अहं) त्वया (for दुरात्मभिः). — $^{c}$) S (except $G_1$) अस्मि (for असि). $K_1$ (corrupt) दृष्ट्वा तद्योस्यफलं; $K_2$ दृष्टवानद्य सफलं. — $^{d}$) K त्वं तत् (for फलं). $K_2$ $D_{2.3.6.8-10}$ प्राप्नुहि; $D_4$ प्राप्तं हि; $D_7$ प्राप्नोषि; $T_2$ $G_2$ $M_4$ अश्नुहि (for आप्नुहि). $D_4$ T $G_2$ दुर्मते (for केवलम्).

5 $D_1$ om. $5^{ab}$ (cf. v. l. 4). — $^{b}$) S तव ($G_2$ तपः) (for पुरा). — $^{c}$) $D_{4.6.9}$ S तस्य पा($D_{4.6.9}$ को)पस्य राधेय. — $^{d}$) $B_5$ विक्रमं; $D_{2.4.5.7.9}$ विमोक्षं; $D_{3.6.8}$ विपाकं (for विजयं). S फलं प्रा($T_1$ $G_3$ आ)प्नुहि दुर्मते ($T_1$ $G_2$ सांप्रतं; $T_2$ संप्रति). — After 5, B Dn $D_{3.5.6.10-12}$ ins.:

970* वने द्वादश वर्षाणि यानि सोढानि दुर्मते ।

प्रेक्षकाः कुरवः सर्वे भवन्तु सहसैनिकाः ॥ ६

कर्ण उवाच ।

ब्रवीषि वाचा यत्पार्थ कर्मणा तत्समाचर ।
अतिशेते हि वै वाचं कर्मेति प्रथितं भुवि ॥ ७
यत्त्वया मर्षितं पूर्वं तदशक्तेन मर्षितम् ।
इति गृह्णामि तत्पार्थ तव दृष्ट्वापराक्रमम् ॥ ८
धर्मपाशनिबद्धेन यदि ते मर्षितं पुरा ।
तथैव बद्धमात्मानमबद्धमिव मन्यसे ॥ ९
यदि तावद्वने वासो यथोक्तश्चरितस्त्वया ।
तत्त्वं धर्मार्थवित्क्लिष्टः समयं भेत्तुमिच्छसि ॥ १०
यदि शक्रः स्वयं पार्थ युध्यते तव कारणात् ।
तथापि न व्यथा काचिन्मम स्याद्विक्रमिष्यतः ॥ ११
अयं कौन्तेय कामस्ते नचिरात्समुपस्थितः ।
योत्स्यसे त्वं मया सार्धमद्य द्रक्ष्यसि मे बलम् ॥ १२

अर्जुन उवाच ।

इदानीमेव तावत्त्वमपयातो रणान्मम ।
तेन जीवसि राधेय निहतस्त्वनुजस्तव ॥ १३
भ्रातरं घातयित्वा च त्यक्त्वा रणशिरश्च कः ।  C. 4. 1933 B. 4. 60. 13 K. 4. 58. 50

---

तस्याद्य प्रतिकोपस्य फलं प्राप्नुहि संप्रति ।

[ (L. 1) D3 दुर्गमे (for दुर्मते). — (L. 2) B4 प्राप्स्यसि (for प्राप्नुहि). B4 संयतं; B5 केवलं; D3 शंसिनः; D5 सांप्रतं; D6 संगरे (for संप्रति). ]

6 b) B1.2.5 Dn D1–4.9–12 °युध्यस्व (for °पद्यस्व). Dn1 संयुगे; Dn2 D1–5.9.11.12 संगरे (for संगरम्). S इहाद्य कुरु वैशसं. — c) S सन्तु (for सर्वे). — d) S सर्वे ते (for भवन्तु). K सह सैनिकैः; B D (except D1–4.7.8) तव (D10 मम) सैनिकाः; M4 बहुसैनिकाः. — After 6, S reads 13–14.

7 b) B2–4 एतत्; D6 एतां (for तत्). **Ca** cites 7cd (v. l. ते वाक्यं for वै वाचं). — c) T G विशेष(G1.2 °षि)तो; M1–3.5 (*inf. lin.*) अविषह्यो; M4.5 अविशेषो (for अतिशेते). B1–3.5 Dn D6.10–12 हि ते; D5.7.9 सदा; M हि त्वं (for हि वै). **Cc** cites ते. B1–3.5 Dn D5.6.10–12 **Cc**.s.rp (Dī.); M वाचा; **Cr**.v वाचं (as in text). B4 D1–4 वाचं.वै (by transp.); T G वाचा त्वं. — d) B1.2.5 Dn D10–12 एतत्; B3 D5 एव; D6 अति-; **Cc** इति (as in text). T G कर्मणाप्रतिमो (G2.3 °मं) भुवि; M कर्म ना(M3.5 न; M4 चा)प्रतिमं भुवि.

8 b) G1.3 तदशक्त्या तु; **Ccp** तदाशक्तेन. D5.8.9 पांडव (for मर्षितम्). — c) D8 प्रति- (for इति). D10 गर्हामि (for गृह्णामि). B1.3.4 D1.5.6.10 ते (for तत्). B2 Dn D11.12 इतो गृह्णीमहे पार्थ; S इति (M यदि) गृह्णीम ते (G1.3 गृह्णामहे) पार्थ (G2 वाक्यं; M5 वाचं). — d) D5 पुनर्दृष्ट्वा; D6 दृष्ट्वा युधि; T G1.2 M1.3 तम- (M1.3 मम)दृष्ट्वा (for तव दृष्ट्वा).

9 a) B4 °निबंधेन; D4 धर्मपाशे नि°; **Cc** as in text. — b) B1.5 Dn D1.2.4.10–12 S यत्त्व(Dn1 न त्व)या; D8 यदिदं (for यदि ते). — d) B2 T1 G3 M अबद्धः. D1–3.8 S इति; **Cc** अव- (for इव).

10 a) S न हि (for यदि). **Cr** वनेऽवासो. — b) G1.3 M4.5 यथोक्तं; M1.2 यथावच् (for यथोक्तश्). — c) D5m न त्वं; D8 स त्वं (for तत्त्वं). B (except B1) D1–3.5–7.9 **Cc** कृत्स्नं; D4 कृत्य; D10 क्लिन्नं (for क्लिष्टः). S अर्थलोभा(T1 °लाभा)त्तु क्लिष्टस्त्वं (M4 क्लीबत्वं; M5 लुब्धः सन्) (M3 अर्थे लोभानुतुष्टस्त्वं). — d) Dn2 D11.12 स मया; D10 सत्समा- (for समयं). B4 नेतुं; Dn2 D10–12 योद्धुं; D6 हंतुं; S छेत्तुं (M3 जेतुं); **Cc** भेत्तुं (as in text). B4 D1.4.5m.6–9 G2 M3.4 अर्हसि (for इच्छसि). — D7 repeats 10 in marg.

11 a) S चेंद्रः (for शक्रः). — b) B1.3.5 S तव युध्येत; B4 D4–8 युध्येत तव. B1.3.5 D6 कारणे.

12 c) K च; Dn D6.7.9 11.12 S हि (for त्वं). T2 पार्थ (for सार्धम्). — d) D4 ज्ञास्यसे चात्मनो बलं; S अत्र पश्यामि ते बलं.

13 S om. the ref. For sequence of S cf. v. l. 6. — After the ref., D6 ins.:

971* खद्योतो द्योतते तावद्यावन्नोदयते शशी ।
उदिते च सहस्रांशौ न खद्योतो न चन्द्रमाः ।
प्राकृतान्पुरुषाञ्जित्वा वृथा ते कर्ण गर्जितम् ।

— b) B (except B1) D1–10 व्यपयातो. B3–5 D6 रणे मम; D4 रणाजिरात्. — c) K1 D3 येन; T1 G2 M1.2 कस्मात्; T2 G1.3 M3–5 तस्मात् (for तेन). — d) D8 तथा (for तव).

14 For sequence of S cf. v. l. 6. — ab) B1 Dn D6.11.12 कः; B2–4 D5.8 तु (for the first च). D4 च यः; D7.8 तथा (for च कः). S यो (T1 यद्; M1.2 को) भ्रातरं पातयित्वा कस्त्यक्त्वा च रणाजिरं. — c) B1 Dn D11.12 कः पुमान् (for पुरुषः). B4 कर्णं; D1 सत्यो; D2 सद्यो; D7

C. 4. 1938 B. 4. 60. 16 त्वदन्यः पुरुषः सत्सु ब्रूयादेवं व्यवस्थितः ॥ १४

वैशंपायन उवाच ।

इति कर्णं ब्रुवन्नेव बीभत्सुरपराजितः ।
अभ्ययाद्विसृजन्बाणान्कायावरणभेदिनः ॥ १५
प्रतिजग्राह तान्कर्णः शरानग्निशिखोपमान् ।
शरवर्षेण महता वर्षमाण इवाम्बुदः ॥ १६
उत्पेतुः शरजालानि घोररूपाणि सर्वशः ।
अविध्यदश्वान्बाह्वोश्च हस्तावापं पृथक्पृथक् ॥ १७
सोऽमृष्यमाणः कर्णस्य निषङ्गस्यावलम्बनम् ।
चिच्छेद निशिताग्रेण शरेण नतपर्वणा ॥ १८
उपासङ्गादुपादाय कर्णो बाणानथापरान् ।
विव्याध पाण्डवं हस्ते तस्य मुष्टिरशीर्यत ॥ १९
ततः पार्थो महाबाहुः कर्णस्य धनुरच्छिनत् ।
स शक्तिं प्राहिणोत्तस्मै तां पार्थो व्यधमच्छरैः ॥ २०
ततोऽभिपेतुर्बहवो राधेयस्य पदानुगाः ।
तांश्च गाण्डीवनिर्मुक्तैः प्राहिणोद्यमसादनम् ॥ २१

सस्यक्; $D_{8}$ कश्चित् (for सत्सु). — $^{d}$) $B_{1.3}$ धर्मे (for एवं).

15 $M_{1-3}$ om. the ref. — $^{a}$) S कर्णौ (for कर्णं). $B_{3.4}$ $D_{6}$ वदन् (for ब्रुवन्). — $^{b}$) S बीभत्सुमपराजितं ($G_{2}$ $M_{1.2}$ °तः). — $^{c}$) $B_{4}$ प्रत्य° (for अभ्य°).

16 $K_{1}$ om. 16 and $17^{ab}$ up to °रूपाणि. — $^{a}$) $D_{1.2.4.8}$ अभि-; $D_{10}$ अपि; $M_{2}$ इति (for प्रति-). D (except $D_{4-7.9}$) M तं (for तान्). S पार्थः (for कर्णः). — $^{b}$) Dn $D_{11.12}$ S प्रीयमाणो महारथः; $D_{1-3.10}$ प्रीयमाणो धनंजयं ($D_{3}$ °यः); $D_{8}$ जृंभमाणो धनंजयं. — $^{c}$) Dn $D_{11.12}$ महता शरवर्षेण (by transp.). — $^{d}$) $K_{2}$ Dn $D_{1-4.8.10-12}$ वर्षमाणमिवांबुदं; S पर्जन्य इव वृष्टिमान्. — After 16, S (except $T_{2}$; $M_{2}$ om. lines 1, 4; $M_{8}$ om. line 4) ins.:

972* अभियाय हि बीभत्सुर्गाण्डीवं विक्षिपन्धनुः ।
जिघांसुः समरे कर्णं विससर्ज शरान्बहून् ।
(cf. $16^{a}$) तं कर्णः प्रतिजग्राह वायुवेगमिवाचलः ।
(cf. $16^{cd}$) शरजालेन महता वर्षमाणमिवाम्बुदम् ।
तयोर्देवासुरसमः संनिपातोऽभवन्महान् ।
किरतोः शरजालानि निराकाशमनन्तरम् ।

[ (L. 1) $G_{2}$ अभिधाय; $G_{3}$ अभियातो (for °याय). — (L. 6) $G_{3}$ कृत्स्नं व्योम निरंतरं; $M_{5}$ निरंतरमनंतरं (for the posterior half). ]

17 $T_{2}$ om. 17–25. $K_{1}$ om. up to °रूपाणि (cf. v. l. 16). — $^{a}$) $D_{1.2}$ शरवर्षाणि; S ($T_{2}$ om.) मेघजालानि. $^{b}$) $D_{3}$ सर्वतः. — After $17^{ab}$, S (which om. $17^{c}$–$19^{d}$) ins.:

973* ववर्ष च रजो भौमं कर्णपार्थसमागमे ।
न स्म सूर्यः प्रतपति न च वाति समीरणः ।
शरप्रच्छादितं व्योम छायाभूतमिवाभवत् ।
गाण्डीवस्य च निर्घोषः कर्णस्य धनुषस्तथा ।
दह्यतामिव वेणूनामासीत्परमदारुणः ।
अर्जुनस्तु हयान्नागान्रथांश्च विनिपातयन् ।
क्षोभयामास तत्सैन्यं कर्णं विव्याध चासकृत् ।

— $^{d}$) $B_{4}$ $D_{10}$ हस्तयोश्च; $Dn_{1}$ हस्तौ चापं; $D_{4}$ हस्तौ चैव; $D_{5}$ हस्तावापौ; $D_{8.9}$ हस्ताच्चापं.

18 S om. 18 (cf. v. l. 17). — $^{b}$) K अवयस्वनं; $B_{2}$ °लस्वनं; $D_{3}$ °बंधनं; $Ca.c.r.s$ अवलंबनं (as in text). — $^{c}$) $B_{2.4}$ $D_{5.6}$ निशिताग्रेण चिच्छेद (by transp.). — $^{d}$) $K_{2}$ बाणेन (for शरेण). $K_{2}$ $B_{2-4}$ $Dn_{2}$ $D_{2.6.11.12}$ आनत° (for नत°).

19 S om. 19 (cf. v. l. 17). — $^{b}$) B $D_{5.6}$ बाणम($B_{1.5}$ बाणान)थापरं; $D_{3.4.8.10}$ बाणांस्तथापरान्.

20 $T_{2}$ om. 20 (cf. v. l. 17). — $^{a}$) $T_{1}$ $G_{2}$ °तेजाः (for °बाहुः). — $^{b}$) $Dn_{1}$ $D_{1.3.4.6}$ आच्छिनत्. — For $20^{cd}$, S ($T_{2}$ om.) subst.:

974* छिन्नधन्वा ततः कर्णः शक्तिं चिक्षेप वेगवान् ।
तां शक्तिं समरे पार्थश्चिच्छेद निशितैः शरैः ।

21 $T_{2}$ om. 21 (cf. v. l. 17); $B_{5}$ (hapl.) om. $21^{a}$–$24^{b}$. — $^{a}$) $B_{1.2.4}$ $D_{11.12}$ अनु-; $B_{3}$ Dn $D_{1-10}$ $M_{5}$ नि- (for अभि-). — $^{b}$) $D_{7.9}$ पदातयः; $G_{3}$ वशानुगाः. — $^{c}$) $D_{9}$ गांजीव°. B ($B_{5}$ om.) $D_{6}$ तान्गांडीवविनिर्मुक्तैः. — After 21, S ($T_{2}$ om.) ins.:

975* अशोरतावृत्य महीं समग्रां
पार्थेषुमार्गेषु महाद्विपेन्द्राः ।
हिरण्यकक्ष्याः शरजालचित्रा
यथा नगाः पावकजालनद्धाः ।
तं शत्रुसेनाङ्गनिबर्हणानि
कर्माणि कुर्वन्तममानुषाणि ।
वैकर्तनः पूर्वममृष्यमाणः
समर्पयल्लक्षमिवाशु दूरात् ।

[ (L. 2) $T_{1}$ G °मार्गेषु ($G_{2}$ °मार्गे नि-) हता द्वि°. — (L. 6) $T_{1}$ G $M_{3}$ कुर्वाणम् (for कुर्वन्तम्). — (L. 8) $T_{1}$ G पार्थं (for दूरात्). ]

ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना ।
प्रददौ तानि वासांसि विराटदुहितुः स्वयम् ॥ ३४
उत्तरा तु महार्हाणि विविधानि तनूनि च ।
प्रतिगृह्याभवत्प्रीता तानि वासांसि भामिनी ॥ ३५
मन्त्रयित्वा तु कौन्तेय उत्तरेण रहस्तदा ।
इतिकर्तव्यतां सर्वां राजन्यथ युधिष्ठिरे ॥ ३६
ततस्तथा तद्व्यदधाद्यथावत्पुरुषर्षभ ।
सह पुत्रेण मत्स्यस्य प्रहृष्टो भरतर्षभः ॥ ३७

इति श्रीमहाभारते विराटपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## ६५

वैशंपायन उवाच ।
ततस्तृतीये दिवसे भ्रातरः पञ्च पाण्डवाः ।
स्नाताः शुक्लाम्बरधराः समये चरितव्रताः ॥ १
युधिष्ठिरं पुरस्कृत्य सर्वाभरणभूषिताः । C 4 2261 B. 4 70 2 K. 4. 74. 2

विराटो वाहिनीपतिः.

34 $^{a}$) $G_{2.3}$ ह्यनु° (for ऽभ्यनु°). — After $34^{ab}$, S ins.:

1118* सह पुत्रेण मात्स्यस्य मन्त्रयित्वा धनंजयः ।
इत्येवं ब्रूहि राजानं विराटस्य युधिष्ठिरम् ।
इत्युक्त्वा सहसा पार्थः प्रविश्यान्तःपुरं शुभम् ।

[ After line 1, $T_{1}$ ins.:

1119* आमन्त्रयित्वा कौन्तेयमुत्तरो वाक्यमब्रवीत् ।
इति राज्ञः प्रवक्ष्यामि धर्मराजं युधिष्ठिरम् ।

— (L. 2) $G_{2}$ श्व इतो (for इत्येवं). $T_{2}$ $G_{2}$ विराटं च युधि°; $G_{1.3}$ °टं समुपस्थितं. ]

— $^{c}$) $D_{10}$ तस्य (for तानि). $T_{2}$ $G_{1}$ $M_{1}$ ददौ वस्त्राणि रत्नानि; $G_{2.3}$ $M_{2.4.5}$ ददौ रत्नानि वस्त्राणि ($M_{2}$ वासांसि).

35 $^{b}$) $D_{7.9}$ रक्तानि च (for विवि°). Dn $D_{11.12}$ नवानि; Ca तनूनि (as in text). S वस्त्राण्याभरणानि च. — $^{c}$) $B_{3.5}$ $D_{1.2.5.6}$ प्रत्यगृह्णात्ततः प्रीता; S प्रगृह्य तानि वस्त्राणि ($G_{1}$ $M_{4.5}$ सर्वाणि). — $^{d}$) B $Dn_{2}$ $D_{5.6.10-12}$ भाविनी. S प्रीता सानुचराभवत्. — After 35, S ins. an addl. colophon (*adhy. no.*: T G $M_{1.5}$ 71; $M_{2.4}$ 70); and thereafter a passage given in App. I (No. 59).

36 For S cf. v. l. 37. — $^{b}$) B (except $B_{4}$) Dn $D_{11.12}$ महात्मना; $D_{7}$ तदा रहः; $D_{9}$ तदा सह (for रहस्तदा). Ś1 इतिकर्तव्यतां ततः (see below). — $^{c}$) $D_{1.3.8}$ सर्वं; $D_{5}$ सर्वौं (for सर्वां). Ś1 उत्तरेण रहः सर्वं (see above). — $^{d}$) K B (except $B_{4}$) Dn $D_{11.12}$ राजन्पार्थे ($K_{2}$ $Dn_{1}$ °र्थौ); $D_{8}$ राजन्यपि.

37 For S see below. — $^{a}$) K $D_{7}$ तदा (for तथा). — $^{b}$) $K_{2}$ B (except $B_{4}$) $D_{1.2}$ °र्षभः; $Dn_{2}$ $D_{11}$ °र्षभाः; $D_{5}$ भरतर्षभ. $D_{4}$ यथाह स नरर्षभः. — $^{c}$) $B_{4}$ मत्स्यश्च; $D_{7.9}$ मत्स्यस्तु. — $^{d}$) $Dn_{2}$ $D_{11.12}$ प्रहृष्टा. $K_{1}$ $Dn_{1}$ $D_{10}$ भरतर्षभ; $Dn_{2}$ $D_{11.12}$ °भाः. $B_{4}$ $D_{1-9}$ संप्रहृष्टो नरर्षभः ($B_{4}$ $D_{7.8}$ °भ). — For 36–37, S subst.:

1120* इतिकर्तव्यतां सर्वें मन्त्रयित्वा तु पाण्डवाः ।
न्यवसंश्चैव तां रात्रिं पाण्डवा धर्मवत्सलाः ।
पुत्रेण सह मात्स्यस्तु संप्रहृष्टो नराधिपः ।
तां रात्रिमवसद्धीमान्समाश्वस्तेन चेतसा ।

[ (L. 1) $M_{1.5}$ विनिश्चयं; $M_{2.4}$ महारथाः (for तु पाण्डवाः). — $M_{2}$ om. lines 2–3. — (L. 2) T $G_{2}$ धर्मज्ञा (for पाण्डवा). — (L. 4) T $G_{2}$ $M_{4}$ श्रीमान् (for धीमान्). T $G_{2}$ संप्रहृष्टेन (for समाश्व°). ]

Colophon ($M_{3}$ missing). — *Sub-parvan:* $K_{1}$ गोग्रह; Dn $D_{11.12}$ उत्तरगोग्रह; $M_{5}$ गोग्रहण. — *Adhy. name:* $B_{4}$ उत्तरप्रशंसा; $D_{3.4}$ पांडवाभ्युदयः; $D_{5}$ उत्तरप्रवेशः; $D_{7}$ उत्तरोत्तरं; $D_{8}$ उत्तरवाक्यं; $D_{9}$ मत्स्योत्तरसंवादः. — *Adhy. no.* (figures, words or both): $B_{4}$ $D_{9}$ 67; $D_{4}$ 62; $D_{5}$ 64; S 72 ($T_{2}$ $M_{2.4}$ 71; $M_{3}$ missing). — *S'loka no.:* $G_{3}$ 18.

## 65

$M_{3}$ missing for the entire adhy. (cf. v. l. 4. 63. 29). The MS. is entirely ignored hereafter in the critical apparatus.

1 $^{a}$) Ś1 तृतीयदिवसे; S द्वितीये दिवसे. — After $1^{ab}$, $K_{2}$ (partly corrupt) ins.:

1121* स्वमन्त्रितेति विज्ञाय हर्षेणोत्फुल्ललोचनाः ।
विराटस्य सभां जग्मुस्ते तीर्णा व्रतमुत्तमम् ।

C. 4. 2261
B. 4. 70.2
K. 4. 74.2

अभिपद्मा यथा नागा भ्राजमाना महारथाः ॥ २
विराटस्य सभां गत्वा भूमिपालासनेष्वथ ।
निषेदुः पावकप्रख्याः सर्वे धिष्ण्येष्विवाग्नयः ॥ ३
तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः ।
आजगाम सभां कर्तुं राजकार्याणि सर्वशः ॥ ४
श्रीमतः पाण्डवान्दृष्ट्वा ज्वलतः पावकानिव ।
अथ मत्स्योऽब्रवीत्कङ्कं देवरूपमवस्थितम् ।
मरुद्गणैरुपासीनं त्रिदशानामिवेश्वरम् ॥ ५
स किलाक्षातिवापस्त्वं सभास्तारो मया कृतः ।
अथ राजासने कस्मादुपविष्टोऽस्यलंकृतः ॥ ६
परिहासेप्सया वाक्यं विराटस्य निशम्य तत् ।
स्मयमानोऽर्जुनो राजन्निदं वचनमब्रवीत् ॥ ७

जगृहुश्च तथा सर्वं राज्ञो धर्मसुतस्य च ।
समये ते तु तं दृष्ट्वा चार्जुनश्छत्रमाददे ।
चामरं भीमसेनेन माद्रेयौ च वरायुधान् ।
वरं ताम्बूलसंपूर्णं द्रौपदी च स्वभाजनम् ।
ययौ तस्य सुता हृष्टा परचर्याकृते स्थिताः ।

— $^{c}$) K स्नाताः शुक्लांबराः सर्वे. — $^{d}$) $D_{3.4.10}$ S सर्वे सु- (for समये).

2 $^{b}$) $B_4$ $D_{1.2.5}$ राजाभरण°. — $^{c}$) K अभिपद्मं; B $D_{2.4-6.10}$ $T_2$ G $M_{4.5}$ **Cr** अभिपद्मा; Dn $D_{9.11.12}$ द्वारि मत्ता; $D_3$ अभिजात्य; $D_8$ °पद्य; $T_1$ महापद्मा; **Cv** (cf. **Ca**) अभिपद्मा (as in text). $G_1$ यथाकामं; $G_3$ महानागा. — $^{d}$) $T_2$ °बलाः (for °रथाः).

3 $^{a}$) S प्राप्य (for गत्वा). — $^{b}$) K $D_{1.2.4.6}$ च (for अथ). $B_4$ °सने सुखं.

4 After $4^{ab}$, T G ins.:

1122* तस्यां रात्र्यां व्यतीतायां प्रातःकृत्यं समाप्य च ।
गोसुवर्णादिकं दत्त्वा ब्राह्मणेभ्यो यथाविधि ।

— $^{c}$) $M_4$ जगामात्मसभां. S राजा (for कर्तुं). — $^{d}$) $K_2$ नित्यशः (for सर्वशः). S उत्तरेण सह प्रभो. — $D_7$ ins. after 4: $D_4$, after $5^{ab}$: $D_{5.6}$, after 1124*:

1123* अचिन्तयत्कथमिमे सभामागम्य भूषिताः ।
अतिष्ठन्देवसंकाशाः कथमन्वाविशन्निह ।
[ (L. 2) $D_7$ कथं नु प्राविशन्निह. ]

5 $^{a}$) $Dn_1$ $D_{4.8.11.12}$ श्रीमंतः. $D_{4.8}$ पांडवांस्तत्र. B $D_{1.2.6}$ श्रीमंतं पांडवं दृष्ट्वा; S स तान्दृष्ट्वा महासत्वान्. — $^{b}$) $Ś_1$ K ज्वल($K_2$ °लि)तान्; Dn $D_{4.5.8.9.11.12}$ $G_3$ ज्वलंतः. ❀**Cr**: उपादाय ज्वलन्तं (?) ।❀ $Dn_2$ $D_{4.8.11.12}$ पावका इव; $D_{5.7.9}$ इव पावकान्. B $D_{1.2.6}$ ज्वलंत-मिव पावकं; $M_5$ श्वसतः पन्नगानिव. — After $5^{ab}$, $D_4$ ins. 1123*; while $B_4$ $D_{5.6}$ S ins.:

1124* राजवेषानुपादाय पार्थिवो विस्मितोऽभवत् ।
किमिदं को विधिस्त्वेष भयार्त इव पार्थिवः ।
[ (L. 1) $D_6$ राजवेश्मनि आयातो (for the prior half). ]

Thereafter $D_{5.6}$ ins. 1123* (cf. v. l. 4); while S ins.:

1125* पुरुषप्रवरान्दृष्ट्वा विषादमगमन्नृपः ।
[ $T_2$ $M_1$ परं (for नृपः). ]

On the other hand, after $5^{ab}$, $D_{10}$ ins.:

1126* राजासनगतं दृष्ट्वा नृपतिर्विस्मितोऽभवत् ।

$D_{10}$ cont.: $B_4$ ins. after 1124*: $Ś_1$ K $B_5$ Dn $D_{1-3.7-9.11.12}$, after $5^{ab}$: $D_{4-6}$, after 1123*:

1127* मुहूर्तमिव च ध्यात्वा सरोषः पृथिवीपतिः ।
[ $Ś_1$ K अपि (for इव). $D_{3.4.10}$ स (for च). $D_5$ स मुहूर्तमिव ध्यात्वा. Dn $D_{7-9.11.12}$ स राजा; $D_3$ सजोषः (for सरोषः). ]

— $^{c}$) $D_{7.9}$ तदा (for अथ). S (except $M_{1.2}$) मात्स्यः. — $^{d}$) $D_8$ देवराजम्. $Ś_1$ B$D_{1-3.6-9.11.12}$ T $G_{2.3}$ $M_4$ इव ($D_6$ इवा-) स्थितं; $G_1$ उपस्थितं (for अव°). — $^{e}$) $Ś_1$ K परिवृतं; $D_{4.5}$ सहासीनं (for उपा°). $D_{7.9}$ मरुद्भिः संवृतं देवं.

6 $^{ab}$) K $D_{7.8}$ $T_1$ $G_{2.3}$ $M_{1.5}$ न; $D_8$ भो; $D_{10}$ मत्; $M_2$ त्वं (for स). $M_1$ खलु (for किल). $K_1$ अक्षमवापस्; $K_2$ अक्षणमापस्; $D_3$ अक्षनिवासे; $D_4$ अक्षप्रवापस्; $D_{9.10}$ T $G_{1.3}$ $M_{4.5}$ अक्षनिवापस्; $D_{11}$ (*sup. lin.* as in text).$_{12}$ अक्षाभिवापस्; $G_2$ अक्षान्निवापस्; **Ca** अक्षवापकस्; **Cs** (cf. **Cn**) अक्षातिवापस् (as in text). $M_2$ तु (for त्वं). $B_{3.5}$ $D_{1.2.5.6}$ **Cr** अहं लक्ष्मीनिवासस्त्वं; $B_4$ यदि कंको भवान्विप्रः; **Crp** (Dev.) अहो अक्षनिवापस्त्वं (for $^{a}$). **Crp** (Dev., and Ke.?) त्वमक्षवापो (? for त्वं सभास्तारो). $Ś_1$ $K_2$ B (except $B_3$) Dn $D_{5.7.9-12}$ वृतः; $D_3$ धृतः (for कृतः). — $^{c}$) $D_7$ अद्य (for अथ). — $^{d}$) $Ś_1$ $B_{1-3.5}$ $Dn_2$ $D_{11.12}$ °विष्टस्त्वलंकृतः; $K_1$ $Dn_1$ $D_{3.4.10}$ °विष्टः स्वलं°; $B_4$ °विष्टोभ्यलं°; $D_{2.8.9}$ $T_2$ °ष्टोस्य($T_2$ °ष्टो ह्य)लंकृते; $T_1$ $G_{1.2}$ M °ष्टोस्य लंघने. — After 6, $B_5$ ins. an addl. colophon.

7 Before 7, all MSS. except $Dn_1$ $D_8$ $G_1$ ins. वैशं° उ° (resp. वैशं°). — $^{a}$) $G_1$ परिहासवचो; $G_3$ **Ca** °हासेच्छया. $Ś_1$ योग्यं; K शक्यं; S राज्ञो (for वाक्यं). $^{cd}$) S स्मयमानोब्रवीत् ($G_1$ °र्जुनः) वाक्यम् (T $G_{1.2}$ पार्थः) अर्जुनः (T $G_2$ ह्यर्जुनः; $G_1$ अब्रवीत्) परवीरहा.

8 Before 8, N (except $K_1$ $D_{9.10}$) $G_3$ $M_4$ ins.

इन्द्रस्याप्यासनं राजन्नयमारोढुमर्हति ।
ब्रह्मण्यः श्रुतवांस्त्यागी यज्ञशीलो दृढव्रतः ॥ ८
अयं कुरूणामृषभः कुन्तीपुत्रो युधिष्ठिरः ।
अस्य कीर्तिः स्थिता लोके सूर्यस्येवोद्यतः प्रभा ॥ ९
संसरन्ति दिशः सर्वा यशसोऽस्य गभस्तयः ।
उदितस्येव सूर्यस्य तेजसोऽनु गभस्तयः ॥ १०
एनं दश सहस्राणि कुञ्जराणां तरस्विनाम् ।
अन्वयुः पृष्ठतो राजन्यावदध्यावसत्कुरून् ॥ ११
त्रिंशदेनं सहस्राणि रथाः काञ्चनमालिनः ।
सदश्वैरुपसंपन्नाः पृष्ठतोऽनुययुः सदा ॥ १२

C 4 2279
B. 4 70. 19
K 4 74. 21

---

अर्जुन उ° (resp. अर्जुनः). — a) Ś1 B (except B4) Dn D5.11.12 S अर्धासनं; K D7.8 अप्यासने. — c) D1.10 सत्य° (for श्रुत°). — d) D10 जितेंद्रियः (for दृढ°). S सर्वलोकाभिपूजितः. — After 8, N ins.:

1128* एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याधिको लोके तपसां च परायणम् ।
एषोऽस्त्रविच्च संग्रामे त्रैलोक्ये सचराचरे ।
न चैवान्यः पुमान्वेत्ति न वेत्स्यति कदाचन ।
न देवा नासुराः केचिन्न मनुष्या न राक्षसाः ।
गन्धर्वयक्षप्रवराः किंनराः समहोरगाः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ।
पाण्डवानामतिरथो यज्ञधर्मपरो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ।
बलवान्धृतिमान्सौम्यः सत्यवादी जितेन्द्रियः ।
धनैश्च संचयैश्चैव शक्रवैश्रवणोपमः ।
यथा मनुर्महातेजा लोकानां परिरक्षिता ।
एवमेष महातेजाः प्रजानुग्रहकारकः ।

[(L. 1) Ś1 निग्रह° (for विग्रह°). — (L. 2) K विद्या°; B4 पुण्या° (for बुद्ध्या°). Ś1 K B3–5 D1.8.10 परायणः. — (L. 3) B1–3.5 Dn D10–12 एषोस्त्रं विविधं वेत्ति; B4 D1.2.4–7.9 एषोस्त्रविद्वान् (D1.2 °योद्धा) संग्रामे. — (L. 4) K B4 D1–4 एवम्; B5 D5.6.8 एनम् (for चैव). D1.2 धन्वी (for वेत्ति). D3 कथंचन; D10 च कश्चन (for कदा°). B4 न च वेत्स्यंति केचन; D4.7.9 न च वेत्स्यति कश्चन. — (L. 5) D3.8 मनुष्या न च राक्षसाः. — (L. 6) B4 गंधर्वयक्षाप्सरसः. D1–6 न (for स-). B Dn D10–12 सकिंनर(B4 किंनरा वा)महोरगाः. — (L. 7) D7.9 °बाहुः (for °तेजाः). Dn2 D11.12 om. lines 8–9. — (L. 8) K धर्मयज्ञपरो वशी; B4 Dn1 D1–4.6.10 यज्वा (B4 योद्धा) धर्मपरो वशी; D5 यज्वा धर्मपरायणः; D5 m.7.9 यज्वा दानपतिर्वशी. — (L. 9) B (except B4) Dn1 D7.9.10 सर्व- (for त्रिषु). — (L. 10) Ś1 K धृतिवान्. D5 transp. बलवान् and धृतिमान्. B (except B4) Dn D10–12 दक्षः; D9 सम्यक् (for सौम्यः). D1 यतेंद्रियः. — (L. 11) ❀ Cr: संचयैः सम्यग्यज्ञैः। शक्रदृष्टान्तमादाय। ❀ — (L. 12) B4 परिरक्षकः; D4 परिकीर्तिताः. — (L. 13) Om. in D10. D7–9 transp. एवं and एषः. D4 लोका° (for प्रजा°). ]

9 a) D2.4 अधिपः (for ऋषभः). D10 एष वै धर्मराजस्तु. — b) Dn D11.12 धर्मराजो; D10 पांडवेयो (for कुन्ती°). — After $9^{ab}$, D4.7 ins.:

1129* अस्य प्रभावात्सर्वेऽपि भ्रातरोऽमी वयं नृप ।
महाप्रभावसंयुक्ता महाबलपराक्रमाः ।
अस्यैव तपसास्माकं प्रभावाः सन्त्यनेकशः ।
विनास्य मनुजैस्तुल्या वयं सर्वे भवाम भोः ।
यावदेतस्य चादेशं तिष्ठामो वयमादृताः ।
पालयन्तः सुरैस्तावदभिपूज्यतमाश्च ह ।

— c) S (except T2) यस्य (for अस्य). B3–5 D1–3.5–7.9 transp. कीर्तिः and लोके. B3.5 D5 G1 स्थिरा (for स्थिता). — d) K तता; B3 D1 दिवा; B4.5 D5.6 दिवि; D2 उत्थिता (for उद्यतः).

10 a) D1.2.5 m.7.9 संचरंति; D4 T1 G2 प्रस°; D8 संरंभंति; G3 संसर्पंति. — b) B5 Dn D4.7–9.11.12 इवांशवः; D3 सदांशवः (for गभस्तयः). Ś1 K प्रदिशश्च नराधिप (Ś1 नरर्षभ). — D10 G1.3 M4.5 om. (hapl.) $10^{cd}$. — c) K1 चाकाशे; K2 मेरोर्हि (for सूर्यस्य). — d) K सूर्यस्य (for तेजसो). K इव; D7.9 T2 G2 अथ; D8 T1 M1.2 अस्य (for अनु). — After 10, D3 reads $14^{cd}$ for the first time, repeating it in its proper place.

☞ In Ś1, the portion from stanza 11 up to the end of this parvan is lost on missing fol.; the MS. is ignored hereafter in the critical apparatus.

11 D3 om. 11. — a) K1 Dn1 D1.2.6 T1 एवं; G2 एतं; M5 येन (*sup. lin.* एनं as in text). K D7.8 सप्त सह°; S त्रिंशत्सह°. — c) D10 अन्वगच्छंस्ततो राजन्. — d) D5 m.7.9 एष च (for यावद्). K1 अस्यावसत्; K2 अध्यासितः; D9 M1.2.5 अध्यवसत्; T G2 अन्वावसत्; Ca अध्या° (as in text). T2 क्रमात् (for कुरून्). G3 सहस्राण्यनुगच्छतः.

12 a) B5 Dn1 D4.7.8.10 एवं; S चैव (for एनं). D8 एनं सप्त सह°. — b) D7.9 रथा वै हेममालिनः; S रथानां रथिनां वरं. — c) G3 उपपन्नानि; M1.2.5 उपपन्नानां; M4

C. 4. 2279 B. 4. 70. 20 K. 4. 74. 22 एनमष्टशताः सूताः सुमृष्टमणिकुण्डलाः ।
अस्तुवन्मागधैः सार्धं पुरा शक्रमिवर्षयः ॥ १३
एनं नित्यमुपासन्त कुरवः किंकरा यथा ।
सर्वे च राजन्राजानो धनेश्वरमिवामराः ॥ १४
एष सर्वान्महीपालान्करमाहारयत्तदा ।
वैश्यानिव महाराज विवशान्स्ववशानपि ॥ १५
अष्टाशीतिसहस्राणि स्नातकानां महात्मनाम् ।
उपजीवन्ति राजानमेनं सुचरितव्रतम् ॥ १६
एष वृद्धाननाथांश्च व्यङ्गान्पङ्गूंश्च मानवान् ।
पुत्रवत्पालयामास प्रजा धर्मेण चाभिभो ॥ १७
एष धर्मे दमे चैव क्रोधे चापि यतव्रतः ।
महाप्रसादो ब्रह्मण्यः सत्यवादी च पार्थिवः ॥ १८
श्रीप्रतापेन चैतस्य तप्यते स सुयोधनः ।
सगणः सह कर्णेन सौबलेनापि वा विभुः ॥ १९
न शक्यन्ते ह्यस्य गुणाः प्रसंख्यातुं नरेश्वर ।
एष धर्मपरो नित्यमानृशंस्यश्च पाण्डवः ॥ २०
एवंयुक्तो महाराजः पाण्डवः पार्थिवर्षभः ।
कथं नार्हति राजार्हमासनं पृथिवीपतिः ॥ २१

इति श्रीमहाभारते विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

उपसंपन्नं. — d) K (corrupt) अन्वययुस्. B1.2 Dn D6.8–12 T G2.3 M तदा; D3 तथा (for सदा). G1 पृष्ठतैनं ययुः सदा. — After 12, S ins.:

1130* वाजिनां च शतं राजन्सहस्राण्यन्वयुस्तदा ।

[T2 तथा; G2 तदा (for शतं). T1 G1.3 M4 अयुतं (for अन्वयुस्). T1 G1.3 तथा (for तदा).]

13 a) S इमम् (for एनम्). D7.9 S अष्टशतं (G1 अष्टादश). M1.2 राजन् (for सूताः). — c) B1–3 Dn D11.12 अब्रुवन्; S तुष्टुवुर् (for अस्तु°).

14 a) B3–5 D1.2.4–6.8 S इमं; D3 इमे; D10 एवं (for एनं). D1.2.5.6.10 S उपातिष्ठन्; D3.4.7.8 उपासंते. — b) M1.5 राजानं (for कुरवः). D4.7.9 इव; S सदा (G1 M4 तदा) (for यथा). — After 14ab, G1 *repeats* 1130* (with v. l.). — D3 *repeats* 14cd (cf. v. l. 10). — c) G1 M नृप (for राजन्). M1.2.5 राजानं (for °नो). T G2 सर्वे चैव नृपा राजन्; G3 सर्वे चैव तु राजानः.

15 b) D3.5 सदा; D7.9 स्वयं; G1 तथा (for तदा). Dn D10–12 करदान्समकारयत्. — c) K B (except B2) D4–6.9.10 महाराजो; Dn D11.12 महाभागो. — d) D7.9 करदानिव सर्वशः; G1 M2.4 विवशाः स्ववशा अपि. Cr cites विवशान् स्ववशान् (as in text).

16 b) D3.4 दिने दिने (for महात्मनाम्). — c) D4 °तिष्ठंति (for °जीवन्ति). — d) D8 धर्मात्मानं महीपते.

17 b) B Dn D10–12 पंगू(B4 व्यंगा)नंधांश्च मान°; D4 वृद्धपंग्वंधदुःखितान्. — After 17ab, D4 (corrupt) ins.:

1131* मूकमिम्मिणिरोग्यादीन्दीनेडव्यह्विरादिकान् ।

— c) D4 °वत्पालयन्नित्यं. — d) K1 (corrupt) चर्वितुं; K2 त्वर्चितं; B1.2 Dn D11.12 वै विभुः; B3–5 D1.2.5 वीर्यवान्; D3 चाभितः; D4 M1.2 चाभिभोः; D6 धर्मवित्; D7 T2 चाभिभुः; D8 वै प्रभुः; D9 वा विभुः; D10 वै विभु; T1 G चाभिभूः.

18 D9 om. 18. — a) K धने; D8 धुरि (for दमे). D4 दाने; D8 प्रोक्तः (for चैव). — b) B D1.2.5.6 यतः सदा; Dn D7.8.11.12 जितव्रतः. S दाने सत्ये रतः सदा (T1 G2 M4.5 तदा; G1.3 तथा). — c) D2 M2 महाप्रभावो. K D4.5m.7 धर्मज्ञः (for ब्रह्मण्यः). — d) D4.6 जितेंद्रियः; D5m.7 प्रियंवदः; M4.5 च पांडवः.

19 a) Dn D11.12 शीघ्रं तापेन; Ca.r श्रीप्र° (as in text). B Dn1 D1.2.5.6.8 चैवास्य; S वै यस्य. — b) D3 दीप्यते; D4 व्यथते (for तप्यते). D2.8 च; D4 स्म; D5 असौ (for स). — c) B4 D1.5.6 सबलः; M2 सानुजः (for सगणः). — d) K सौबलेनैव चानघ; B1–3.5 D5.6 °लेन तथा (D6 च वा) विभो; B4 D3.4.7–9 सह दुःशासनेन च; D1.2 °लेयेन वा विभो (D2 °भोः); S °लेन च वीर्यवान्. Ca.rp (Dev.) cites अभिभूः; Cr विभोः.

20 a) D5 अस्य च (for ह्यस्य). K गुणान्. T1 G2 न शक्यते त्वस्य गुणान्; G1.3 M न शक्यमेतस्य गुणान्. — c) T1 G2.3 धर्मरतो. — d) K1 अक्षसंसश्च; K2 अज्ञसंसश्च; B (except B4) D1–3.5.6.8 T2 आनृशंसश्च (D1.2 °सस्तु); T1 G3 M आनृशंसी च; G1 °शंस्ये च. K G1 पार्थिवः (for पाण्डवः). D7.9 आनृशंस्यपरस्तथा; G2 °शंसी सुशीलवान्.

21 a) D1–3 G1 M महाराज. D5m.7.9 एष (D5m एवं) सर्वगुणोपेतः; G2 एवंविधगुणो राजा. — b) B D1–6 S पुरुषर्षभः (G1 M5 °भ). D5m.7.9 पार्थिवः पार्थिवर्षभ. — c) D4 राजाग्र्यं. — d) B1 Dn D11.12 °पते; D7.9

# ६६

विराट उवाच ।

यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः ।
कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली ॥ १
नकुलः सहदेवो वा द्रौपदी वा यशस्विनी ।
यदा द्यूते जिताः पार्था न प्राज्ञायन्त ते क्वचित् ॥ २

अर्जुन उवाच ।

य एष बल्लवो ब्रूते सूदस्तव नराधिप ।
एष भीमो महाबाहुर्भीमवेगपराक्रमः ॥ ३
एष क्रोधवशान्हत्वा पर्वते गन्धमादने ।
सौगन्धिकानि दिव्यानि कृष्णार्थे समुपाहरत् ॥ ४
गन्धर्वा एष वै हन्ता कीचकानां दुरात्मनाम् ।
व्याघ्रानृक्षान्वराहांश्च हतवान्स्त्रीपुरे तव ॥ ५
यश्चासीदश्वबन्धस्ते नकुलोऽयं परंतपः ।
गोसंख्यः सहदेवश्च माद्रीपुत्रौ महारथौ ॥ ६
शृङ्गारवेषाभरणौ रूपवन्तौ यशस्विनौ ।
नानारथसहस्राणां समर्थौ पुरुषर्षभौ ॥ ७ C. 4 2296 B. 4. 71. 7 K. 4. 75. 8

जगतीपतिः. — After 21, D4 (om. lines 7–8). 7 ins.:

1132* छलेन यावद्रिपुभिः सत्यपाशेन बन्धितः ।
अभूत्तावन्मनुष्येषु सर्वसाधारणो ह्ययम् ।
त्रयोदशमवर्षस्य नष्टचर्याव्रतं त्विदम् ।
पारितं त्वत्समक्षं वै तन्निस्तीर्णोऽद्य पाण्डवः ।
यथावद्व्रतचीर्णोऽयं मेघमध्याद्यथा रविः ।
भवेत्प्रतापासह्यस्तु तद्वत्पश्यैनमप्यहो ।
योग्यस्त्वयं नरपतिर्मन्ये शक्रासनस्य च ।
तस्मान्मा विस्मयस्तेऽस्तु न मृषा प्रब्रवीमि ते ।

Colophon (Ś1 M3 missing). — *Sub-parvan:* K1 गोग्रह; Dn1 D1.9 उत्तरगोग्रह. — *Adhy. name:* B4 भिषेकः; D1.2 पांडवप्रकटनं; D3 सभायां पाण्डवदर्शनं; D4 पांडवानां त्रयोदशवर्षनष्टचर्याव्रतविसर्गः; D5 पांडवप्राकट्यं; D7 युधिष्ठिरप्रकटनः; D9 अर्जुनकृतं धर्मस्तवनं; M2.5 पांडवप्रकाशः. — *Adhy. no.* (figures, words or both): B4 D9 68, D5 63; D6 67; D10 66; S 73 (T2 70; M2.4 72). — *S'loka no.:* G3 23.

## 66

Ś1 M3 missing for entire adhy. (cf. v. l. 4. 63. 29; 65. 11). The MSS. are ignored hereafter in the critical apparatus.

1 c) K D1.2.10 च; G3 हि (for अस्य). — d) Dn D11.12 युधि (for बली). K भीमसेनो महाबली.

2 a) K B4 D4.5.10 च (for वा). — b) K D4.7.10 च (for वा). — c) N (except K1 B4 D5) द्यूत- (for द्यूते). S यतो (M5 गता) ह्यक्षैर्जिता (T1 G2 °क्षजिता) ह्येते (G1 एते; G3 -स्त्वेते; M5 -स्ते वै). — d) Dn1 D3 प्रज्ञा°; D6 प्राज्ञायत. K D1.2.4.8 प्रज्ञायंते (D1 प्राज्ञायंत; D2.8 प्रज्ञायंत) न ते क्वचित्; S नांतरा श्रूयते कथा.

3 a) B4 D1.6 बल्लवं; S वललो. T2 नाम (for ब्रूते). — b) S सूपकारश्च ते नृप. — c) Dn D3.8–12 T G2.3 M1.2.5 महाराज; D7 महाभाग; G1 महौजाश्च. D4 स एव भीमो मत्स्येश. — d) D3 भीमवीर्य°; D4 श्रीमन्वेग°; D8 श्रीमानुरु°; G1 भीमाकार°; M5 सिंहतुल्य°.

4 D3 om. 4. — a) K वेगवशान्; B4 क्रोधवशाद्; Cs as in text. B4 युध्वा (for हत्वा). D4.8 सयक्षान्राक्षसाञ्जित्वा (D8 °न्भित्वा). — c) B4 शतशः; D4.9m पद्मानि; S पुष्पाणि (for दिव्यानि). — d) S (except G1) समुपानयत्.

5 a) D1.2 चैष (for एष). D7 गधर्वाणामयं हंता. b) D1.10 T2 M2 महात्मनां; D6 महामनाः. — c) B5 वृकान्; D4 यक्षान् (for ऋक्षान्). S गजांश्चैव (for वराहांश्च). K1 व्याघ्ररूक्षान् रजांश्चैव (sic). — d) T2 G1.2 च पुरे; Ca स्त्रीपुरे (as in text). — After 5, S ins.:

1133* हिडिम्बं च बकं चैव किर्मीरं च जटासुरम् ।
हत्वा निष्कण्टकं चक्रे अरण्यं सर्वतः सुखम् ।

6 D2 om. 6. — a) D10 om. च. — b) K सनातन (K2 °नः); Dn1 M4 परंतप; D4 स पार्थिवः. — c) Dn D11.12 गोसंख्ये; Ca गोसंस्थः. — d) K माद्रीपुत्रश्च वीर्यवान्; B D1.5.6 S °त्रौ महाबलौ (G3 परंतपौ).

7 a) K अंगारकेशाभरणौ; M °षाभरणैः. — b) M उपपन्नौ. D4.6 S मनस्विनौ. — c) K नानारत्नसमुत्थाने; Dn D4.8.11.12 महारथ°. — d) D5m.7.9 जेतारौ. B D (except D3.4.8) T G2 M1.2.4 भरतर्षभौ; G1.3 रक्षणे नृप.

8 a) G1 पद्मविशालाक्षी. — c) B4 D6 सैरिंध्री. — d) B4 Dn D4.10–12 यस्यार्थे; D2.5.7–9 T G2 यदर्थे. G1 M1.2.5 कीचको हतः. — After 8, S (which om. 9) ins.:

C. 4. 2296 B. 4. 71. 8 K. 4. 75. 9 एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी ।
सैरन्ध्री द्रौपदी राजन्यत्कृते कीचका हताः ॥ ८
अर्जुनोऽहं महाराज व्यक्तं ते श्रोत्रमागतः ।
भीमादवरजः पार्थो यमाभ्यां चापि पूर्वजः ॥ ९
उषिताः स्म महाराज सुखं तव निवेशने ।
अज्ञातवासमुषिता गर्भवास इव प्रजाः ॥ १०

वैशंपायन उवाच ।

यदार्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः ।
तदार्जुनस्य वैराटिः कथयामास विक्रमम् ॥ ११
अयं स द्विषतां मध्ये मृगाणामिव केसरी ।

1134* द्रुपदस्य प्रिया पुत्री धृष्टद्युम्नस्य चानुजा ।
अग्निकुण्डात्समुद्भूता द्रौपदीत्यवगम्यताम् ।
भीमः ।
असन्नो दुर्लभः कश्चित्केवलं पृथिवीमनु ।
धनुःस्पृशां तथा श्रेष्ठः कौन्तेयोऽयं धनंजयः ।
एतेन खाण्डवं यस्य अकामस्य शतक्रतोः ।
दग्ध नागवनं चैव सह नागैर्नराधिप ।
वर्षं च शरवर्षेण वारितं दुर्जयेन वै ।
करमाहारिताः सर्वे पार्थिवाः पृथिवीपते ।
स्त्रीवेषं कृतवानेष तव राजन्निवेशने ।
बृहन्नलेति यामाहुरर्जुनं जयतां वरं ।

[ (L. 4) G2 M2 धनुर्भृतां. T2 धनुः; G2 अयं (for तथा). — (L. 5) M2 दग्ध्वा (for यस्य). — M2 om. line 10. ]

9 S om. 9. — $^{a}$) B5 °नोयं; D7.9 अस्म्यर्जुनो (for °नोऽहं). — $^{b}$) D1.2 यदि; Cr व्यक्तं (as in text). — D4 om. $9^{cd}$. — $^{d}$) K1 B4 D5.6 om. च. D2.10 पूजितः (for पूर्वजः). D3 यमलाभ्यां च पूर्वजः.

10 D2 om. $10^{a}$; M2 om. $10^{ab}$. — $^{a}$) K2 B (except B5) D (except D1.3.6; D2 om.) स्मो. S (M2 om.) सुखं सर्वे (for महाराज). — $^{b}$) D10 चिरं (for सुखं). S (M2 om.) तव राजन् (for सुखं तव). — $^{c}$) = 4. 1. $1^{c}$. K1 D6 °वासान्निभृता; B3 °वासे नियता; B4 °वास-निरता; B5 D1.5.7 °वासं (D1 °वास-) निहिता; D4.9 °वास-विहिता; D8 °वासं रहिता; S °वासे निहिता. — $^{d}$) K D6 °वासम्; Cr °वासे (as in text).

11 All N MSS. except B4.5 D1 (Ś1 missing) *repeat* (at different points) $11^{cd}$; while D2.6 repeat (the whole of) 11; for details see below. — $^{a}$) K यद्; M2.4 यथा (for यदा). — $^{b}$) D7.9 तत्र (for पञ्च). — After $11^{ab}$, B4.5 D1.2 ins. 1136* (see below). — $^{c}$) K B4.5 D1–3 ततः; M2.4 तथा (for तदा). — B4.5 D9 ins. after $11^{cd}$: D4.7.8, after the *repetition* of $11^{cd}$: D5, after 1142*:

1135* महेन्द्रकल्पस्य तदा संप्रहृष्टतनूरुहः ।

N ins. after (the *first* occurrence of) 11 (B4.5 D1.2, after $11^{ab}$: D9, after 1135*):

1136* पुनरेव तु तान्पार्थान्दर्शयामास चोत्तरः ।
उत्तर उवाच ।
य एष जाम्बूनदशुद्धगौर-
तनुर्महासिंह इव प्रवृद्धः ।
प्रचण्डघोणः पृथुदीर्घनेत्र-
स्ताम्रायताक्षः कुरुराज एषः ।
अयं पुनर्मत्तगजेन्द्रगामी
प्रतप्तचामीकरशुद्धगौरः ।
पृथ्वायतांसो गुरुदीर्घबाहु-
र्वृकोदरः पश्यत पश्यतैनम् ।
यस्त्वेष पार्श्वेऽस्य महाधनुष्मा-
ञ्श्यामो युवा वारणयूथपोपमः ।
सिंहोन्नतांसो गजराजगामी
पद्मायताक्षोऽर्जुन एष वीरः ।
राज्ञः समीपे पुरुषोत्तमौ यौ
यमाविमौ विष्णुमहेन्द्रकल्पौ ।
मनुष्यलोके सकले समोऽस्ति
ययोर्न रूपे न बले न शीले ।
आभ्यां तु पार्श्वे कनकोत्तमाङ्गी
यैषा प्रभा मूर्तिमतीव गौरी ।
नीलोत्पलाभा सुरदेवतेव
कृष्णा स्थिता मूर्तिमतीव लक्ष्मीः ।

[ (L. 1) D6 om. line 1. K2 B1.2 Dn D4.9–12 च; D3 हि (for तु). D8 कथ° (for दर्श°). — (L. 3) K1 B1.2 Dn D7.9.11.12 महान्सिंह. B4 D4.8 प्रसिद्धः (for प्रवृद्धः). — (L. 4) Cv प्रलंबघोणः. D4.5m.9 °बाहुस्; Cc °नेत्रस् (as above). — (L. 5) K B5 D5(m as above) °यतास्यः; Cc °यताक्षः (as above). — (L. 9) D4 °दरः सोयमिति प्रतापः; D5(marg.; orig. as above).7.9 ताम्रायताक्षः स वृकोदरोयं. — (L. 10) B Dn2 D11.12 एव (for एष). — (L. 12) K D3–7.9.10 गजखेलगामी; B4 D1.2 गजलील°. — (L. 14) B (except B4) Dn D1–3. 11.12 तु; D4 वा; D6.8 तौ (for यौ). — (L. 15) K यमौ च तौ; B4.5 D1.2.4–6 एतौ यमौ (for यमाविमौ). D2.3 °महेंद्रतुल्यौ. — (L. 17) Dn1 D10.11 (before corr.).12

अचरद्रथवृन्देषु निघ्नंस्तेषां वरान्वरान् ॥ १२
अनेन विद्धो मातङ्गो महानेकेषुणा हतः ।
हिरण्यकक्ष्यः संग्रामे दन्ताभ्यामगमन्महीम् ॥ १३
अनेन विजिता गावो जिताश्च कुरवो युधि ।
अस्य शङ्खप्रणादेन कर्णौ मे बधिरीकृतौ ॥ १४
तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान् ।
उत्तरं प्रत्युवाचेदमभिपन्नो युधिष्ठिरे ॥ १५
प्रसादनं पाण्डवस्य प्राप्तकालं हि रोचये ।
उत्तरां च प्रयच्छामि पार्थाय यदि ते मतम् ॥ १६

उत्तर उवाच ।

अर्च्याः पूज्याश्च मान्याश्च प्राप्तकालं च मे मतम् ।
पूज्यन्तां पूजनार्हाश्च महाभागाश्च पाण्डवाः ॥ १७ C. 4. 2312 B. 4 71 24 K 4. 76. 8

गुरुत्वे (for न रूपे). B4. 5 D4. 5. 8 न कुले (Cr cites कुले) (for न बले). D7 (before corr. as above) ययोर्न रूपेण कुलेन तुल्यः. — (L. 18) D7. 9 राज्ञः; Cc आभ्यां (as above). D1 समीपे (for तु पार्श्वे). K D3. 5. 7–9 कनको- (D5. 7 प्रमदो)त्तमाङ्ग्या; Cr as above. — (L. 19) K1 B4 D1. 4 Cc. r सैरी; D2 शुद्धा; D9 लक्ष्मीः; Ccp. rp गौरी (as above). ]

K cont.:

1137* वैशंपायन उवाच ।
एवं निवेद्य तान्पार्थान्पाण्डवान्पञ्च भूपतेः ।

(a line curiously enough reproduced in almost all old printed ed.), and thereafter *repeats* $11^{cd}$. — On the other hand, after 1136*, B1. 3 Dn D3. 5. 9–12 *repeat* $11^{cd}$; while B2 D6 *repeat* (the whole of) 11. Furthermore after 1136*, B4. 5 read and D4. 7. 8 *repeat* $11^{cd}$, which is followed by 1135*. Finally, after $11^{cd}$ (see above), D1. 2 ins.:

1138* भूतपूर्वं न कस्यापि हर्षेणोत्फुल्ललोचनः ।;

while after the *repetition* of $11^{cd}$, D10 ins.:

1139* विराटनृपतेरग्रे यथादृष्टं कुरून्प्रति ।

12 Before 12, K B D (except D7. 9) G3 ins. उत्तर उ° (resp. उत्तरः). — After उत्तर उ°, D5 ins. 1142*. — $^{a}$) K विजयो (for अयं स). D1. 2 विद्विषां (for द्विषतां). B Dn D1–4. 5m. 6. 10–12 हंता (for मध्ये). — $^{c}$) B2 D5. 6 व्यचरद्. G3 दृढवृंदेषु. — $^{d}$) D8 विनिघ्नंस्तान् (for निघ्नंस्तेषां). B (except B1. 3) Dn D5. 10–12 तांस्तान् (for तेषां). B4. 5 D10 धुरंधरान्; Dn1 महारथान्; G3 रथान्वरान्. D3 निघ्नते साधुरापरान्.

13 $^{ab}$) D8 नृप (for हतः). S अनेन विद्धा मातंगा महामेघोपमास्तदा. — $^{c}$) B1–3 Dn D9–12 सुवर्णकक्षः; B4. 5 D1–3 Ca. c हिरण्यकक्षः; S °कक्ष्याः. D1. 2 संनद्धः (for संग्रामे). — $^{d}$) D1. 2 सपताकोगमन्महीं. — After 13, D7 (marg.) ins. 1142*.

14 $^{a}$) K D9 ता जिता; G3 निर्जिता. — $^{b}$) K जितास्ते; S निर्जिताः. — After $14^{ab}$, D1. 2 ins.:

1140* तस्य तत्कर्म वीरस्य न मया तात तत्कृतम् ।,

which is followed by lines 3–4 of 1142*. — $^{c}$) B4 शंखनिनादेन; T G2 शंखस्य शब्देन. — T G2 ins. after 14:

1141* जायते रोमहर्षो मे संस्मृत्यास्य धनुर्ध्वनिम् ।
ध्वजस्य वानरं भूतैराक्रोशन्तं सहानुगैः ।
नाददानं शरान्घोरान्न मुञ्चन्तं शरोत्करान् ।
न कार्मुकं विकर्षन्तमेनं पश्यामि संयुगे ।
एतद्धनुःप्रमुक्ताश्च शराः पुङ्खानुपुङ्खिनः ।
नालक्ष्येषु रणे पेतुर्नाराचा रक्तभोजनाः ।
तीक्ष्णनाराचसंकृत्तशिरोबाहूरुवक्षसाम् ।
कलेवराणि दृश्यन्ते योधानां साश्वसादिनाम् ।
अनेन तटिनी तत्र शोणिताम्बुप्रवाहिनी ।
प्रवर्तिता भीमरूपा यां स्मृत्वाद्यापि मे मनः ।
प्रकम्पते चण्डवायुकम्पिता कदली यथा ।

T G2 cont.: G1. 3 M ins. after 14: D1. 2 (both om. lines 1–2), after 1140*: D5, (after उत्तर उ°, which is ins. in some MSS.) before 12: D7, after 13:

1142* अनेन तात वीरेण भीष्मद्रोणमुखा रथाः ।
दुर्योधनेन सहिता निर्जिता भीमकर्मणा ।
अयं द्रवन्तं भीतं मां देवपुत्रो न्यवारयत् ।
अस्य बाहुबलेनास्मि जीवन्प्रत्यागतः पुनः ।

[(L. 1) S राजन् (for तात). — (L. 2) T1 भीमरूपिणा. — (L. 3) D1. 2 T1 एष (T1 रथाद्) भीतं द्रवंतं मां. — (L. 4) D1. 2 अभ्या° (for प्रत्या°).

For 15–26, S subst. a passage which contains some additions and transpositions. The text of the Southern passage is given separately, with variants, under v. l. 26.

15 For S cf. v. l. 26. — $^{d}$) K B4 अभिपन्ने; D8 उपपन्नं; D5 Cc प्रतिपन्नो; Cr. cp अभिपन्नो (as in text).

16 For S cf. v. l. 26. B5 om. 16. — $^{a}$) B4 प्रसादं पांडवस्यैव; D1. 2. 5m. 7 प्रसादनं पांडवेये (D5m. 7 °वानां); D9. 10 प्रसादं पांडवेयस्य (D9 °वानां च). — $^{b}$) K च (for हि). K D8 रोचते. — $^{d}$) K मे मतं; B (except B4) Dn D2–4. 8. 10–12 मन्यसे; D7. 9 रोचते.

C. 4. 2313
B. 4. 71. 25
K. 4. 76. 5

विराट उवाच ।

अहं खल्वपि संग्रामे शत्रूणां वशमागतः ।
मोक्षितो भीमसेनेन गावश्च विजितास्तथा ॥ १८
एतेषां बाहुवीर्येण यदस्माकं जयो मृधे ।
वयं सर्वे सहामात्याः कुन्तीपुत्रं युधिष्ठिरम् ।
प्रसादयामो भद्रं ते सानुजं पाण्डवर्षभम् ॥ १९
यदस्माभिरजानद्भिः किंचिदुक्तो नराधिपः ।
क्षन्तुमर्हति तत्सर्वं धर्मात्मा ह्येष पाण्डवः ॥ २०

वैशंपायन उवाच ।

ततो विराटः परमाभितुष्टः
समेत्य राज्ञा समयं चकार ।
राज्यं च सर्वं विससर्ज तस्मै
सदण्डकोशं सपुरं महात्मा ॥ २१
पाण्डवांश्च ततः सर्वान्मत्स्यराजः प्रतापवान् ।
धनंजयं पुरस्कृत्य दिष्ट्या दिष्ट्येति चाब्रवीत् ॥ २२
समुपाघ्राय मूर्धानं संश्लिष्य च पुनः पुनः ।
युधिष्ठिरं च भीमं च माद्रीपुत्रौ च पाण्डवौ ॥ २३
नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः ।
संप्रीयमाणो राजानं युधिष्ठिरमथाब्रवीत् ॥ २४
दिष्ट्या भवन्तः संप्राप्ताः सर्वे कुशलिनो वनात् ।
दिष्ट्या च पारितं कृच्छ्रमज्ञातं वै दुरात्मभिः ॥ २५
इदं च राज्यं नः पार्था यच्चान्यद्वसु किंचन ।

17 For S cf. v. l. 26. — [a]) B2.5 Ccp आर्याः; Cc (cf. Cv) अर्च्याः (as in text). — [b]) K प्राप्ते काले; Cr प्राप्तकालं (as in text). K D4 हि (for च). — [c]) B4 D1.2 पूज्यानां. D10 पूज्यंतां चैव पूज्यार्हाः.

18 For S cf. v. l. 26. — [d]) B Dn D1.3.10–12 गावश्चापि जितास्तथा (D3 पराजिताः); D3.4.9 गाश्चापि (D9 °श्चैव) विजितास्तथा.

19 For S cf. v. l. 26. — [a]) B D (except D5.7.9) बाहुवीर्यं तद् (B4 तु; D1 च). — [b]) K यदास्माकं; D4 यद्यस्माकं. B3 D4 जयो रणे; D5 रणे जयः. — [c]) B1.2 Dn D11.12 एवं (for वयं). — [d]) K °पुत्रे °ष्ठिरे. — [e]) K2 D5 प्रसादयाम.

20 For S cf. v. l. 26. — [b]) K2 B4 उक्तं. B3.4 D1.5–8 नराधिप. — [c]) B4 D4–6 अर्हसि. — [d]) B4 D5.6 °त्मा ह्यसि पांडव.

21 For S cf. v. l. 26. — [a]) K2 परमाभितृप्तः; B4.5 D6 प्रथमं (B5 °म-) प्रहृष्टः; D5 परमप्रहृष्टः; D10 प्रथमोभिरुष्टः. D4 ततो विराटोपि पराभि°. — [b]) K राज्ञः; B (except B4) D (except D1.3–6.8.10) राजा. — [c]) D5 transp. सर्वं and तस्मै. — [d]) B (except B5) D5.6.11.12 °कोषं. D8 देशं च कोशं च पुरं महात्मा.

23 For S cf. v. l. 26. — [a]) B4 Dn1 D1.3–7.9 मूर्ध्न्येतान्; D2 तान्मूर्ध्नि. D3 मूर्ध्नि तान्समुपाघ्राय. — [b]) B4 D1.2 समाश्लिष्य; D4 संश्लाघ्य च; D8 संश्लिषंश्च.

24 For S cf. v. l. 26. — [c]) B (except B4) D (except Dn1 D3–7) स (for सं-).

25 For S cf. v. l. 26. K om. 25[cd]. — [c]) B1–3.5 Dn D9.11.12 Ccp संपालितं; B4 D10 च पालितं (for च पारितं). Cc cites पारितं. — [d]) D1.2.5 अज्ञातैश्. B4 D1.2.5.6 च; D7 तैर् (for वै). D3.4 दुरासदं. — After 25, D4.7 ins.:

1143* पृच्छेऽहं कारणं किंचिदुच्यतां तद्यथातथम् ।
देवानामपि शक्तिर्वो रूपप्रावर्तकारिणी ।
मन्येऽप्यहं यथा पूर्वं रूपं वो नाधुना तथा ।
यदा मनुष्यसामान्यमभूदेतर्हि देववत् ।
रूपं कान्ति बलं धैर्यं गुणाः सर्वेऽप्यनीदृशाः ।
सूर्याग्निरुद्रवज्जाता यूयं देवोपमाः क्षणात् ।
युधिष्ठिर उवाच ।
सत्यशौचतपोभिर्नो गुणैः प्रीताः सुरा ददुः ।
धर्मदुर्गाप्रभृतयो रूपप्रावर्तकृद्गुणान् ।

26 For S see below. — [a]) B4 D2.7 transp. च and राज्यं. B (except B4) Dn D1.9–12 पार्थाय; D2–6 वः पार्थाः; D7 पार्था मे; D8 पार्था वो (for नः पार्था). — [b]) B D (except D2.5) अपि (for वसु). — [cd]) B5 D1.2.5.6 यच्च वक्ष्यामि तत्कार्यं (B5 तत्सर्वं) कौंतेये(D5 अर्जुने)नाविशंकया.

☞ For 15–26, S subst.:

1144* वैशंपायनः ।
(15[ab]) तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान् ।
(22[ca],23)धनंजयं परिष्वज्य पांडवानथ सर्वशः ।
नमस्कृत्वा तु राजानं राजन्राज्येऽभिषेचितम् ।
(24[ab]) नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः ।
(24[cd]) संप्रीयमाणो राजानं युधिष्ठिरमथाब्रवीत् । [5]
(25[ab]) दिष्ट्या भवन्तः संप्राप्ताः सर्वे कुशलिनो वनात् ।
(25[cd]) दिष्ट्या च चरितं कृच्छ्रमज्ञातं तैर्दुरात्मभिः ।
(26[ab]) इदं राज्यं च वः सर्वं यच्चास्ति वसु किंचन ।

प्रतिगृह्णन्तु तत्सर्वं कौन्तेया अविशङ्कया ॥ २६
उत्तरां प्रतिगृह्णातु सव्यसाची धनंजयः ।
अयं ह्यौपयिको भर्ता तस्याः पुरुषसत्तमः ॥ २७
एवमुक्तो धर्मराजः पार्थमैक्षद्धनंजयम् ।
ईक्षितश्चार्जुनो भ्रात्रा मत्स्यं वचनमब्रवीत् ॥ २८
प्रतिगृह्णाम्यहं राजन्स्नुषां दुहितरं तव ।
युक्तश्चावां हि संबन्धो मत्स्यभारतसत्तमौ ॥ २९ C 4. 2325 B. 4. 71. 35 K. 4. 77. 6

इति श्रीमहाभारते विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

(26cd) अविभक्तमतेद्भवतां नोत्कण्ठां कर्तुमर्हथ ।
Colophon.
वैशंपायनः ।
विराटस्य वचः श्रुत्वा पार्थस्य च महात्मनः ।
(15cd) उत्तरः प्रत्युवाचेदमभिपन्नो युधिष्ठिरे ।
(16ab) प्रसादनं प्राप्तकालं पाण्डवस्याभिरोचये ।
तेजस्वी बलवाञ्शूरो राजराजेश्वरः प्रभुः ।
(16cd) { उत्तरां च वरारोहां पार्थस्यामित्रकर्शन ।
प्रणिपत्य प्रयच्छामस्ततः शिष्टा भवामहे ।
(19cd) वयं च सर्वे सामात्याः कुन्तीपुत्रं युधिष्ठिरम् ।
प्रसाद्य ह्युपतिष्ठामो राजन्किं करवामहे ।
(18a,c) राजंस्त्वमसि संग्रामे गृहीतस्तेन मोक्षितः ।
(19a,18d) एतेषां बाहुवीर्येण गावश्च विजितास्त्वया ।
कुरवो निर्जिता यस्मात्संग्रामेऽमिततेजसः ।
एष तत्सर्वमकरोत्कुन्तीपुत्रो युधिष्ठिरः ।
(17a) अर्च्याः पूज्याश्च मान्याश्च प्रत्युत्थेयाश्च पाण्डवाः ।
(17b) अर्घ्यार्हाश्चाभिवाद्याश्च प्राप्तकालं च मे मतम् ।
(17cd) पूज्यन्तां पूजनीयाश्च महाभागाश्च पाण्डवाः ।
न ह्येते कुपिताः शेषं कुर्युराशीविषोपमाः ।
तस्माच्छीघ्रं प्रपद्यामः कुन्तीपुत्रं युधिष्ठिरम् ।
(19c) प्रसादयाम भद्रं ते सह पार्थैर्महात्मभिः ।
उत्तरामग्रतः कृत्वा शिरःस्नातामलंकृताम् ।
जानाम्यहमिदं सर्वमेषां तु बलपौरुषम् ।
कुले च जन्म महति फल्गुनस्य च विक्रमम् ।
उत्तरात्पाण्डवाञ्श्रुत्वा विराटो दुःखमोहितः ।
उत्तरां चापि संप्रेक्ष्य प्राप्तकालमचिन्तयत् ।
ततो विराटः सामात्यः सकलत्रः सबान्धवः ।
उत्तरामग्रतः कृत्वा शिरःस्नातां कृताञ्जलिः ।
भूमौ निपतितस्तूर्णं पाण्डवस्य समीपतः ।
विराटः ।
प्रसीदतु महाराजो धर्मपुत्रो युधिष्ठिरः ।
प्रच्छन्नरूपवेषत्वान्नाभिर्द्दष्टस्तृणैर्वृतः ।
शिरसाभिप्रपन्नोऽस्मि सपुत्रपरिचारकः ।
(20ab) यदस्माभिरजानद्भिरधिक्षिप्तो महीपतिः ।
अवमत्य कृतं सर्वमयुक्तं प्राकृतो यथा ।
(20cd) क्षन्तुमर्हति तत्सर्वं धर्मज्ञो बन्धुवत्सलः ।
यदिदं मामकं राष्ट्रं पुरं राज्यं च पार्थिव ।
सदण्डकोशं विसृजे तव भृत्योऽस्मि पार्थिव ।
वयं च सर्वे सामात्या भवन्तं शरणं गताः ।
वैशंपायनः ।
तं धर्मराजः पतितं महीतले
सबन्धुवर्गं प्रसमीक्ष्य पार्थिवम् ।
उवाच वाक्यं परलोकदर्शनः
प्रनष्टमन्युर्गतशोकमत्सरः ।
युधिष्ठिरः ।
न ते भयं पार्थिव विद्यते मयि
प्रतीतरूपोऽस्म्यनुचिन्त्य मानसम् ।
एतत्त्वया सम्यगिहोपपादितं
द्विजैरमात्यैः सदृशैश्च पण्डितैः ।
इमां च कन्यां समलंकृतां भृशं
समीक्ष्य तुष्टोऽस्मि नरेन्द्रसत्तम ।
क्षान्तमेतन्महाबाहो यन्मां वदसि पार्थिव ।
न चैव किंचित्पश्यामि विकृतं ते नराधिप ।
वैशंपायनः ।
(21a) ततो विराटः परमाभितुष्टः
(21b) समेत्य राज्ञा समयं चकार ।
(21c) राज्यं च सर्वं विससर्ज तस्मै
(21d) सदण्डकोशं सपुरं महात्मा ।
Colophon.
विराटः ।
यच्च वक्ष्यामि ते सर्वं मा शङ्केथा युधिष्ठिर ।
इदं सनगरं राष्ट्रं सवनं सवधूजनम् ।
युष्मभ्यं संप्रदास्यामि भोक्ष्याम्युच्छिष्टमेव च ।
अहं वृद्धश्चिरं राजन्भुक्तभोगश्चिरं सुखम् ।
राज्यं दत्त्वा तु युष्मभ्य प्रव्रजिष्यामि काननम् ।

[ (L. 7) G1 प्रचरितं; M1. 2 विच°; M4 दुश्चरितं (for च चरितं). — (L. 8) M1. 2 अन्यद् (for अस्ति). — (L. 9) Hypermetric! G1. 2 M1. 2 विभक्तम् (for अवि°). T1 हि (for एतद्). — Colophon. *Adhy. no.*: T G M1. 4. 5 74; M2 73. — (L. 10) T G पार्थिवस्य (for पार्थस्य च).

# ६७

C. 4 2326
B. 4 72 1
K. 4. 77. 7

विराट उवाच ।
किमर्थं पाण्डवश्रेष्ठ भार्यां दुहितरं मम ।
प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि ॥ १
अर्जुन उवाच ।
अन्तःपुरेऽहमुषितः सदा पश्यन्सुतां तव ।
रहस्यं च प्रकाशं च विश्वस्ता पितृवन्मयि ॥ २
प्रियो बहुमतश्चाहं नर्तको गीतकोविदः ।
आचार्यवच्च मां नित्यं मन्यते दुहिता तव ॥ ३
वयःस्थया तया राजन्सह संवत्सरोषितः ।
अतिशङ्का भवेत्स्थाने तव लोकस्य चाभिभो ॥ ४

— (L. 11) T2 G2.3 अतिभीतो (for अभिपन्नो). — (L. 14) T1 G1 °कर्शन:; G3 °कर्शिन:; M1.2 °घातिन:. M4 पार्थायामित्रकर्शिने; M5 °स्वामिततेजस:. — (L. 15) G2 M4 प्रयच्छाम; M5 प्रदास्याम:. T1 G2 तुष्टा; T2 त्विष्टा. — (L. 16) G1 सर्वे वयं च सामात्या:; G2 वयं सर्वे सहामात्या:; M4 वयं सर्वे च सामात्या:. — (L. 17) G1.3 प्रसाद्याभ्युप°. — (L. 20) M1.2 विजिता (for निर्जिता). G1 सर्वे (for यस्मात्). — M1.2 om. lines 23–24. — (L. 23) G1 आर्याश्चैवाभि°; M4.5 अर्घ्याश्चैवाभि°. — (L. 32) T2 उत्तरं. — (L. 40) T G अज्ञानात् (for ॒कं). — (L. 41) M5 अर्हसि. — (L. 45) G1.3 स (for तं). — (L. 47) T2 G2 परलोकदर्शी; G1.3 M5 °दर्शनं. — (L. 50) M1 आत्मन: (for मानसम्). — (L. 52) T1 M1.2 सुहृदैश्च; G1 सवयोथ; M4.5 सचिवैश्च (for सदशैश्च). — (L. 55) G1 यथा; G2 M4.5 यन्मा; M2 यद्वा (for यन्मां). — (L. 57) T2 परमाभितृप्त:; G2 °भितृप्यन्. — Colophon. *Adhy. no.*: T G M1.4 75; M2.5 74. — (L. 61) G1.3 तत् (for ते). — (L. 64) G3 अहं वृद्धश्च राजेंद्र; M1 अहं वृद्धश्च राज्यं तु. G1 भुक्तभोग: प्रियं सुखं; G2 °भोगसुखश्चिरं; M2 °भोज्यश्च वै सुखं. ]

27 [b]) D4 परंतप (for धनंजय:). — [d]) D4.9.10 °सत्तम. D8 मत्स्यानां पुरुषर्षभ.

28 Before 28, S read वैशं°. — [a]) K1 महाराज; K2 D6 महाराज:. — [b]) D6 धनंजयमवैक्षत. — [c]) D7.9 स ईक्षितस्तदा भ्राता; S ईक्षितं (T1 G1.3 °तश्) चार्जुनो ज्ञात्वा. — [d]) S (except M1.2) मात्स्यं. — After 28, S (M4 hapl. om. line 2) ins.:

1145* वयं वनान्तरात्प्राप्ता न ते राज्यं गृहामहे ।
किं तु दुर्योधनादीनां राज्ञां राज्यं गृहामहे ।

[ (L. 1) G1.2 वनांतात्संप्राप्ता; G3 वनादिह प्राप्ता; M1 वनांतरे प्राप्ता. ]

29 [a]) B4 D6 चैतां; D5 इमां (for राजन्). — [b]) D4 मम (for तव). — [c]) T2 G2 हि (for च). Dn1 D2 वां; D8 एव; Cc.r आवां (as in text). D1 च (for हि). D6 युक्त एवावयोरेष; T1 युक्तोयं वां हि सं°; G1 युक्तो हि राजन्सं°; G3 युक्तो विवाहसं°; M युक्तरूपो हि सं°. Ca cites 29[c] as in text. — [d]) Dn D1–3.9.11.12 मत्स्यभारतयोरपि (D8 °योस्तथा; D9 °योरयं); D6 संबंध: कुरुमत्स्ययो:; S मा(T1 G2 म)त्स्यभारतवंशयो:; Ca.c.r as in text.

Colophon (Ś1 M3 missing). T G M1.2.4.5 om. it. — *Sub-parvan:* B1.3.4 D1.2.5.6 अभिमन्युविवाह:; D3.7 उत्तराप्रदानं (D8 °दापनं); D4 परस्परप्रीतिसंवाद:; D8 मत्स्यवाक्यं: D9 उत्तरावरप्रदान:. — *Adhy. no.* (figures, words or both): K1 66; D5 65; D6 68; D10 62. — *S'loka no.*: D1 37.

## 67

Ś1 M3 missing (for the entire adhy. (cf. v. l. 4. 64. 29; 65. 11). The MSS. are completely ignored here, in the critical apparatus.

2 [c]) D1 वयस्थया तया राजन्; D2 M1.4.5 रहस्ये च प्रकाशे च; D5 रहश्चैव प्रकाशं च. — [d]) K2 B5 Dn D9.11.12 T1 विश्वस्तां; D1 सहस्तं.

3 [a]) T2 G2 भूयो (for प्रियो). B (except B4) Dn1 D1.2.9–12 T G1 बहुतमश्. B D (except D2.4.6.7) S (except T2 G2) आसं (for अहं). — [b]) D4 S नर्तने (D4 °को) गीतवादिते (D4 T2 G1.3 °वादने).

4 [a]) S (except T1) वयस्यया. Cc cites वय:स्था. G1.3 अनया (for तया). — [b]) D8 सोहं; D4.5.10 अहं (for सह). — [c]) K इति; D1.4–6.9.10 Cc.r अभि-; D2 अवि- (for अति-). D5.6 T1 G1 M तत:; Cr.s भवेत् (as in text). T1 G1 M1.2.5 अस्थाने; G3 तस्या: (for स्थाने). — [d]) D5 भवेत् (for तव). K D3 चोभयो:; B Dn D1.2.5.6.8.10–12 वा विभो (B4 वाबुभौ); D7 वाभिभो; S च (M1.2 वा) प्रभो.

5 [a]) Dn1 D6 न मंत्रये; D1–4.7.9 S Cr आमंत्रये; Ca.c.n.s निमंत्रये (as in text). B1.3–5 D8 अहं त्वां; B2 Dn D11.12 अयं ते; D1.2.6 हि त्वां; D3.4 अहं ते; D5 त्वां तु; D10 अयं त्वां; S त्वां हि (G1 त्वाद्य) (for त्वाहं)

तस्मान्निमन्त्रये ...
शुद्धो जितेन्द्रियो दान्तस्तस्याः शुद्धिः कृता मया ॥ ५
स्नुषाया दुहितुर्वापि पुत्रे चात्मनि वा पुनः ।
अत्र शङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ॥ ६
अभिषङ्गादहं भीतो मिथ्याचारात्परंतप ।
स्नुषार्थमुत्तरां राजन्प्रतिगृह्णामि ते सुताम् ॥ ७
स्वस्रीयो वासुदेवस्य साक्षाद्देवशिशुर्यथा ।
दयितश्चक्रहस्तस्य बाल एवास्त्रकोविदः ॥ ८
अभिमन्युर्महाबाहुः पुत्रो मम विशां पते ।
जामाता तव युक्तो वै भर्ता च दुहितुस्तव ॥ ९

विराट उवाच ।

उपपन्नं कुरुश्रेष्ठे कुन्तीपुत्रे धनंजये ।
य एवं धर्मनित्यश्च जातज्ञानश्च पाण्डवः ॥ १०
यत्कृत्यं मन्यसे पार्थ क्रियतां तदनन्तरम् ।
सर्वे कामाः समृद्धा मे संबन्धी यस्य मेऽर्जुनः ॥ ११

वैशंपायन उवाच ।

एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः ।
अन्वजानात्स संयोगं समये मत्स्यपार्थयोः ॥ १२ C. 4. 2347 B 4 72 13 K. 4 77. 18

---

Cc cites अहं and त्वा. D9 तस्मादामंत्रयेथा. — b) D1 Cn दुहिता; D7. 8 Crp (Dev.) दुहित्रा; Cr दुहितुः (as in text). B1. 3 दुहित्रर्थे महीपते; B2 Dn D3. 4. 11. 12 दुहितां (D4 °ता) मनुजाधिप; D9 (hypermetric!) दुहित्रर्थे पृथिवी°; D10 दुहितारं नराधिप; S दुहित्रर्थं (G1 पुत्रार्थं मे) विशां पते. — c) B (except B4) D1. 2. 5. 6 S Ca शुद्धं; D8 योद्धं; D9 शुद्धां; Cc. s शुद्धः (as in text). B (except B4) D5. 6. 8 S जितेंद्रियं; D1. 2 यतेंद्रियं; D9 जितेंद्रियां; Cc as in text. K1 क्षत्तः; B1–3. 5 D1. 2. 5m. 8 Ca rp दांतं; B4 Cc शांतः; D5. 6 Cr शांतं; S मन्ये; Cc दांतः (as in text). — d) K इति; B1–3 D1. 2. 6. 8. 10 G1 M1. 2. 5 तस्य; Ca. c. r तस्याः (as in text). K transp. कृता and मया.

6 a) K2 B1–3. 5 G1. 3 M1 Cc स्नुषायां; Ca. r स्नुषाया (as in text). D1. 2 च (for वा). B4 D5 स्नुषायां दुहितरि वा. Ca. c. r cite दुहितुः. — b) D4 पुत्री; D8 तुल्ये; M1. 2. 4 पित्रे; Ca. c. r पुत्रे (as in text). D4 G1 M1. 4 वा (for च). D6 पुत्रेण (for पुत्रे च). D1 मयि; Cr पुनः (as in text). — c) B1. 4. 5 D1. 2. 5. 6 Cr अभिशंकां; D4. 7 S Ca. c अतिशंकां. — d) D3 तस्य; Cc तेन (as in text).

7 a) K1 B1–3. 5 Dn D11. 12 Cs अभिशापात्; B4 D5 (m as in text). 6 अभिशंकात् (cf. Cr); Cc अतिषंगात्; Ccp अतिशंकात् (cf. Ca); Crp अभिषंगात् (as in text). — b) B1–3 Dn D8–12 T G2 मिथ्यावादात्; Ca. c (cf. Cr) मिथ्याचारात् (as in text).

8 a) K स्वस्रेयो; Ca. c स्वस्रीयो (as in text). — b) K T2 G2. 3 देवसुतो. D1 प्रियः (for यथा). D2 साक्षाद्देवसुतोपमः. — c) M4 दयितश्च कृतस्तस्य. — d) B2. 5 सर्वास्त्रेषु च कोविदः; Dn2 D11. 12 एक एवास्त्रको°; S बलवानस्त्रको°.

9 a) D5 (m as in text). 6 °राज (for °बाहुः). — c) B4 D5. 6 असौ; D1. 2 अयं (for वै). — d) B4 D3. 5 तु; D8 अपि; T1 M अथ; G3 स (for च).

10 a) D1. 3. 7–9 T1 G3 M2. 5 कुरुश्रेष्ठ; D10 सर्वमिदं. — b) K1 D1. 3. 9 G1 °पुत्रो; B4 °पुत्र. B4 D9 °जयः; D1 जय. — c) Dn1 D2. 5. 6. 9. 10 य एष; T1 यदैव; T2 G1. 2 सदैव; G3 M यदेव (for य एवं). D5 धर्मनिष्ठश्च; G2 धर्मनित्यं च. B4 एष धर्मश्च नित्यश्च; D8 य एव धर्मं निश्चित्य. — d) D5 M ज्ञातज्ञेयश्च; D7 T1 ज्ञातज्ञानश्च; T2 G1. 2 शास्त्रज्ञानं च. D8 T2 G1. 2 M4 पांडव.

11 a) K D3. 4. 8 Crp कृतं; Cc. r कृत्यं (as in text). G1 यत्कर्तव्यं च ते पार्थ. — c) D10 समृध्यंतां. — d) K D2. 4. 5 G3 च (for मे). M2. 5 भवान् (for ऽर्जुनः).

12 a) Dn2 D10 राजेंद्रो; G1 M1. 4 राजेंद्र; M2. 5 मात्स्ये तु. — c) B2 D1. 2. 5 अन्वजानीत; B4 D6 अनुजानीत; B5 Dn D7. 11. 12 अन्वशासत्स; S अन्वजानत (G3 °जानाच्च) (for अन्वजानात्स). Cs. cp cite अन्वशासत्, Cc अन्वजानात्. ❀ Ca: अनुनोत् अनुमतवान्। ❀ B (except B5) D1. 2. 5. 6 S संबंधं (for संयोगं). — d) S समये कृष्णमात्स्ययोः.

13 a) T G3 M5 (*sup. lin.*) दूतान्; G1 M4. 5 युक्तं; G2 दूता; M1. 2 युक्त- (for ततो). D10 transp. मित्रेषु and सर्वेषु. G1 संबंधं (for सर्वेषु). — b) B1. 3. 5 T1 वासुदेवं. K च शीघ्रगान्; B2. 4 D5 च पार्थिवः; D1 निमंत्रणं; D3 च भारतः; D6 च पांडवाः. — c) D8 दूतांश्च (for कौन्तेयो). — d) D4 विराटश्चैव भारत; D8 कौरव्येपि विराटकः. — After 13, S ins. a passage given in App. I (No. 60), ending with an addl. colophon (*adhy. no.*: 76). — For a repetition of 13 (with v. l.) in S cf. v. l. 14.

C. 4. 2248 B. 4. 72. 13 K. 4. 77. 19 ततो मित्रेषु सर्वेषु वासुदेवे च भारत ।
प्रेषयामामास कौन्तेयो विराटश्च महीपतिः ॥ १३
ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः ।
उपप्लव्ये विराटस्य समपद्यन्त सर्वशः ॥ १४
तस्मिन्वसंश्च बीभत्सुरानिनाय जनार्दनम् ।
आनर्तेभ्योऽपि दाशार्हानभिमन्युं च पाण्डवः ॥ १५
काशिराजश्च शैब्यश्च प्रीयमाणौ युधिष्ठिरे ।
अक्षौहिणीभ्यां सहितावागतौ पृथिवीपते ॥ १६
अक्षौहिण्या च तेजस्वी यज्ञसेनो महाबलः ।
द्रौपद्याश्च सुता वीराः शिखण्डी चापराजितः ॥ १७
धृष्टद्युम्नश्च दुर्धर्षः सर्वशस्त्रभृतां वरः ।
समस्ताक्षौहिणीपाला यज्वानो भूरिदक्षिणाः ।
सर्वे शस्त्रास्त्रसंपन्नाः सर्वे शूरास्तनुत्यजः ॥ १८
तानागतानभिप्रेक्ष्य मत्स्यो धर्मभृतां वरः ।
प्रीतोऽभवद्दुहितरं दत्त्वा तामभिमन्यवे ॥ १९
ततः प्रत्युपयातेषु पार्थिवेषु ततस्ततः ।
तत्रागमद्वासुदेवो वनमाली हलायुधः ।
कृतवर्मा च हार्दिक्यो युयुधानश्च सात्यकिः ॥ २०

---

14 Before 14, S ins. वैशं°. — a) D1 T1 G3 तत्र (for ततस्). — c) K D3 उपप्लवे; B Dn D1. 5. 6. 9–12 Cc. s उपप्लव्यं; S उपप्लाव्ये. — d) S वासं चक्रुः पुरोत्तमे. — After 14, T G2. 3 ins.:

1146* विराटेन सपुत्रेण पूज्यमानाः समावसन् ।

T G2. 3 cont.: G1 M (which om. 15) ins. after 14:

1147* दूतान्मित्रेषु सर्वेषु ज्ञातिसंबन्धिकेष्वपि ।
प्रेषयामास कौन्तेयो विराटश्च महीपतिः ।

[ =(var.) 13. — (L. 1) G1 M ततो (for दूतान्). ] Thereafter G1 M read 20, and T G2. 3 read 20abcd (cf. v. l. 20 also).

15 G1 M om. 15. — ab) B1–3 Dn D10–12 अभिमन्युं च; D2–4. 7–9 तस्मिन्वसत्सु. B4 D5. 6 स (for च). — For 15abcd, T G2. 3 subst.:

1148* अभिमन्युं समादाय रामेण सहितस्तदा ।
सर्वयादवमुख्यैश्च संवृतः परवीरहा ।
शङ्खदुन्दुभिनिर्घोषैर्विराटनगरं ययौ ।,

followed by 20ef. — c) K D7. 8 हि; D5. 6 अथ (for अपि). D2 दाशार्हं; Ca दाशार्हान् (as in text). D4 आनिन्येथ्योय दा°. — d) B (except B4) Dn D7. 8. 10–12 आनयामास (for अभिमन्युं च). K2 D3 पांडवं.

16 S transp. 16–19 (G1 M om. altogether 17c–18b) and 20–24. — a) T1 चैद्यश्च (for शैब्यश्च). — b) T2 G1. 2 M2. 4. 5 भजमानौ; M1 महात्मानौ (for प्रीयमाणौ). D3 S (except G1) °ष्ठिरं. — D3. 10 om. (hapl.) 16cd. — c) D1 अक्षौहिणीसमायुक्तौ. — d) K1 Dn D1. 2. 7. 9. 11. 12 T2 G1 °वीपती.

17 For sequence in S cf. v. l. 16. — a) B (except B4) Dn D10–12 सहितः (for तेजस्वी). S अक्षौहिणीभिः (G2 °भ्यां) पांचालः (G3 M5 °ल्यः). — b) T1 G2. 3 तिसृभिश्च; T2 ते त्रिभिश्च; G1 M त्रिभिरेव; Ca. c यज्ञसेनः (as in text). M4 (sup. lin.). 5 समन्वितः (for महाबलः). — After 17ab, G1 M1. 4. 5 ins.:

1149* सह पुत्रैर्महावीर्यैर्धृष्टद्युम्नशिखण्डिभिः ।

G1 M1. 4. 5 (which om. 17c–18b) cont.: M2 (om. line 1) ins. after 17ab: T G2. 3 ins. after 18ab (T1 ins. line 1, for the first time, after 1149*):

1150* उपप्लाव्यं ययुः शीघ्रं पाण्डवार्थे महाबलाः ।
ततः शतसहस्राणि प्रयुतान्यर्बुदानि च ।
समीपमभिवर्तन्ते योधा यौधिष्ठिरं बलम् ।
समुद्रमिव घर्मान्ते स्रोतःश्रेष्ठाः पृथक्पृथक् ।

[ (L. 3) M4 अभ्यवर्तत; M5 अभिवर्तत. — (L. 4) G1 प्रावृट्काले यथा सिंधुं (for the prior half). ] — G1 M om. 17c–18b. — c) K पिता (for सुता). K2 वीर (for वीराः).

18 For sequence in S cf. v. l. 16. G1 M om. 18ab (cf. v. l. 17). — After 18ab, T G2. 3 ins. 1150* (cf. v. l. 17). — c) B4 समस्ताक्षौहिणीयुक्ताः; S आ(T1 G3 अ)पूरयन्महीपालाः. — d) G1 M सर्वे पांडुसुतं तदा. — K1 om. 18e; G3 om. 18ef. — e) B1–3. 5 Dn2 D2. 9. 11. 12 T G2 वेदावभृथसंपन्नाः; B4 D1 सर्वशास्त्रास्त्र°; Dn1 D5 (m as in text). 6. 10 Cnp वेदाध्ययन°. — f) T G2 transp. सर्वे and शूराः. D3 सर्वे युद्धविशारदाः.

19 For sequence in S cf. v. l. 16 (G1 M read 19 after 1162*). — D2 om. 19ab. — a) D4. 9 समालोक्य (for अभिप्रेक्ष्य). G1 M तत्रस्थायां (M4 निविष्टायां) तु सेनायां. — b) G1 M मात्स्यो. T G2. 3 पार्थो ज्ञानभृतां (G3 °वतां) वरः. — After 19ab, B D (except D1–3. 8) T G2. 3 ins.:

1151* पूजयामास विधिवत्सभृत्यबलवाहनान् ।

अनाधृष्टिस्तथाक्रूरः साम्बो निशठ एव च ।
अभिमन्युमुपादाय सह मात्रा परंतपाः ॥ २१
इन्द्रसेनादयश्चैव रथैस्तैः सुसमाहितैः ।
आययुः सहिताः सर्वे परिसंवत्सरोषिताः ॥ २२
दश नागसहस्राणि हयानां च शतायुतम् ।
रथानामर्बुदं पूर्णं निखर्वं च पदातिनाम् ॥ २३
वृष्ण्यन्धकाश्च बहवो भोजाश्च परमौजसः ।
अन्वयुर्वृष्णिशार्दूलं वासुदेवं महाद्युतिम् ॥ २४
पारिबर्हं ददौ कृष्णः पाण्डवानां महात्मनाम् ।
स्त्रियो रत्नानि वासांसि पृथक्पृथगनेकशः ।
ततो विवाहो विधिवद्ववृते मत्स्यपार्थयोः ॥ २५
ततः शङ्खाश्च भेर्यश्च गोमुखाडम्बरास्तथा ।
पार्थैः संयुज्यमानस्य नेदुर्मत्स्यस्य वेश्मनि ॥ २६
उच्चावचान्मृगाञ्जघ्नुर्मेध्यांश्च शतशः पशून् । C. 4 2363 B. 4. 72 28 K. 4 78 31

[ T G2. 3 यथार्हं राजसत्तमान् (for the posterior half). ] — T om. 19^cd. — ^cd) G M प्रीतो दुहितरं गृह्य प्रददावभिमन्यवे.

20 S reads 20 after 1147* (T G2. 3, however, reads 20^ef after 1148*). For S cf. v. l. 16 also. — ^a) S तेषु तत्रोपविष्टेषु. — ^b) S (M4 *sup. lin.*) (M4 orig. प्रेषयत्सु) (for पार्थिवेषु). G2. 3 इतस्ततः. — ^c) D1. 2 अथ (for तत्र). B4 D5. 6 आगच्छद् (for आगमद्). S महाबाहुर् (for वासुदेवो). — ^d) T2 G2. 3 बलानुजः (for हला°). — After 20^cd, T1 G3 ins.:

1152* ते दूता द्वारकामेत्य दृष्ट्वा वृष्णीन्महारथान् ।
ऊचुः प्राञ्जलयस्तत्र पाण्डवानां मतं तदा ।

[ (L. 1) T1 कृष्णं महाबलं (for वृष्णीन्महा°). ]

T1 G3 cont.: T2 G2 ins. after 20^cd:

1153* तस्मिन्काले निशम्याथ दूतवाक्यं जनार्दनः ।
दयितं स्वस्त्रियं पुत्रं सुभद्रायाः सुमानितम् ।

Thereafter T G2. 3 read 1148*.

21 For sequence in S cf. v. l. 16. — ^a) S (except G1) अथ (for तथा). D8 शूरः (for अक्रूरः). — ^b) Some MSS. शांबो. — After 21^ab, D4. 7 ins.:

1154* अन्येऽपि बहवः शूरा नृपाः प्रीतिपरायणाः ।
विभ्यन्केऽपि समाजग्मुः पाण्डवेभ्यो हितैषिणः ।;

while S ins.:

1155* प्रद्युम्नश्च महाबाहुरुल्मुकश्च महाबलः ।

— ^d) K transp. सह and मात्रा. M2 भ्रात्रा (for मात्रा). D2. 4. 8. 9 परंतप. — After 21, T G2. 3 ins.:

1156* कृष्णेन सहिताः सर्वे पाण्डवान्द्रष्टुमागताः ।

22 For sequence in S cf. v. l. 16. — ^a) D1 M इंद्रसेनमुखाश्चैव; G1 इंद्रस्यैवायुधैश्चापैः. — ^b) B4 D8 रथस्थैः; D1. 2 रथैस्ते; D3 रथाश्वैः. K D1. 2 तु समाहितैः; B4 सुसमावृतैः. — ^c) T G2. 3 उपेयुः; G1 M1. 2. 4 प्रययुः. T G1. 3 सादिनः (for सहिताः). — ^d) D5. 6 संवत्सरमथो- (D6 °मुपो)षिताः.

23 For sequence in S cf. v. l. 16. — ^a) D4. 6 m. 7. 9 त्रिंशत् (for दश). — ^b) B4 रथानां (for हयानां). B1. 3 Dn D1–4. 5 m. 6–12 दशायुतं; B2. 4 D5 तथायुतं. G1 हयानां द्विगुणं तथा. — ^c) B4 हयानाम्; Dn1 अश्वानाम् (for रथानाम्). K अयुतं; G1 नियुतं (for अर्बुदं). B4 T2 तूर्णं. — ^d) Dn1 D10 निर्बुदं च; D2 खर्वं चैव; G2 नियुतं च. S (except G3) पदातयः.

24 For sequence in S cf. v. l. 16. — ^a) B (except B5) D1. 2. 5. 6 G1. 3 M शतशो; T G2 ते सर्वे (for बहवो). — ^b) D1. 2 भोजाश्चैव महौजसः. — ^d) B4. 5 D6 महामतिं; D5 जनार्दनं. — After 24, T G2. 3 ins. a passage given in App. I (No. 61).

25 Dn2 D11 om. 25^ab. — ^a) B5 D1. 6. 10 T1 Ca. c. r परिबर्हं; D8 परिग्रहं. — ^c) D3 दास्यो (for स्त्रियो). — After 25^cd, D3–5. 7–9 ins. a passage given in App. I (No. 62); while T G2. 3 ins.:

1157* राजानो राजपुत्राश्च निवृत्ते समये तदा ।
यथार्हं पाण्डवश्रेष्ठे ह्यवर्तन्ताभिपूजिताः ।
आसन्प्रहृष्टमनसः पारिबर्हं ददुस्तदा ।

T1 G3 cont.: G1 M ins. after 25^cd:

1158* वैशंपायनः ।
तेषु तत्र समेतेषु राजानो वृष्णिभिः सह ।

[ T1 तेषु तत्रोपविष्टेषु; G1 सर्वेषु समवेतेषु. T1 G1. 3 राजभिः; M1 (marg.) राजन्वै (for राजानो). M2 पांडवेषु महात्मसु. ]

— ^e) G1. 3 M विवाहो विधिवद्राजन्. — ^f) B1–3. 5 Dn D1–3. 9–12 S ववृधे (G2 चक्रिरे); B4 D8 निवृत्तो. K2 वृष्णिपार्थयोः; S कुरुमात्स्ययोः.

26 ^a) D1. 2 S ततः शंखा (G3 M4. 5 °ख-) मृदंगाश्च. — ^b) D1. 2 गोमुखं. D1 डंबरास्; D2 S डिंडिमास्. K D10 गोमुखो(K2 °खौ)दुंबरास्तथा; B D3. 5. 6. 8 पणवानक(B4 °श्चापि)गोमुखाः. — ^c) K वाद्यान्यायुज्यमानस्य; Dn1 D9 पार्थैः संयुज्यमानाश्च (D9 °नैस्तु); D2–4. 7. 8 G2 M1. 2. 4

C. 4. 2364 B 4. 72. 28 K 4. 72. 31 सुरामैरेयपानानि प्रभूतान्यभ्यहारयन् ॥ २७
गायनाख्यानशीलाश्च नटा वैतालिकास्तथा ।
स्तुवन्तस्तानुपातिष्ठन्सूताश्च सह मागधैः ॥ २८
सुदेष्णां च पुरस्कृत्य मत्स्यानां च वरस्त्रियः ।
आजग्मुश्चारुसर्वाङ्ग्यः सुमृष्टमणिकुण्डलाः ॥ २९
वर्णोपपन्नास्ता नार्यो रूपवत्यः स्वलंकृताः ।
सर्वाश्चाभ्यभवत्कृष्णा रूपेण यशसा श्रिया ॥ ३०
परिवार्योत्तरां तास्तु राजपुत्रीमलंकृताम् ।
सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे ॥ ३१
तां प्रत्यगृह्णात्कौन्तेयः सुतस्यार्थे धनंजयः ।
सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा ॥ ३२
तत्रातिष्ठन्महाराजो रूपमिन्द्रस्य धारयन् ।
स्नुषां तां प्रतिजग्राह कुन्तीपुत्रो युधिष्ठिरः ॥ ३३
प्रतिगृह्य च तां पार्थः पुरस्कृत्य जनार्दनम् ।
विवाहं कारयामास सौभद्रस्य महात्मनः ॥ ३४
तस्मै सप्त सहस्राणि हयानां वातरंहसाम् ।

---

पार्थैः सं($D_{4}$ तु)पूज्यमानस्य ($D_{4}$ °नैस्तु; $D_{8}$ °नास्तु); T $G_{3}$ अभिमन्योर्विवाहे तु; $G_{1}$ पणवाश्च मृदंगाश्च. — $^{d}$) $G_{2.3}$ $M_{1.2.4}$ मात्स्यस्य. $G_{1}$ विनेदुस्तस्य वेश्मनि; $M_{5}$ व्यनदन्पार्थवेश्मनि.

27 $^{b}$) $D_{1.2}$ बहवः (for शतशः). $G_{3}$ शतशस्तथा. — $^{c}$) $G_{1.3}$ M भक्ष्यान्नभोज्यपानानि. — $^{d}$) $D_{2}$ अव°; $D_{5}$ उप°; $C_{c}$ अभ्य° (as in text). $G_{3}$ प्रभूतान्नान्यकारयन्.

28 $^{b}$) $D_{3.7.12}$ $T_{2}$ नट- (for नटा). — $^{c}$) $D_{6}$ चापि (for तान्). $D_{4.7.9}$ उपातिष्ठंत तत्रैव. — After 28, S ins.:

1159* स्त्रियो वृद्धाः कुटुम्बिन्य उत्सवज्ञाश्च मङ्गलैः ।
द्रौपद्यन्तःपुरे चैव विराटस्य गृहे स्त्रियः ।
[ (L. 1) $T_{2}$ $G_{1.2}$ $M_{5}$ मंगले (for मङ्गलैः). ]

29 $^{a}$) $K_{1}$ सुदोष्णां. $D_{6}$ $G_{1.3}$ M तु (for च). — $^{b}$) $B_{1.3}$ $D_{4.7}$ (m as in text). $_{9}$ च पुरस्त्रियः; S केवलाः स्त्रियः. — $^{c}$) S चारुपी . . .

30 $Dn_{1}$ om. $30^{b}$–$31^{a}$. $K_{1}$ (hapl.) om. $30^{c}$–$31^{b}$. — $^{c}$) $Dn_{2}$ $D_{4.11.12}$ सर्वास्ता; $D_{8}$ सर्वाभ्यश्च; $G_{1}$ सर्वासां (for सर्वाश्च). $K_{2}$ B $Dn_{2}$ $D_{2.3.5.7.9-12}$ $G_{3}$ $M_{4.5}$ $C_{n.s}$ अभ्यभवन्; $D_{6}$ $T_{2}$ अभ्यद्रवन्; $D_{8}$ चाभवत्; $T_{1}$ अभ्यजयत्; $G_{1}$ ह्यभवत्; $G_{2}$ अभ्यद्रवत्; $M_{1}$ (*sup. lin.*) अप्यभवन्; $C_{a.c}$ as in text. $D_{6}$ $T_{2}$ $G_{2}$ कृष्णां. — $^{d}$) $D_{2}$ वयसा; S वपुषा (for यशसा). $D_{8}$ $T_{2}$ $G_{2}$ स्त्रियः; $C_{a}$ श्रिया (as in text).

$K_{1}$ om. $31^{ab}$; $Dn_{1}$ om. $31^{a}$ (cf. v. l. 30). — $^{a}$) $D_{1.2}$ तस्थुः; T $G_{2.3}$ $M_{1.4.5}$ श्लाघ्यां; $G_{1}$ तां च (for तास्तु). — $^{b}$) $D_{8}$ यशस्विनीं; $G_{2}$ अनिंदितां (for अलंकृतां). — $^{c}$) $M_{2}$ शचीम् (for सुताम्). — $T_{1}$ ins. after 31: $G_{3}$, after 1162*:

1160* धौम्यो महर्षिभिस्तत्र समाधाय च पावकम् ।
जुहाव विधिवद्विद्वान्पाण्डवानां पुरोहितः ।

$T_{1}$ cont.: $T_{2}$ $G_{2.3}$ ins. after 31:

1161* भृङ्गारं तु समादाय सौवर्णं जलपूरितम् ।
पार्थस्य हस्ते सहसा सतामिन्दीवरेक्षणाम् ।
स्नुषार्थं प्राक्षिपद्वारि विराटो वाहिनीपतिः
[ (L. 1) $G_{3}$ कलशं (for भृङ्गारं). ]

32 ) $B_{1.3.4}$ $M_{1.2.4}$ महात्मनः; T G $M_{5}$ महामनाः (for धनं°). — $^{c}$) $Dn_{1}$ आजग्मुश्चारुसर्वांग्यो; $D_{8}$ °द्रस्याथ बीभत्सुः; $G_{1}$ नयत्यकं समानीय. — $^{d}$) $D_{8}$ $T_{2}$ विराटस्य सुतां तदा.

33 $^{a}$) T गृहीत्वा तु; $G_{2}$ महातेजाः (for महाराजः). — $^{c}$) $D_{4}$ transp. स्नुषां and तां. $G_{1}$ सुतां (for स्नुषां). $D_{6}$ सं- (for तां). $B_{4}$ °गृह्णात्स; S °गृह्णानः (for °जग्राह). — $^{d}$) $G_{3}$ धनंजयः (for युधि°). — G M ins. after 33; $T_{1}$, after 1174*:

1162* द्रुपदश्च विराटश्च शिखण्डी च महायशाः ।
काशिराजश्च शैब्यश्च धृष्टद्युम्नश्च सात्यकिः ।
सप्तैतेऽक्षौहिणीपाला यज्वानो भूरिदक्षिणाः ।
परिवार्य पाण्डवं सर्वे निवेशं चक्रिरे तदा ।

Thereafter $G_{1}$ M read 19; while $G_{2}$ *repeats* $19^{ab}$ (v. l. तत्रस्थायां तु सेनायां for the prior half), followed by $19^{cd}$. On the other hand, after 1162*, $G_{3}$ ins. 1160*, and thereafter *repeats* $19^{ab}$ (with v. l. as in $G_{2}$), followed by $19^{cd}$.

34 $^{a}$) $D_{8}$ प्रत्यगृह्णाच्च; $D_{7.8}$ परिगृह्य च. K $D_{5}$ तु तां; T अथ तां; $G_{1}$ उत्तरां (for च तां). $G_{2.3}$ M मुदा गृह्योत्तरां पार्थः. — $^{b}$) $G_{1}$ M आनाय्य च जना°. — After 34, $T_{1}$ ins.:

1163* धौम्यः शिष्यैः परिवृतो भानुमानिव रश्मिभिः ।

$T_{1}$ cont.: G M ins. after 34:

1164* ततो विवाहो ववृधे स्फीतः सर्वगुणान्वितः ।
सौभद्रस्याद्भुतश्चैव पितुस्तव पितुस्तदा ।
[ (L. 1) $T_{1}$ $M_{2.4.5}$ ववृते. $G_{2}$ स्थितः (for स्फीतः). ]

$G_{2.3}$ cont.: $T_{2}$ ins. after 34:

द्वे च नागशते मुख्ये प्रादाद्बहु धनं तदा ॥ ३५
कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः ।
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः ॥ ३६
गोसहस्राणि रत्नानि वस्त्राणि विविधानि च ।
भूषणानि च मुख्यानि यानानि शयनानि च ॥ ३७
तन्महोत्सवसंकाशं हृष्टपुष्टजनावृतम् ।
नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ॥ ३८

C. 4. 2373
B. 4. 72. 40
K. 4. 78. 52

इति श्रीमहाभारते विराटपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

॥ समाप्तं वैवाहिकपर्व ॥

॥ समाप्तं विराटपर्व ॥

1165* धौम्यः शिष्यैः परिवृतो जुहावाग्नौ विधानतः ।
अग्निं प्रदक्षिणं कुर्वन्सौभद्रः पाणिमग्रहीत् ।

Thereafter G2.3 repeat 32c–33b. Then G2.3 cont.: T1 G1 M ins. after 1164*:

1166* ततः पार्थाय संहृष्टो मात्स्यराजो धनं महत् ।

35 d) D1.2 T G2 धनं; D3 ददौ (for प्रादाद्). D1.2 T G2.3 -विधं (for धनं). K D1.2.5.10 T तथा (for तदा). G1 M विराटः प्रददौ तदा. — After 35, D1.2.3 T G2.3 ins.:

1167* प्रादान्मत्स्यपतिर्हृष्टः कन्याधनमनुत्तमम् ।

[ G2 प्रादान्मात्स्यः प्रहृष्टोथ. D1.2.3 प्रीत्यर्थमभिमन्यवे (for the posterior half). ]

T1 G2.3 cont.: G1 M ins. after 35:

1168* पारिबर्हं च पार्थस्य प्रददौ मत्स्यपुंगवः ।
कृष्णेन सह कौन्तेयः प्रत्यगृह्णात्प्रभूतवत् ।

[ (L. 1) M परिबर्हं. — (L. 2) G1 प्रतापवान् (for प्रभूतवत्). ]

On the other hand, B D (except D1–3.8.10) ins.: after 35:

1169* हुत्वा सम्यक्समिद्धाग्निमर्चयित्वा द्विजन्मनः ।
राज्यं बलं च कोशं च सर्वमात्मानमेव च ।

[ (L. 1) D4.7.9 द्विजानथ (for द्विजन्मनः). — (L. 2) D4.7.9 सदंडकोशं (for बलं च कोशं). ]

B4 D4–7.9 cont.:

1170* न्यवेदयत्पाण्डवेभ्यो विराटः प्रीतिमांस्तदा ।

36 a) G1 दत्वा रत्नानि सर्वाणि. — b) D3 T2 G2.3 M5 °राजो (for °पुत्रो).

37 ab) K B4 D2.3 transp. रत्नानि and वस्त्राणि. D5 वासांसि (for वस्त्राणि). T2 विविधानि च रत्नानि; G1 तथा सुवर्णरत्नानि (for a). — Dn1 (hapl.) om. 37cd. — c) D4 भूषणानां. D4.7.9 रत्नानि; D6 चित्राणि; S सर्वाणि (for मुख्यानि). D8 भूषणानि परार्ध्यानि. — d) K2 G1 विविधानि (for शयनानि). — After 37, T2 G3 ins.:

1171* पट्टवासांसि चित्राणि दासीदासान्बहून्ददौ ।

T2 G3 cont.: T1 G2 ins. after 37:

1172* नागरान्प्रीतिभिर्दिव्यैस्तर्पयामास भूपतिः ।

[ T1 प्रीतिदैर्; T2 बहुभिर्. T2 द्रव्यैः (for दिव्यैः). ]

On the other hand, N ins. after 37:

1173* भोजनानि च हृद्यानि पानानि विविधानि च ।

[ B4 D1.2.5.6.8 दिव्यानि; D3 खाद्यानि; D4.7.9 मुख्यानि (for हृद्यानि). K D5 सुरभीणि (for विविधानि). ]

38 b) B1.3 D3 G1 (*inf. lin.*) °जनाकुलं; B2 हृष्टं पुष्टं समाकुलं; B4 °जनान्वितं; Dn D1.2.10–12 G2.3 °जना(Dn1 °जनैर्)युतं; G1 कृतवन्तो यदुत्तरं. — c) B4 मत्स्यराजस्य भवनं; D3 मत्स्यराजस्य शुशुभे; G1 युधिष्ठिरस्य राज्ञस्तु. — d) G3 M1.2.4 (*sup. lin.* as in text) °र्षभैः. D3 नगरं वै महात्मनः; D6 शुशुभे खेचरं यथा; Ccp खेचरं भरतर्षभ. — After 38, T G2.3 ins.:

1174* पुरोहितैरमात्यैश्च पौरैर्जानपदैरपि ।

विराटनृपतिः श्रीमान्सौभद्रायाभिमन्यवे ।
तां सुतामुत्तरां दत्त्वा मुमुदे परमं तदा ।

Thereafter T1 ins. 1162*, and cont.:

1175* एवं वृत्ते विवाहे तु पार्थसूनोः परंतप ।
पुराद्बहिरुपप्लाव्य ऊषुः पाण्डुसुतास्तदा ।

T1 cont.: T2 G2.3 ins. after 1174*: G1 M, after 38:

1176* जनमेजयः ।
वृत्ते विवाहे हृष्टात्मा यदुवाच युधिष्ठिरः ।
तत्सर्वं कथयस्वेह कृतवन्तो यदुत्तरम् ।

[ (L. 1) T1 G3 धर्मात्मा (for हृष्टात्मा). — (L. 2) G1 पांडवाश्च महात्मानः (for the prior half). ]

Colophon (Ś1 M3 missing). — *Sub-parvan:* Dn उत्तरगोग्रह. — *Adhy. name:* K B D5–9.11.12 G2.3 M1.2.4.5 अभिमन्युविवाहः; Dn2 G1 उत्तराविवाहः; D3 विवाहः; D10 अभिमन्यूत्तराविवाहः. — MSS. mostly add समाप्तं after the major parvan, sub-parvan, or adhy. name; some add it twice. — *Adhy. no.* (figures, words or both): K1 D3 (as in text!) 67 (D3 in words 9!); B4 70; D5 65; D6 69; D7 63; S 77. — *S'loka no.:* D1 40; G3 62.

After the colophon, K1 ins.: विराटपर्वण्यमी वृत्तान्ताः। धौम्यशिक्षा । विराटनगरप्रवेशः । रूपविन्यासः । मल्लयुद्धं । कीचकवधः । उत्तरनिर्यानं । कुरुभिर्गोग्रहः । आयुधवर्णनं । कुरुभिर्युद्धं । कुरुपराजयः । युधिष्ठिराभिषेकः । वासुदेवाभिगमनं । अभिमन्युविवाहश्चेति । Then follow the stanzas (cf. 1. 2. 134 f.):

1177* चतुर्थमेतद्विपुलं वैराटं पर्ववर्णनम् ।
अत्रापि परिसंख्याता अध्यायानां महात्मना ।
सप्तषष्टिरथो पूर्णा श्लोकानामपि मे शृणु ।
श्लोकानां द्वे सहस्रे तु त्रीणि श्लोकशतानि च ।
पर्वण्यस्मिन्समाख्यातं संख्यानं परमर्षिणा ।
विराटपर्वे देयानि वासांसि विविधानि च ।

शुभमस्तु । Then it cont.: अस्यानूद्योगपर्व भविष्यति । यस्यायं प्रतिसंधिः । परमुद्योगपर्व । तस्यायं आद्यः श्लोकः ।

1178* कृत्वा विवाहं तु कुरुप्रवीरा-
स्तदाभिमन्योर्मुदितस्य पक्षाः ।
विश्रम्य चत्वार्युषसः प्रतीताः
सभां विराटस्य ततोऽभिजग्मुः ॥,

the first st. of the Udyogaparvan.

— K2 ins. after the colophon, the latter part of the last passage, namely, from अस्यानूद्योगपर्व up to ततोऽभिजग्मुः, and then it enumerates Vṛttantas as in K1, followed by 1177*; then it cont.: शुभाय भवत्विदं पर्व । संवत् १८२८ ज्येष्ठमासे शुभे कृष्णपक्षे १० भृगुवासरे लिपिकृतं मिश्र जयकृष्ण नगरभर[त]पुरमध्ये । शुभमस्तु । मंगलं ददातु ॥

— B4 ins. after the colophon: इतः परमुद्योगपर्व । तस्यायमाद्यः श्लोकः । Then follows 1178* (with v. l.: °र्मुदिताः सपक्षाः । विश्रम्य रात्रावुषसि प्रतीताः). And, finally: श्रीराम ॥ ॐ तत्सत् । ॐ तत्सत् । ॐ तत्सत् ॥ समाप्तोऽयं ग्रन्थः ॥ श्रीव्रजनाथदेवशर्मणो लिपिरियं पुस्तकं च ॥

यत्नेन लिखितं ग्रन्थं यश्चोरयति मानवः ।
शूकरी तस्य माता च पिता तस्य च गर्दभः ॥

ॐ नमो भगवते वासुदेवाय ॥ ॐ गुरवे नमः ॥ यथा दृष्टं तथा लिखितं लिखको नास्ति दोषकम् । श्रीश्रीराम ॥

— Dn2 ins. after the colophon 1178* (with v. l.). It is dated: संवत् १६७० समये येष्ट वदि १२.

— D4 ins. after the colophon: अतः परमुद्यमपर्व । तस्य प्रतिसंधिर * * * कः; then follows 1178* (with v. l.). Then it cont. (cf. 1. 2. 134 f.):

विराटपर्वण्यथ संख्यानं व्यासेनोक्तं महात्मना ।
अध्यायाः सप्ततिर्ज्ञेयास्तथा द्वौ चात्र संख्यया ।
द्वे * * त्र सहस्राणि श्लोकाः पञ्चशतानि च ।

अस्मिन्विराटपर्वण्यमी वृत्तान्ताः । धौम्यशिष्याः । विराटनगरागमनं । रूपविन्यासः । सभाप्रवेशः । जीमूतवधः । कीचकानां वधः । चारप्रत्याचारः । त्रिगर्तैः सह गोग्रहे युद्धं । उत्तरवाक्यं । शमीगमनं । आयुधवर्णनं । कुरुभिर्युद्धं । कुरुपराजयः । विराटसभायां पांडवदर्शनं । अभिमन्युविवाहः । इति वृत्तान्ताः । संवत् १७०० वर्षे वैशाखमासे शुक्लपक्षे पौर्णमास्यां पुण्यतिथौ शनिवासरे लिखितमिदं पुस्तकं ।

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥

परोपकाराय भटमोहनेन लिखितमिदं पुस्तकम् । श्रीरस्तु कथकस्य ॥

— D5 ins. after the colophon: संवत् १७१६ वर्षे भाद्रपदे मासि शुक्लपक्षे प्रतिपदायां लिखितमिदं पुस्तकम् । जीवेनात्मपठनार्थं । शुभमस्तु ॥

— D6 ins. after the colophon: अस्यानंतरमुद्योगपर्व भविता । तस्यायं अभिसंधिः । Then follows 1178* (with v. l.); and, finally: अस्मिन्पर्वण्यमी वृत्तान्ताः । अज्ञातवासः । धौम्यवाक्यं । आयुधन्यासः । विराटनगरे प्रवेशः । जीमूतवधः । कीचकवधः । दक्षिणगोग्रहः । उत्तरगोग्रहः । अभिमन्युविवाहश्चेति वृत्तान्ताः । संवत् १७४५ वर्षे सहः कृष्ण ७ लेखः पूर्णः ॥

— D7 ins. after the colophon 1178* (with v. l.); then विराटपर्वण्यथ संख्यानं व्यासेनोक्तं महात्मना ।

अध्यायाः सप्ततिर्ज्ञेयास्तथा द्वौ चात्र संख्यया ॥
द्वे चैवात्र सहस्रे तु श्लोकाः पञ्च शतानि च ॥

Then the वृत्तान्ताः. The MS. is dated: संवत् १५५३ वर्षे वैशाख शु २ भृगुवारेऽद्येह राजपुरग्रामवास्तव्यमेवाडपंडितजागांकेन विराटपर्वस्य लिखितम् । शुभमस्तु ॥

— D8 ins. after the colophon 1178* (with v. l.), and the वृत्तान्ताः. The MS. is dated: संवत् १५९५ वर्षे फा० वदि ९ भौमे. And finally (cf. 1. 2. 135):

अध्यायाः सप्ततिर्ज्ञेयाः तथा द्वौ प्रतिसंख्यया ।
श्लोकानां द्वे सहस्राणि तथा पञ्चशतानि च ॥

— D9 has after the colophon 6 stanzas of *phalas'ruti*, followed by 1178* (with v. l.); then enumeration of adhy. and s'lokas as in D7; then follow the वृत्तान्ताः, as in D6. No date.

— D10 has after the colophon the foll. s'lokas:

भारताध्ययनात्पुण्यादपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥
चतुर्थमेतद्विपुलं वैराटं पर्व वर्णितम् ।
अत्रापि परिसंख्यानमध्यायानां महात्मना ॥
सप्तषष्टिरथा पूर्णाः श्लोकानामपि मे शृणु ।
श्लोकानां द्वे सहस्रे तु तथा पञ्च शतानि च ॥

Then again 4 stanzas of *phalas'ruti*.

— D11.12 is after the colophon, 1178* (with v. l.).

— T1 ins. after the colophon:

करकृतमपराधं क्षंतुमर्हंति संतः ।
धूपगुंट शंकरप्पब्राशिन विराटपर्व संपूर्णं । सीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचंद्रपरब्रह्मणे नमः ॥

— T2 ins. after the colophon: इति विराटपर्व समाप्तं । श्रीकृष्णार्पणमस्तु । श्रीरामार्पणमस्तु ॥

— G1 ins. after the colophon: हरिः ओम् । विराटपर्वं संपूर्णं । रक्ताक्षिवर्षे मीनमासं नालां तेदि सुब्रह्मण्येन लिखितं विराटपर्व । सुब्रह्मण्यस्वामिने नमः । वेदांतशास्त्रिणः अयं पुस्तकः ॥

— G2 ins. after the colophon: हरिः ओं । विराटपर्वं समाप्तं । हरिः ओम् शुभमस्तु ॥

— G3 ins. after the colophon: श्रीकृष्णाय परब्रह्मणे नमः । हरिः ओम् ॥

— M1.2 ins. after the colophon: विराटपर्वं समाप्तं । शुभं भूयात् ॥

— M4 ins. after the colophon: विराटपर्वं समाप्तम् । श्लोकं २५०० । १००६ आमत धनुमासं १४ आं तेदि एलुति तीर्नु । अनेन विराटपर्वलेखनेन श्रीमन्मध्वान्तर्गतश्रीगोपालकृष्णः प्रीयतां । श्रीगोपालकृष्णार्पणमस्तु । यत्कीर्तनं यच्छ्रवणं यदर्हणं यद्वन्दनं यत्स्मरणं यदीक्षणं । लोकस्य सद्यो विधुनोति कल्मषं । तस्मै सुभद्रश्रवसे नमो नमः ।

कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ।

ग्रन्थं मळेञ्चेरियुडे ॥ The date of completion is given here as Kollam 1006 [ca. A. D. 1830–31], on the 14th of the month of Dhanus. The Ms. belongs to Maleñceri.

— M5 ins. after the colophon: कोल्लं १००३ आमत चिङ्ङ ञायर २१ तेदि चोव्वाळ्चयुं चतयवुं पौर्णमासियुं कूटिय दिवसं तिरुवन्नूरनिन्न एलुति तीर्नु । चेवायूर नाणु पटिञ्ञारे कोविलकत्ते विराटपर्वं ग्रन्थम् ॥ The date of completion is given here as Kollam 1003 [ca. A. D. 1827–28] on Tuesday, the 21st day of the month of Siṁha, which was a full-moon day; and the place is given as the village of Tiruvannūr.

# APPENDIX I

This Appendix comprises a series of additional passages found in different MSS. which have been cited in the foregoing foot-notes to the constituted text, but which, for various reasons, were not quoted there in extenso. They are mainly passages which were too long to be included in the foot-notes; but along with them there will be found a certain number of short unimportant passages also, which could have been very easily accomodated in the foot-notes, but which, being found in single MSS. or in a very small group of cognate MSS. have been relegated to this Appendix as being of no special value for critical purposes.

The variants cited here are of the same order as those of the additional lines noted in the footnotes to the constituted text; in other words, the variants of monosyllabic verse-filling particles (such as च-वै-तु-हि) and adverbs (such as तथा-तदा-ततः, एव-एवं), discrepant readings of single MSS., corrupt readings, and common doublets (वेदि-वेदी, रोम-लोम) have been generally ignored, scribes' errors have been silently corrected. Furthermore, the variants of the short prose formulaic references to the speaker (such as वैशंपायन उवाच) have been uniformly ignored here.

## 1

$M_1$ ins. after 4. 1. 1: $M_{2.4.5}$, after 4. 1. 3: $D_4$, after 4. 1. 4: $T_1$ G, after 9*:

वैशंपायनः ।

धर्मेण तेऽभ्यनुज्ञाताः पाण्डवाः सत्यविक्रमाः ।
अज्ञातवासं वत्स्यन्तश्छन्ना वर्षं त्रयोदशम् ।
उपोपविश्य विद्वांसः स्नातकाः संशितव्रताः ।
ये तद्भक्ता वसन्ति स्म वनवासे तपस्विनः ।
तानब्रुवन्महात्मानः शिष्टाः प्राञ्जलयस्तदा ।
अभ्यनुज्ञापयिष्यन्तस्तद्विवासं धृतव्रताः ।
विदितं भवतां सर्वं धार्तराष्ट्रैर्यथा वयम् ।
छद्मना हृतराज्याश्च निःस्वाश्च बहुशः कृताः ।
उषिताश्च वने वासं यथा द्वादश वत्सरान् ।
भवद्भिरेव सहिता वन्याहारा द्विजोत्तमाः ।
अज्ञातवाससमयं शेषं वर्षं त्रयोदशम् ।
तद्वत्स्यामो वयं छन्नास्तदनुज्ञातुमर्हथ ।
दुर्योधनश्च दुष्टात्मा कर्णश्च सहसौबलः ।
जानन्तो विषमं कुर्युरस्मास्वत्यन्तवैरिणः ।
युक्ताचाराश्च युक्ताश्च क्षये स्वस्य जनस्य च ।
दुरात्मनां हि कस्तेषां विश्वासं गन्तुमर्हति ।
अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह ।
समस्तेष्वेव राष्ट्रेषु स्वराज्यं स्थापयेमहि ।
इत्युक्त्वा दुःखशोकार्तः शुचिर्धर्मसुतस्तदा ।
संमूर्छितोऽभवद्राजा साश्रुकण्ठो युधिष्ठिरः ।
तमथाश्वासयन्सर्वे ब्राह्मणा भ्रातृभिः सह ।
अथ धौम्योऽब्रवीद्वाक्यं महार्थं नृपतिं तदा ।
राजन्विद्वान्भवान्दान्तः सत्यसंधो जितेन्द्रियः ।
नैवंविधाः प्रमुह्यन्ति नराः कस्यांचिदापदि ।
देवैरप्यापदः प्राप्ताश्छन्नैश्च बहुभिस्तदा ।
तत्र तत्र सपत्नानां निग्रहार्थं महात्मभिः ।
इन्द्रेण निषधं प्राप्य गिरिप्रस्थाश्रमे तदा ।
छन्नेनोष्य कृतं कर्म द्विषतां बलनिग्रहे ।
दितेः पुत्रैर्हृते राज्ये देवराजोऽतिदुःखितः ।
ब्राह्मणं तोषयिष्यंश्च ब्रह्मरूपं विधाय च ।
प्रसादाद्ब्रह्मणो राजन्दितेः पुत्रान्महाबलान् ।
निर्जित्य तरसा शत्रून्पुनर्लोकाञ्जुगोप ह ।
विष्णुनाश्मगिरिं प्राप्य तदादित्यां निवत्स्यता ।
गर्भे वधार्थं दैत्यानामज्ञातेनोषितं चिरम् ।
प्रोष्य वामनरूपेण प्रच्छन्नं ब्रह्मचारिणा ।
बलेर्यथा हृतं राज्यं विक्रमैस्तच्च ते श्रुतम् ।
और्वेण वसता छन्नमूरौ ब्रह्मर्षिणा तदा ।
यत्कृतं तात लोकेषु तच्च सर्वं श्रुतं त्वया ।
प्रच्छन्नं चापि धर्मज्ञ हरिणा वृत्रनिग्रहे ।
वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतम् ।
हुताशनेन यच्चापः प्रविश्य छन्नमासता ।
विबुधानां हितं कर्म कृतं तच्चापि ते श्रुतम् ।
तथा विवस्वता तात छन्नेनोत्तमतेजसा ।
निर्दग्धाः शत्रवः सर्वे वसता गवि वर्षशः ।
विष्णुना वसता चापि गृहे दशरथस्य च ।
दशग्रीवो हतश्छन्नं संयुगे भीमकर्मणा ।
एवमेते महात्मानः प्रच्छन्नास्तत्र तत्र ह ।
अजयञ्छात्रवान्मुख्यांस्तथा त्वमपि जेष्यसि ।
इति धौम्येन धर्मज्ञो वाक्यैः संपरिहर्षितः ।
शास्त्रबुद्धिः पुनर्भूत्वा व्यष्टम्भत युधिष्ठिरः ।
अथाब्रवीन्महाबाहुर्भीमसेनो महाबलः ।
राजानं बलिनां श्रेष्ठो गिरा संपरिहर्षयन् ।
अवेक्षय महाराज तव गाण्डीवधन्वना ।
धर्मानुगतया बुद्ध्या न किंचित्साहसं कृतम् ।
सहदेवो मया नित्यं नकुलश्च निवारितः ।
शक्तौ विध्वंसने तेषां शत्रुघ्नौ भीमविक्रमौ ।
न वयं वर्त्म हास्यामो यस्मिन्योक्ष्यति नो भवान् ।
तद्विधत्तां भवान्सर्वं क्षिप्रं जेष्यामहे परान् ।
इत्युक्ते भीमसेनेन ब्राह्मणाः परमाशिषः ।
प्रयुज्यापृच्छ्य भरतान्यथास्वान्प्रययुर्गृहान् ।
सर्वे वेदविदो मुख्या यतयो मुनयस्तदा ।
आशीरुक्त्वा यथान्यायं पुनर्दर्शनकाङ्क्षिणः ।
ते तु भृत्याश्च दूताश्च शिल्पिनः परिचारकाः ।
अनुज्ञाप्य यथान्यायं पुनर्दर्शनकाङ्क्षिणः ।
सह धौम्येन विद्वांसस्तथा ते पञ्च पाण्डवाः ।
उत्थाय प्रययुर्वीराः कृष्णामादाय भारत ।
क्रोशमात्रमतिक्रम्य तस्माद्वासान्निमित्ततः ।
श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः ।
पृथक् शास्त्रविदः सर्वे सर्वे मन्त्रविशारदाः ।
संधिविग्रहकालज्ञा मन्त्राय समुपाविशन् ।

Colophon.

The above passage is nothing more than (the S version of) the *last adhy. of our Āraṇyaka*. After the colophon S begins a new adhy. (2) with 8*, followed in $T_1$ G by a *repetition* of $5^{ab}$, a repetition which suggests that the passage is *misplaced* in S, cf. Luders, *Ueber die Grantharecension*, p. 54.

1

$D_4$ M ($M_3$ missing) om. वैशं°. — $D_4$ reads lines 1–2 after 4. 1. $2^{ab}$! — (L. 1) $M_{1.4.5}$ °वादिनः (for °विक्रमाः). — (L. 3) $D_4$ अथोपविष्टाः (for उपो°). M ($M_3$ missing) सहिताः (for स्नातकाः). $D_4$ स्नातकैर्ब्राह्मणैः सह. — $G_1$ om. lines 4–6. — (L. 4) $T_1$ $G_{2.3}$ तु (for तद्).

## 2

After 4. 5. 14, K2 ins.:

एषा शमी पापहरा सदैव
यात्रोत्सवानां विजयाय हेतुः ।
अत्रायुधानां कृतसंनिवेशे
कृतार्थकामा जयमङ्गलं च ।
प्रदक्षिणीकृत्य शमीलतां ते
प्रणम्य चानर्चुरथ प्रवीराः ।
मृत्पिण्डमादाय निजाञ्जलेन
मूर्तिं चकार प्रथमं किरीटी ।
शमी शमयते पापं शमी शमयते रिपून् ।
शमी शमयते रोगाञ्छमी सर्वार्थसाधना ।
रामः सीतां समादाय त्वत्प्रसादाच्छमीतले ।
कृतकृत्यः पुरे प्राप्तः प्रसादात्ते तथास्तु मे ।

## 3

After 4. 5. 24, S ins.:

आयुधानि कलापांश्च गदाश्च विपुलास्तथा ।
तानि सर्वाणि संनह्य वासोभिः परिवेष्ट्य च ।
आरुह्य यावदेतानि निधातुं विहगैर्वृताम् ।
शमीमारुह्य महतीं निक्षिपाम्यायुधानि नः ।

वैशंपायनः ।
स हि धर्मेण धर्मात्मा तदा घोरतरे वने ।
अरणीपर्वणः काले वरदत्तः परंतपः ।
तान्यायुधान्युपादाय कुन्तीपुत्रो युधिष्ठिरः ।
स वचः पुरुषव्याघ्रः प्रोवाच मधुराक्षरम् ।
युधिष्ठिरः शुचिर्भूत्वा मनसाभिप्रणम्य च ।
युधिष्ठिरः ।
ब्रह्माणमिन्द्रं वरदं कुबेरं वरुणानिलौ ।
रुद्रं यमं च विष्णुं च सोमार्कौ धर्ममेव च ।
पृथिवीमन्तरिक्षं च दिशश्चोपदिशस्तथा ।
वसूंश्च मरुतश्चैव ज्वलनं चातितेजसम् ।
दिवाचरा रात्रिचराणि चापि
यानीह भूतान्यनुकीर्तितानि ।
तेभ्यो नमस्कृत्य च सुव्रतेभ्यः
प्रणम्य तेषां शरणं गतोऽहम् ।
सर्वायुधानीह महाबलानि
न्यासं महादेवसमीपतो वै ।
न्यस्याम्यहं वायुसमीपतश्च
वनस्पतीनां च सपर्वतानाम् ।
एष न्यासो मया दत्तः सूर्यसोमानिलान्तिके ।
मह्यं पार्थाय वा देयं पूर्णे वर्षे त्रयोदशे ।

— (L. 5) D4 तानभ्यर्च्य महाभागान् (for the prior half), and पार्थाः (for शिष्टाः). — (L. 6) T1 G2 तान्; M1.4 तं (for तद्). — For line 6, D4 subst.:

उवाचैनं महाप्राज्ञो धर्मराजो युधिष्ठिरः ।

— (L. 8) D4 परिक्लिष्टाः सदा बहु (for the posterior half). — (L. 9) D4 स (for च), and कृच्छ्रं (for वासं). D4 वर्षाणि द्वादशैव तु (for the posterior half). — (L. 13) M (M3 missing) सुयो° (for दुर्यो°). — (L. 15) G1 धूर्ताः; M1.4 यत्ताः (for युक्ताः). D4 (corrupt) मुक्ताचाराश्चापकुर्युरस्मान्प्रतिकुरुष्वयः. — (L. 17) D4 समये च गते भूयो यद्वयं ब्राह्मणर्षभाः. — (L. 18) D4 M1.2.5 समस्ताः स्वेषु रा°. D4 M2.5 स्वराज्यस्था (D4 सर्वैः सह) वसेमहि. — (L. 19) T1 G दुःखमोहार्तः. G2.3 °परः (for °सुतः). D4 राजा धर्मभृतां वरः (for the posterior half). — (L. 20) D4 विवक्तुं नाशकत्किंचित् (for the prior half). D4 सन्नकंठो; T1 G सास्र°. — After line 20, T1 G3 ins.:

प्रबुद्धदुःखो मोहार्तो धौम्यं धर्मभृतां वरम् ।
प्रावैक्षत तदा राजा सास्रकण्ठो धृतव्रतः ।

— (L. 21) D4 भ्रातृंश्च ब्राह्मणैः सह (for the posterior half); see below. — After line 22, T1 G ins.:

आश्वासयंस्तथाभूतं भ्रातृंश्च ब्राह्मणैः सह ।

Thereafter G1 ins. 6*, preceded by जनमेजयः. — (L. 24) T1 G2.3 धीराः (for नराः). — M om. lines 29–32. — (L. 29) G1 तदा शत्रुः सुदुःखितः (for the posterior half). — (L. 32) G1 पुनर्लेभे जगत्प्रभुः. — (L. 36) G2.3 तज्जनैः (for तच्च ते). — (L. 37) M2.4 पुरा (for तदा). — (L. 39) T1 °न्नेन हि; G1 °न्नेनापि. — M1 om. lines 41–42. — (L. 41) G2.3 M4 °श्य छद्मनासता. — (L. 49) G1 °भाषितः; G2.3 °तोषितः (for °हर्षितः). — (L. 50) G2 शास्त्रदृष्टिः; G3 M5 शास्त्रबुद्ध्या. G3 M1.2.5 बुध्वा. — G1 om. lines 58–60. — (L. 59) G2.3 M1 इत्युक्तो. T1 G2.3 धर्मराजो युधिष्ठिरः (for the posterior half). — After line 59, T1 G2.3 *repeat* lines 3–5, 7–9, 11–12 [ v. l.: सुखोपविष्टो विद्वद्भिस्तापसैः संशितव्रतैः (for line 3). ये तद्भक्त्याभवंस्तस्मिन् (for the prior half of line 4). तानब्रवीन्महाप्राज्ञः शिष्टान्राजा कृताञ्जलिः (for line 5) ]. Then these MSS. cont.:

इत्युक्तो धर्मराजेन ब्राह्मणाः परमाशिषः ।

— (L. 60) T1 G2.3 M4 स्वं (for स्वान्). — M2 om. lines 63–64.

## 3

(L. 3) T आरोह; G1 M1–3.4(*sup. lin.*) आरोहै. — (L. 4) T2 निक्षिपाच; M1 निक्षिप्स्यामि. — (L. 8) M (except M5) सु- (for स). — (L. 14) M1 °राश्च (for °राणि). M1 ये च; M2.3 यानि; M5 येपि (for चापि). T1

नेदं भीमे प्रदातव्यमयं क्रुद्धो वृकोदरः ।
अमर्षान्नित्यसंरब्धो धृतराष्ट्रसुतान्प्रति ।
अपूर्णकाले प्रहरेत्क्रोधसंजातमत्सरः ।
पुनः प्रवेशो नः स्यात्तु वनवासाय सर्वथा ।
समये परिपूर्णे तु धार्तराष्ट्रान्निहन्महे ।
एष चार्थश्च धर्मश्च कामः कीर्तिः कुलं यशः ।
ममायत्तमिदं सर्वं जीवितं च न संशयः ।

वैशंपायनः ।

सोऽवतीर्य महाप्राज्ञः पाण्डवः सत्यविक्रमः ।
भीमं कण्ठे परिष्वज्य चानुनीय नराधिपः ।
दैवतेभ्यो नमस्कृत्वा शमीं कृत्वा प्रदक्षिणम् ।
नगरं गन्तुमायाताः सर्वे ते भ्रातरः सह ।

4

The Durgāstava.

(A)

After 4. 5. 29, $D_2$ (marg.) ins.:

तत्र ते वै महात्मानो दुर्गां भक्तिपुरस्कृताः ।
स्मरन्तः पूजयांचक्रुर्देवीं दुर्गविनाशिनीम् ।
सा पूजिता तदा सर्वैः पाण्डवैश्च समाहितैः ।
प्रसन्ना वागुवाचाथ स्मयन्ती वियति स्थिता ।
न भेतव्यं महाभागा दुर्गमेतत्तरिष्यथ ।
कृतीष्णा * * * * * आयुधान्युपलप्स्यथ ।
तीर्णप्रतिज्ञाः सुधियः शत्रूनपि विजेष्यथ ।
इत्युक्त्वान्तर्हिता सद्यः पाण्डवा विस्मयं ययुः ।

(B)

After 4. 5. 29, $D_6$ ins.:

वैशंपायन उवाच ।
विराटनगरं रम्यं प्रविशन्नेव भूपते ।

द्विवा च रात्रौ च चराणि वापि; $T_2$ $G_1$ दिवाचरा रात्रिचराचराणि. — (L. 20) $T_1$ $G_{1.3}$ $M_{1.3}$ न्यसामि. — (L. 22) $T_2$ न्यस्तः (for दत्तः). — (L. 23) $G_1$ M मम (for मह्यं). — (L. 24) $T_1$ $G_1$ महाक्रुद्धो; $M_1$ अतिक्रु°; $M_{2.3}$ स हि क्रु° (for अयं क्रुद्धो). — (L. 25) T $G_1$ °संक्रुद्धो (for °संरब्धो). $M_1$ om. line 27; M om. 28. — (L. 28) $T_2$ °न्महि. — After line 28, $T_1$ ins.:

मया न प्रविजानीयुर्मनुष्या नात्र संशयः ।

— M om. line 34.

4

(C)

After line 9, $D_5$ ins.:

स्तोत्रं प्रचक्रमे भूयो विविधैः स्तोत्रसंभवैः ।
स्तुनोति मनसा देवीं कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातृभिः सहितो राजंस्तथैव प्रपितामहः ।
दुःखशोकेन संतप्तो द्रौपद्या सह भारत ।
कृताञ्जलिपुटो भूत्वा वनवासाद्विनिर्गतः ।
भक्त्या परमया युक्तो दुर्गां दुर्गतिनाशिनीम् ।
महिषासुरदर्पघ्नीं सर्वलोकनमस्कृताम् ।
शैलराजसुतां गौरीं वरदामभयप्रदाम् ।

Cf. Luders, *Ueber die Grantharecension*, p. 55, f.n. 2.

(C)

$D_{4.10}$ ins. after 4. 5. 30: $D_5$, after adhy. 5:

विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
तुष्टाव मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ।
यशोदागर्भसंभूतां देवस्य भगिनीं प्रियाम् ।
नन्दगोपकुले जातां मङ्गल्यां कुलवर्धिनीम् ।
कंसविद्रावणकरीमसुराणां क्षयंकरीम् ।
शिलातलसमुत्क्षिप्तामाकाशान्तरगामिनीम् ।
वासुदेवं स्मरन्तीं च दिव्यां मायाकरीं वराम् ।
भारावतरणे पुण्ये ये स्मरन्ति सदा शिवाम् ।
तान्वै तारयते पापात्पङ्के गामिव दुर्बलाम् ।
ॐ नमोऽस्तु वरदे देवि कुमारि प्रियदर्शने ।
बालभावासुरेन्द्राणि घण्टाली विकटोल्कटे ।
चतुर्भुजे चतुर्वक्त्रे चतुर्दंष्ट्रे महासुरि ।
महादेवि महेष्वासे जयन्ति विजयप्रदे ।
भूतरात्रि महारौद्रे चाष्टमीनवमीप्रिये ।
कपिले पिङ्गले ज्वाले हिरण्यकनकप्रदे ।
शशिसूर्यमहाभागे विद्युज्ज्वलितकुण्डले ।
मेरुविन्ध्यान्तरगते अप्सरोगणसेविते ।
कालि कालि महाकालि खड्गखट्वाङ्गधारिणि ।
त्रिशूलवरदे देवि त्रिनेत्रे भुवनेश्वरि ।

आमन्त्र्य दर्शनाकाङ्क्षी देवी राजा सहानुजः ।

— (L. 20) $D_5$ देवि त्वं पूज्यसे देवैः (for the prior half). — After line 20, $D_5$ ins.:

दुर्गे तारय मां भद्रे बन्धनानां महार्णवात् ।

— (L. 23) $D_4$ सत्ये सत्या भवस्व नः (for the posterior half). — After line 23, $D_{10}$ ins.:

दर्शनं तु गता देवि दुर्गा त्रिभुवनेश्वरी ।

— (L. 28) $D_5$ भक्त्या (for लोका).

(D)

The v. l. of $D_7$ are as follows. — (L. 13) तनुर्मध्ये (for चतुर्वक्त्रे). — (L. 19) पात्रं च पंकजं घंटामसिं चर्म च बिभ्रती (marg. *sec. m.*). — (L. 50) °क्षि सर्वसंपत्प्रदायिनी. — (L. 56) क्षोभयिष्यसि संप्राप्तां समेतां कुरुवाहिनीं.

देवि देवाश्च पूजन्ति पूर्णमासीं चतुर्दशीम् ।
सोऽहं राज्यपरिभ्रष्टस्त्वशक्तश्च विशेषतः ।
अहं शरणमापन्नस्तव देवि सुरेश्वरि ।
त्राहि मां पद्मपत्राक्षि सत्येन स्वामिनी भव ।
श्रीदेवी उवाच ।
शृणु वत्स महाबाहो संग्रामे विजयस्तव ।
मत्प्रसादाद्विनिर्मुक्तो हत्वा कौरववाहिनीम् ।
निष्कण्टकं कृतं राज्यं भोक्ष्यसे भ्रातृभिः सह ।
इति गुह्यतमं स्तोत्रं पवित्रं पापनाशनम् ।
कीर्तयिष्यन्ति ये लोका न तेषां विद्यते भयम् ।
संग्रामे शत्रुसंबाधे विवादे चौरसंकटे ।
प्रस्थाने वा प्रवेशे वा यः कश्चिन्मां स्मरिष्यति ।
तस्याहं सर्वकार्याणि साधयिष्यामि पाण्डव ।
वैशंपायन उवाच ।
इत्युक्त्वा पाण्डवं देवी तत्रैवान्तरधीयत ।

In D5.10, the passage is followed by a colophon (*adhy no.*: D5 6).

(D)

*The Vulgate Version.*

After adhy. 5, Dn D7 (om. lines 23–27, 31–42, 44–47, 51, 60–67). 11.12 T2 ins. the foll. adhy.:

वैशंपायन उवाच ।
विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ।
यशोदागर्भसंभूतां नारायणवरप्रियाम् ।
नन्दगोपकुले जातां मङ्गल्यां कुलवर्धिनीम् ।
कंसविद्रावणकरीमसुराणां क्षयंकरीम् ।
शिलातटविनिक्षिप्तामाकाशं प्रति गामिनीम् ।
वासुदेवस्य भगिनीं दिव्यमाल्यविभूषिताम् ।
दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम् ।
स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसंभवैः ।
आमन्त्र्य दर्शनाकाङ्क्षी राजा देवीं सहानुजः ।
नमोऽस्तु वरदे कृष्णे कुमारि ब्रह्मचारिणि ।
बालार्कसदृशाकारे पूर्णचन्द्रनिभानने ।
चतुर्भुजे चतुर्वक्त्रे पीनश्रोणिपयोधरे ।
मयूरपिच्छवलये केयूराङ्गदधारिणि ।
भासि देवि यथा पद्मा नारायणपरिग्रहः ।
स्वरूपं ब्रह्मचर्यं च विशदं तव खेचरि ।
कृष्णच्छविसमा कृष्णा संकर्षणसमानना ।
बिभ्रती विपुलौ बाहू शक्रध्वजसमुच्छ्रयौ ।
पात्री च पङ्कजी घण्टी स्त्रीविशुद्धा च या भुवि ।
पाशं धनुर्महाचक्रं विविधान्यायुधानि च ।
कुण्डलाभ्यां सुपूर्णाभ्यां कर्णाभ्यां च विभूषिता ।
चन्द्रविस्पर्धिना देवि मुखेन त्वं विराजसे ।
मुकुटेन विचित्रेण केशबन्धेन शोभिना ।
भुजंगाभोगवासेन श्रोणिसूत्रेण राजता ।
विभ्राजसे चाबद्धेन भोगेनेवेह मन्दरः ।
ध्वजेन शिखिपिच्छानामुच्छ्रितेन विराजसे ।
कौमारं व्रतमास्थाय त्रिदिवं पावितं त्वया ।
तेन त्वं स्तूयसे देवि त्रिदशैः पूज्यसेऽपि च ।
त्रैलोक्यरक्षणार्थाय महिषासुरनाशिनि ।
प्रसन्ना मे सुरश्रेष्ठे दयां कुरु शिवा भव ।
जया त्वं विजया चैव संग्रामे च जयप्रदा ।
ममापि विजयं देहि वरदा त्वं च सांप्रतम् ।
विन्ध्ये चैव नगश्रेष्ठे तव स्थानं हि शाश्वतम् ।
कालि कालि महाकालि सीधुमांसपशुप्रिये ।
कृतानुयात्रा भूतैस्त्वं वरदा कामचारिणि ।
भारावतारे ये च त्वां संस्मरिष्यन्ति मानवाः ।
प्रणमन्ति च ये त्वां हि प्रभाते तु नरा भुवि ।
न तेषां दुर्लभं किंचित्पुत्रतो धनतोऽपि वा ।
दुर्गात्तारयसे दुर्गे तत्त्वं दुर्गा स्मृता जनैः ।
कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ।
दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम् ।
जलप्रतरणे चैव कान्तारेष्वटवीषु च ।
ये स्मरन्ति महादेवि न च सीदन्ति ते नराः ।
त्वं कीर्तिः श्रीर्धृतिः सिद्धिर्ह्रीर्विद्या संततिर्मतिः ।
संध्या रात्रिः प्रभा निद्रा ज्योत्स्ना कान्तिः क्षमा दया ।
नृणां च बन्धनं मोहं पुत्रनाशं धनक्षयम् ।
व्याधिं मृत्युं भयं चैव पूजिता नाशयिष्यसि ।
सोऽहं राज्यात्परिभ्रष्टः शरणं त्वां प्रपन्नवान् ।
प्रणतश्च यथा मूर्ध्ना तव देवि सुरेश्वरि ।
त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः ।
शरणं भव मे दुर्गे शरण्ये भक्तवत्सले ।
एवं स्तुता हि सा देवी दर्शयामास पाण्डवम् ।
उपगम्य तु राजानमिदं वचनमब्रवीत् ।
देव्युवाच ।
शृणु राजन्महाबाहो मदीयं वचनं प्रभो ।
भविष्यत्यचिरादेव संग्रामे विजयस्तव ।
मम प्रसादान्निर्जित्य हत्वा कौरववाहिनीम् ।
राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ।
भ्रातृभिः सहितो राजन्प्रीतिं प्राप्स्यसि पुष्कलाम् ।
मत्प्रसादाच्च ते सौख्यमारोग्यं च भविष्यति ।
ये च संकीर्तयिष्यन्ति लोके विगतकल्मषाः ।
तेषां तुष्टा प्रदास्यामि राज्यमायुर्वपुः सुतम् ।
प्रवासे नगरे चापि संग्रामे शत्रुसंकटे ।
अटव्यां दुर्गकान्तारे सागरे गहने गिरौ ।
ये स्मरिष्यन्ति मां राजन्यथाहं भवता स्मृता ।
न तेषां दुर्लभं किंचिदस्मिँल्लोके भविष्यति ।
इदं स्तोत्रवरं भक्त्या शृणुयाद्वापठेत वा ।

तस्य सर्वाणि कार्याणि सिद्धिं यास्यन्ति पाण्डवाः ।
मत्प्रसादाच्च वः सर्वान्विराटनगरे स्थितान् ।
न प्रज्ञास्यन्ति कुरवो नरा वा तन्निवासिनः ।
वैशंपायन उवाच
इत्युक्त्वा वरदा देवी युधिष्ठिरमरिंदमम् ।
रक्षां कृत्वा च पाण्डूनां तत्रैवान्तरधीयत ।

Colophon.

(E)

After adhy. 5, D3 ins. the foll. adhy.:

वैशंपायन उवाच ।
विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
स्तूयमानस्तदा देवीं दुर्गां त्रिभुवनेश्वरीम् ।
यशोदागर्भसंभूतां नारायणवलिप्रियाम् ।
नन्दगोपकुले जातां माङ्गल्यां कुलवर्धनीम् ।
कंसविद्रावणकरीमसुराणां निबर्हणीम् ।
शिलातले समाक्षिप्तामाकाशान्तरगामिनीम् ।
वासुदेवं च स्मरतीं दिव्यां मायाधरां वराम् ।
भारावतरणे पुण्ये ये स्मरन्ति सदा शिवाम् ।
तान्वै तारयते पापात्पङ्के गामिव दुर्बलाम् ।
स्तोत्रं प्रचक्रमे भूयो विविधैः स्तोत्रसंभवैः ।
आमन्त्र्य दर्शनाकाङ्क्षी देवीं राजा सहानुजः ।
नमोऽस्तु वरदे देवि कुमारि प्रियदर्शने ।
बालबाला सुरेन्द्राणां घण्टालि विघटोत्कटे ।
चतुर्भुजे चतुर्वक्त्रे चतुर्दंष्ट्रे महासुरि ।
महादेवि महेष्वासे जयश्रीविजयप्रदे ।
भूतरात्रि महारौद्रे अष्टमीनवमीप्रिये ।
कपिले पिङ्गले ज्वाले हिरण्यकनकप्रदे ।
शशिसूर्यसमाभासे विद्युज्ज्वलितकुण्डले ।
मेरुविन्ध्यान्तरगते अप्सरोगणसेविते ।
कालि कालि महाकालि खड्गखेटकधारिणि ।
त्रिशूलवरदे देवि त्रिनेत्रे भुवनेश्वरि ।
देवि त्वं पूज्यसे देवि पूर्णमासीं चतुर्दशीम् ।
सोऽहं राज्यपरिभ्रष्टस्त्वद्भक्तश्च विशेषतः ।
अहं शरणमापन्नस्तव देवि सुरेश्वरि ।
त्राहि मां पद्मपत्राक्षि सत्येन स्वामिनी भव ।
श्रीदेव्युवाच ।
शृणु वत्स महाबाहो संग्रामे विजयस्तव ।
मत्प्रसादाद्विनिर्मुक्तो जित्वा कौरववाहिनीम् ।
निष्कण्टकं कृतं राज्यं भोक्ष्यसे भ्रातृभिः सह ।
इदं च मे गुह्यतमं पवित्रं पापनाशनम् ।
कीर्तयिष्यन्ति ये भक्त्या न तेषां विद्यते भयम् ।
प्रस्थाने वा प्रवेशे वा यः कश्चिन्मां करिष्यति ।
तस्याहं सर्वकार्याणि साधयिष्यामि पाण्डव ।
इत्युक्त्वा पाण्डवं देवी तत्रैवान्तरधीयत ।

Colophon.

(F)

D6 (besides inserting version B after 4. 5. 29) ins. after adhy. 5, on a suppl. fol., the foll. adhy.:

वैशंपायन उवाच ।
विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
तुष्टाव स तदा देवीं दुर्गां त्रिभुवनेश्वरीम् ।
शिलातटविनिक्षिप्तामाकाशतलगामिनीम् ।
वासुदेवस्य भगिनीं दिव्यमालाविभूषिताम् ।
यशोदागर्भसंभूतां देवस्य भगिनीं प्रियाम् ।
नन्दगोपकुले जातां दुर्गां त्रिभुवनेश्वरीम् ।
कंसविद्रावणकरीमसुराणां क्षयंकरीम् ।
दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम् ।
स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसंभवैः ।
आमन्त्र्य दर्शनाकाङ्क्षी देवीं राजा सहानुजः ।
नमोऽस्तु वरदे कृष्णे कौमारव्रतचारिणि ।
बालार्कसदृशच्छाये पूर्णचन्द्रनिभानने ।
चतुर्भुजे तनुमध्ये पीनश्रोणिपयोधरे ।
मयूरपिच्छच्छत्रे च चक्रासिगदधारिणि ।
भासि देवि यथा पद्मा नारायणपरिग्रहः ।
सुरूपं ब्रह्मचर्यं ते अविरुद्धं च चेष्टितम् ।
भारावतारिणीं पुण्यां ये स्मरन्ति सदा शिवाम् ।
तान्वै तारयसे पापात्पङ्के गामिव दुर्बलाम् ।
कृष्णविस्मयविच्छाया संकर्षणनिभानना ।
बिभ्रती विपुलौ बाहू शक्रध्वजमिवोच्छ्रितौ ।
त्रिशाखं शूलमुद्यम्य दानवान्विनिकृन्तसि ।
पादौ नूपुरकेयूरैर्घण्टाभरणभूषितौ ।
वसामेदान्वितं वक्त्रं पीतेनोरसि वाससा ।
शशिरश्मिप्रकाशेन हारेणोरसि लम्बिना ।
तप्तकाञ्चनवर्णाभ्यां कुण्डलाभ्यां विराजता ।
चन्द्रबिम्बसमेन त्वं मुखेनेह विराजसे ।
मुकुटेन विचित्रेण केशबन्धेन शोभसे ।
भुजगाभोगकल्पेन श्रोणिसूत्रेण राजता ।
भ्राजसे चावबद्धेन नागेनेव हि मन्दरः ।
कौमारव्रतमास्थाय त्रिदिवं पालितं त्वया ।
तेन त्वं पूज्यसे देवि ऋषिभिः पूज्यसे सदा ।
सुरेश्वरि महादेवि महिषासुरनाशिनि ।
प्रपन्नोऽहं सुरश्रेष्ठे दयां कुरु शिवा भव ।
जया त्वं विजया चैव संग्रामे विजयप्रदा ।
भविष्यसि च सुप्रीता वर्तस्व मम सांप्रतम् ।
विन्ध्ये चैव नगश्रेष्ठे तत्र स्थानं हि शाश्वतम् ।
कालि कालि महाकालि सीधुमांसवसाप्रिये ।
वदास्थिता त्वं भूतानां भक्तानां कामदायिनि ।
भयत्रस्ता * ये च त्वां संस्मरिष्यन्ति मानवाः ।
प्रणमन्ति च ये नित्यं तेषां च वरदा भव ।
न तेषां दुर्लभं किंचित्पुत्रतो धनतोऽपि च ।

दुर्गात्तारयसे नित्यं तेन दुर्गा स्मृता वरा ।
कान्तारेष्वपि मग्नानां मग्नानां च महार्णवे ।
दस्युभिः संनिधानानां त्वं गतिः परमा भव ।
जलप्रतरणे चैव कान्तारेष्वटवीषु च ।
संस्मरिष्यन्ति ये देवीं नावसीदन्ति ते नराः ।
संध्या रात्रिः प्रभा निद्रा ज्योत्स्ना क्षान्तिः क्षमा दया ।
येषां बन्धवधक्लेशं पुत्रदारधनक्षयम् ।
व्याधिमृत्युभयं चैव पूजिता नाशयिष्यसि ।
सोऽहं राज्यात्परिभ्रष्टः शरणं त्वामुपागतः ।
प्रणतश्च तथा मूर्ध्ना तव देवि सुरेश्वरि ।
त्राहि पद्मपलाशाक्षि सत्ये सत्या भवस्व नः ।
शरणं मे दुःखदुर्गे शरणागतवत्सले ।
परं स्तुता हि सा देवी दर्शयामास पाण्डवम् ।
उपगम्य च राजानं वचनं चेदमब्रवीत् ।

श्रीदेव्युवाच ।

श्रृणु राजन्महाबाहो श्रद्दधस्व च मे वचः ।
भविष्यत्यचिरादेव संग्रामे विजयस्तव ।
क्षोभयिष्यसि संप्राप्तां समेतां कुरुवाहिनीम् ।
राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ।
भ्रातृभिः सहितो राजन्धृतिं प्राप्स्यसि पुष्कलाम् ।
मत्प्रसादाच्च ते सौख्यमारोग्यं च भविष्यति ।
ये च मां कीर्तयिष्यन्ति लोके विगतमत्सराः ।
तेषां तुष्टिं प्रदास्यामि राज्यमायुर्बलं सुतान् ।
ग्रामे वा नगरे वाथ संग्रामे शत्रुसंकटे ।
अटव्यां दुर्गकान्तारे समुद्रे गिरिगह्वरे ।
ये स्मरिष्यन्ति मां राजन्यथाहं भवता स्मृता ।
तेषां न दुर्लभं किंचिदस्मिँल्लोके भविष्यति ।
इदं स्तोत्रवरं पुण्यं शृणुयाद्वा पठेत वा ।
तस्य सर्वाणि कार्याणि सिद्धिं यास्यन्ति पाण्डव ।
मत्प्रसादाच्च ते सर्वे विराटवसतिं स्थिताः ।
न प्रज्ञास्यन्ति कुरवो नरा वा तत्र वासिनः ।

वैशंपायन उवाच ।

इत्युक्त्वा सा तदा देवी युधिष्ठिरमरिंदमम् ।
रक्षां कृत्वा च पाण्डूनां तत्रैवान्तरधीयत ।

Colophon.

(G)

After adhy. 5, D9 ins. the foll. adhy.:

वैशंपायन उवाच ।

विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ।
यशोदागर्भसंभूतां नारायणवरप्रियाम् ।
नन्दगोपकुले जातां मङ्गल्यां कुलवर्धनीम् ।
कंसविद्रावणकरीमसुराणां भयंकरीम् ।
शिलातटविनिक्षिप्तामाकाशान्तरगामिनीम् ।
वासुदेवस्य भगिनीं दिव्यमाल्यविभूषिताम् ।
दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम् ।
स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसंभवैः ।
आमन्त्र्य दर्शनाकाङ्क्षी राजा देवीं सहानुजः ।
नमोऽस्तु वरदे कृष्णे कौमारव्रतचारिणि ।
बालार्कसदृशच्छाये पूर्णचन्द्रनिभानने ।
चतुर्भुजे चतुर्वक्त्रे पीनश्रोणिपयोधरे ।
मयूरपिच्छवलये गदाचक्रासिधारिणि ।
नमस्तेऽम्बुजपत्राक्षि नमस्ते त्रिदशार्चिते ।
सुरारिणि नमस्तुभ्यं नमः पशुपतिप्रिये ।
दैत्यदानवदर्पघ्नी दैत्यदानवपूजिते ।
शैलराजसुते देवि नमस्ते विन्ध्यवासिनि ।
सर्वप्रहरणोपेते सर्वज्ञे सर्वगे ध्रुवे ।
अजिते विजये भद्रे भद्रकालि रणप्रिये ।
कृष्णे देवि नमस्तुभ्यं नमः कैटभमर्दिनि ।
नमो गायत्रि सावित्रि नमस्ते जातवेदसि ।
वागीश्वरि नमस्तुभ्यं मेनकायाः सुते नमः ।
शंकरार्धशरीरस्थे नमस्ते विष्णुपूजिते ।
नमो ब्रह्माणि रुद्राणि नमो नारायणप्रिये ।
नमस्त्रैलोक्यविख्याते नमस्तेऽमरपूजिते ।
पद्मकिञ्जल्कवर्णाभे चारुपद्मनिभानने ।
महासिंहरथारूढे महाशार्दूलवाहिनि ।
महेन्द्राणि नमस्तुभ्यं नमस्ते भक्तवत्सले ।
महिषासुरदर्पघ्नि कंसासुरभयंकरि ।
कालरात्रि महारात्रि यशस्करि शुभानने ।
कौमारं व्रतमास्थाय त्रिदिवं पालितं त्वया ।
तेन त्वं स्तूयसे देवि त्रिदशैः पूज्यसेऽपि च ।
सुरेश्वरि महादेवि महिषासुरघातिनि ।
प्रसन्ना मां सुरश्रेष्ठे दयां कुरु शिवा भव ।
जया त्वं विजया त्वं च संग्रामे विजयप्रदा ।
भविष्यसि सुसंप्रीता वरदा भव सांप्रतम् ।
विन्ध्याचले नगश्रेष्ठे तव स्थानं हि शाश्वतम् ।
कालि कालि महाकालि सीधुमांसवसाप्रिये ।
त्रैलोक्यमातर्जननि ममेह वरदा भव ।
भारावतरणे ये त्वां संस्मरिष्यन्ति मानवाः ।
प्रणमन्ति च ये नित्यं प्रभाते च नरा भुवि ।
न तेषां दुर्लभं किंचित्पुत्रतो धनतोऽपि च ।
दुर्गात्तारयसे नित्यं तेन दुर्गा स्मृता पुरा ।
कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ।
दस्युभिः संनिरुद्धानां त्वं गतिः परमा नृणाम् ।
जलप्रतरणे देवि कान्तारेष्वटवीषु च ।
ये स्मरन्ति महादेवीं नैव सीदन्ति ते नराः ।
त्वं कीर्तिः श्रीर्धृतिः सिद्धिर्ह्रीर्विद्या संततिर्मतिः ।
संध्या रात्रिः प्रभा निद्रा ज्योत्स्ना कान्तिः क्षमा दया ।
नृणां बन्धवधक्लेशं पुत्रदारधनक्षयम् ।

व्याधिमृत्युभयं घोरं पूजिता नाशयिष्यसि ।
सोऽहं राज्यपरिभ्रष्टः शरणं त्वामुपागतः ।
प्रणतश्च तथा मूर्ध्ना चरणौ ते सुरेश्वरि ।
त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः ।
शरणं भव मे दुर्गे शरण्ये भक्तवत्सले ।
आपन्महार्णवे घोरे अस्मिन्विषमदुर्गमे ।
दुस्तरे त्राहि मां भद्रे परकीयनिवेशने ।
यथा न जानाति नरोऽत्र कश्चि-
द्युधिष्ठिरोऽत्रावसतीति दुर्गे ।
तथा कुरु स्वर्गसदां वरिष्ठे
त्वच्चारुपादाब्जपुरः स्थितोऽहम् ।
दुःखान्वितोऽहं प्रलपामि दुर्गे
उन्मत्तवद्दीनमना निराशः ।
प्रसीद दुर्गे मम सानुजस्य
समीहितं तत्कुरुते नमोऽस्तु ।
एवं स्तुता तदा देवी दर्शयामास पाण्डवम् ।
उपसगम्य राजान वचनं चेदमब्रवीत् ।

देव्युवाच ।
शृणु राजन्महाबाहो मदीयं वचनं प्रभो ।
भविष्यत्यचिरादेव संग्रामे विजयस्तव ।
क्षोभयिष्यसि संप्राप्तां समस्तां कुरुवाहिनीम् ।
राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे पृथिवीं पुनः ।
भ्रातृभिः सहितो वीर वृद्धिं प्राप्स्यसि पुष्कलाम् ।
मत्प्रसादाच्च ते सौख्यमारोग्यं च भविष्यति ।
ये च मां कीर्तयिष्यन्ति लोके विगतमत्सराः ।
तेषां तुष्टिं प्रदास्यामि राज्यमायुर्बलं सुतान् ।
प्रवासे नगरे वापि संग्रामे शत्रुसंकटे ।
अटव्यां दुर्गकान्तारे सागरे गिरिगह्वरे ।
ये स्मरिष्यन्ति मां राजन्यथाहं भवता स्मृता ।
न तेषां दुर्लभं किंचिदस्मिँल्लोके भविष्यति ।
इदं स्तोत्रवरं भक्त्या शृणुयाद्वा पठेत वा ।
तस्य सर्वाणि कार्याणि सिद्धिं यास्यन्ति पाण्डव ।
मत्प्रसादाच्च वः सर्वान्विराटनगरे स्थितान् ।
नैव ज्ञास्यन्ति कुरवो नरा वा तन्निवासिनः ।

वैशंपायन उवाच ।
इत्युक्त्वा सा तदा देवी युधिष्ठिरमरिंदमम् ।
रक्षां कृत्वा च पाण्डूनां तत्रैवान्तरधीयत ।

Colophon.

5

After वैशं° (v. l. of वैशं° उ°) of 4. 6. 1, S ins.:

ततस्तु ते पुण्यतमां शिवां शुभां
महर्षिगन्धर्वनिषेवितोदकाम् ।
त्रिलोककान्तामवतीर्य जाह्नवी-
मृषींश्च देवांश्च पितॄनतर्पयन् ।
वरप्रदानं ह्यनुचिन्त्य पार्थिवो
हुताग्निहोत्रः कृतजप्यमङ्गलः ।
दिशं तथैन्द्रीमभितः प्रपेदिवा-
न्कृताञ्जलिर्धर्ममुपाह्वयच्छनैः ।

युधिष्ठिरः ।
वरप्रदान मम दत्तवान्पिता
प्रसन्नचेता वरदः प्रजापतिः ।
जलार्थिनो मे तृषितस्य सोदरा
मया प्रयुक्ता विविशुर्जलाशयम् ।
निपातिता यक्षवरेण ते वने
महाहवे वज्रभृतेव दानवाः ।
मया च गत्वा वरदोऽभितोषितो
विवक्षता प्रश्नसमुच्चयं गुरुः ।
स मे प्रसन्नो भगवान्वरं ददौ
परिष्वजंश्चाह तथैव सौहृदात् ।
वृणीष्व यद्वाञ्छसि पाण्डुनन्दन
स्थितोऽन्तरिक्षे वरदोऽस्मि पश्य माम् ।
स वै मयोक्तो वरदः पिता प्रभुः
सदैव मे धर्मरता मतिर्भवेत् ।
इमे च जीवन्तु ममानुजाः प्रभो
वयश्च रूपं च बलं तथाप्नुयुः ।
क्षमा च कीर्तिश्च यथेष्टतो भवे-
द्व्रतं च सत्यं च समाधिरेव च ।
वरो ममैषोऽस्तु यथानुकीर्तितो
न तन्मृषा देववरो यदब्रवीत् ।

वैशंपायनः ।
स वै द्विजातिस्तरुणस्त्रिदण्डभृ-
त्कमण्डलूष्णीषधरोऽन्वजायत ।
सुरक्तमाञ्जिष्ठवराम्बरः शिखी
पवित्रपाणिर्ददृशे तदद्भुतम् ।
तथैव तेषामपि धर्मचारिणां
यथेप्सिता ह्याभरणाम्बरस्रजः ।
क्षणेन राजन्नभवन्महात्मनां

5

(L. 1) G1.3 पुण्यजलां; G2 पुण्यजलैः. — (L. 7) M ततो दिशं चैंद्रमभिप्र°. — (L. 11) G2 M2–4 भ्रातरो (for सोदरा). — (L. 14) T2 G1 °वे विस्मितदेवदानवाः. — (L. 18) M (M4 *sup. lin.* as above) °जंश्चानपगेन चेतसा. — (L. 26) T1 M4.5 व्रतस्थं; M1 धृतिश्च; M2 व्रतश्च; M3 व्रतं तु. T1 सत्यस्य; G3 M सत्येन. — After वैशं°, T G2.3 ins.:

इत्येवमुक्त्वा धर्मात्मा धर्ममेवानुचिन्तयन् ।

प्रशस्तधर्मार्थ्यफलाभिकाङ्क्षिणाम् ।
नवेन रूपेण विशां पतिर्वृतः
स्वधर्मरूपेण तथा प्रतापवान् ।

6

T G M1 (om. lines 12–16) ins. after 4. 8. $7^{ab}$: M2–5 ins. after 4. 8. 7 (for transpositions and omissions in M2–5 see below):

स्त्रीभिश्च पुरुषैश्चापि सर्वतः परिवारिताम् ।
विराटभार्या तां देवीं कारुण्याज्जातसंभ्रमा ।
अप्रेषयत्समीपस्थाः स्त्रियो वृद्धाश्च तत्पराः ।
अपनीय ततः सर्वा आनयध्वमिहैव ताम् ।
यदा दृष्टा मया साध्वी कम्पते मे मनस्तदा ।
तस्माच्छीघ्रमिहानाय्य दर्शयध्वं यदीच्छथ ।
तास्तथोक्ता उपागम्य द्रौपदीं परिसंगताम् ।
आनीय सर्वथा त्वेनामब्रुवन्मधुरां गिरम् ।
भद्रे त्वां द्रष्टुमिच्छन्ती सुदेष्णा हर्म्यभूतले ।
स्थिता तदर्थं हि वयं त्वत्समीपमिहागताः ।
अथ सा छिन्नपट्टाभ्यां वल्कलाजिनसंवृता ।
राजवेश्म उपागम्य यत्राग्रमहिषी स्थिता ।
सुदेष्णामगमत्कृष्णा राजभार्यां यशस्विनीम् ।
कृष्णान्केशान्मृदून्दीर्घान्समुद्ग्रथ्यायतेक्षणा ।
कुञ्चिताग्रान्सुसूक्ष्मांस्तान्दर्शनीयान्निबध्य च ।
जुगूह दक्षिणे पार्श्वे मृदूनसितलोचना ।
सा प्रविश्य विराटस्य द्रौपद्यन्तःपुरं शुभा ।
ह्रीनिषेधान्विता बाला कम्पमाना लतेव सा ।
अभिगम्य च सुश्रोणी सर्वलक्षणसंयुता ।
ददर्शावस्थितां हैमे पीठे रत्नपरिच्छदे ।
रक्तसूक्ष्मांशुकधरां मेघे सौदामिनीमिव ।
नानावर्णविचित्रां च सर्वाभरणभूषिताम् ।
सुभ्रूं सुकेशीं सुश्रोणीं कुब्जवामनमध्यगाम् ।
बहुपुष्पोपकीर्णायां भूम्यां वेदिमिवाध्वरे ।
सुदेष्णां राजमहिषीं सर्वालंकारभूषिताम् ।
श्रीमतीं राजपुत्रीणां शतेन परिवारिताम् ।
ताः सर्वा द्रौपदीं दृष्ट्वा संतप्ताः परमाङ्गनाः ।
त्वरिताश्चोपतस्थुस्ताः सहसोत्थाय चासनात् ।
निरीक्षमाणास्ताः सर्वाः शचीं देवीमिवागताम् ।
गूढगुल्फां वरारोहां कृष्णां ताम्रायतेक्षणाम् ।
अतिसर्वानवद्याङ्गीं नतगात्रीं सुमध्यमाम् ।
नह्रस्वां नातिमहतीं जातां बहुतृणे वने ।
ऋश्यरोहीमिवानिन्द्यां सुकेशीं मृगलोचनाम् ।
तां मृगीमिव वित्रस्तां यूथभ्रष्टामिव द्विपाम् ।
लक्ष्मीमिव विशालाक्षीं विद्यामिव यशस्विनीम् ।
रोहिणीमिव ताराणां दीप्तामग्निशिखामिव ।
पार्वतीमिव रुद्राणीं वेलामिव महोदधेः ।
सुलभामिव नागीनां मृगीणामिव किंनरीम् ।
गङ्गामिव विशुद्धाङ्गीं शारदीमिव शर्वरीम् ।
तामचिन्त्यतमां लोके इलामिव यशस्विनीम् ।
सावित्रीमिव दुर्धर्षां ब्राह्म्या लक्ष्म्या समन्विताम् ।
सुदेष्णा पर्यपृच्छत्तां विस्मयोत्फुल्ललोचना ।
का त्वं सर्वानवद्याङ्गी कुतोऽसि त्वमिहागता ।
कस्य वा त्वं विशालाक्षि किं वा ते करवाण्यहम् ।

तदैव तत्प्रसादेन रूपमेवाभजत्स्वकम् ।

— (L. 30) T व्यजायत; G1 व्यराजत; G2.3 ह्यजायत. — (L. 38) T1 त्वधर्म्य-; G3 त्वधर्म-; M1 तथा च; M2–5 त्वथर्व-. G2.3 वृतान् (for तथा).

6

G1 om. lines 1–2; M2 reads lines 1–10 after line 17; M3–5 om. lines 1–10. — (L. 2) M1.2 तां तदा देवी (for the prior half). — (L. 4) T2 G1.3 अनुनीय. — (L. 7) M1.2 °संगताः. — (L. 10) G2 स्थित्वा. T1 G2 त्वदर्थं. G3 तदर्थं हि वयं सर्वाः; M1.2 त्वदर्थं प्रेषयच्चास्मान् (for the prior half). G2 उपागताः. M1.2 द्रष्टुं तां त्वं यदीच्छसि (for the posterior half). — After line 10, M1.2 ins.:

आयाह्यस्माभिरेवाद्य रक्ष्यमाणा यथेष्टतः ।
तच्छ्रुत्वा द्रौपदी तासां वचनं वाक्यकोविदा ।
ईप्सितार्था हि लाभेन हृष्टयाता गृहोत्तमम् ।

— M2 repeats line 11 after line 18. — (L. 12) T1 G2 °श्म तदागम्य; G1 श्मन्युपाक्रम्य; G3 °श्मन्यपक्रम्य; M2.3 °श्मसुपागम्य; M4 °श्म उपक्रम्य. — (L. 16) G1 M2 जगृहे (for जुगूह). — (L. 24) T1 G1 M1–3 वेदी°. — (L. 25) T1 G2 °संयुतां; G3 °संवृतां (for °भूषितां). — (L. 29) M शची- (for शची). — (L. 32) M1.3 न गौरीं न च कालिकां (for the posterior half). — (L. 33) M1.3 नीलोत्पलदलश्यामां (for the prior half). — After the prior half, M2 ins.:

न गौरीं न च कालिकाम् ।
नीलोत्पलदलश्यामा.

— (L. 38) T M (except M4) केसरीं (for किंनरीम्). — (L. 41) T1 G2 M4 समावृतां (for सम°). — After line 41, T1 G2 ins.:

सीतामिव सतीं शुद्धामरुन्धतिमिव प्रियाम् ।

— (L. 43) Some MSS. °द्यांगि. — (L. 44) A few MSS. °लाक्षी.

7

After 4. 8. 19$^{ab}$, S ins.:

कृष्णा कमलपत्राक्षी सा मे प्राणसमा सखी ।
न चाहं चिरमिच्छामि क्वचिद्वस्तुं शुभानने ।
व्रतं किलैतदस्माकं कुलधर्मोऽयमीदृशः ।
यो ह्यस्माकं हरेद्द्रव्यं देशं वसनमेव वा ।
न क्रोद्धव्यं किलास्माभिरस्मद्गुरुररोषणः ।
साहं वनानि दुर्गाणि तीर्थानि च सरांसि च ।
शैलांश्च विविधान्रम्यान्सरितश्च समुद्रगाः ।
भर्तृशोकपरीताङ्गी भर्तृसब्रह्मचारिणी ।
विचरामि महीं दुर्गां यत्र सायंनिवेशना ।
वीरपत्नी यदा देवी चरमाणेषु भर्तृषु ।
साहं विवत्सा विधिना गन्धमादनपर्वतात् ।
शृणोमि तव सौशील्यं भर्तुर्मधुरभाषिणि ।
माहात्म्यं च ततः श्रुत्वा ब्राह्मणानां समीपतः ।
त्वामुपस्थातुमिच्छामि ततश्चाहमिहागता ।
गुरवो मम धर्मश्च वायुः शक्रस्तथाश्विनौ ।
तेषां प्रसादाच्च न मां कश्चिद्धर्षयते पुमान् ।

8

For 4. 9. 1–4$^{ab}$, S subst.:

वैशंपायनः ।

अथापरोऽदृश्यत वै शशी यथा
हुतो हविर्भिर्हि यथाध्वरे शिखी ।
तथा समालक्ष्यत चारुदर्शनः
प्रकाशवान्सूर्य इवाचिरोदितः ।
तमाव्रजन्त सहदेवमग्रणी-
र्नृपो विराटो नचिरात्समैक्षत ।
प्रैक्षन्त तं तत्र पृथक्समागताः
सभासदः सर्वमनोहरप्रभम् ।
युवानमायान्तममित्रकर्शनं
प्रमुक्तमभ्रादिव चन्द्रमण्डलम् ।
यष्ट्या प्रमाणान्वितया सुदर्शनं
दामानि पाशं च निबद्ध्य पृष्ठतः ।
मौञ्जीं च तन्त्रीं महतीं सुसंहितां
बालैश्च दामैर्बहुभिः समावृताम् ।
स चापि राजानमुवाच वीर्यवा-
न्कुरुष्व मां पार्थिव गोष्ववस्थितम् ।
मया हि गुप्ताः पशवो भवन्तु ते
प्रनष्टनिद्राः प्रभवोऽस्मि बल्लवः ।
न श्वापदेभ्यो न च रोगतो भयं
न चापि तासामुत तस्कराद्भयम् ।
पयःप्रभूता बहुला निरामया
भवन्ति गावः सुभृता नराधिप ।
निशम्य राजा सहदेवभाषितं
निरीक्ष्य माद्रीं सुतमभ्यनन्दत ।
उवाच तुष्टो मुदितेन चेतसा
न बल्लवत्वं त्वयि वीर लक्षये ।
धैर्याद्वपुः क्षात्रमिवेह ते दृढं
प्रकाशते कारववंशजस्य वा ।
नापण्डितेयं तव दृश्यते तनु-
र्भवेह राज्ये मम मन्त्रधर्मभृत् ।
प्रशाधि मत्स्यान्सहराजकानिमा-
न्बृहस्पतिः शक्रयुतानिवामरान् ।
बलं च मे रक्ष सुवेष सर्वशो
गृहाण खड्गं प्रतिरूपमात्मनः ।
अनीककर्णाग्रधरो बलस्य मे
प्रभुर्भवानस्तु गृहाण कार्मुकम् ।
विराटराज्ञाभिहितः कुरूत्तमः
प्रशस्य राजानमभिप्रणम्य च ।
उवाच मत्स्यप्रवर महामतिः
शृणुष्व राजन्मम वाक्यमुत्तमम् ।
बालो ह्यहं जातिविशेषदूषितः
कुतोऽद्य मे नीतिषु युक्तमन्त्रिता ।
स्वकर्मतुष्टाश्च वयं नराधिप
प्रशाधि मां गाः परिरक्षणेऽनघ ।

9

After 4. 10. 4, S ins.:

विराटः ।

गजेन्द्रलीलो मृगराजगामी
वृषेक्षणो देवसुतोग्रतेजाः ।
पीनांसबाहुः कनकावदातः
कोऽयं नरो मे नगरं प्रविष्टः ।
किमेष देवेन्द्रसुतः किमेष
ब्रह्मात्मजो वा किमयं स्वयंभूः ।

8

(L. 1) $M_{1.5}$ खे (for वै). — (L. 6) G समीक्षत. — (L. 12) $G_3$ पाशानि; $M_{1.4}$ (*sup. lin.* as in text). 5 कीलांश्च. — (L. 13) T M सुसंहतां. — (L. 16) M (except $M_4$) मा (for मां). — (L. 17) $G_3$ M मयाभिगुप्ताः. — (L. 18) G प्रसन्न° (for प्रनष्ट°). — (L. 40) $T_1$ °ष्व वाक्यं मम राजसत्तम. — (L. 42) $T_1$ $G_3$ $M_4$ °मंत्रता. — (L. 43) T स्वकर्मयुक्ताश्च. — (L. 44) $M_{1-3}$ मा (for मां). $T_1$ $G_2$ $M_4$ गो- (for गाः). $T_1$ °रक्षणेन वै; $T_2$ $G_1$ $M_{3.4}$ (*sup. lin.*) प्रतिरक्षणेन च; $M_{1.2.5}$ °रक्षणे तव.

उमासुतो वैश्रवणात्मजो वा
प्रेक्ष्यैनमासीदिति मे प्रतर्कः ।
वैशंपायनः ।
सभामतिक्रम्य च वासवोपमो
निरीक्ष्यमाणो बहुभिः समागतैः ।
स तत्र राजानमभित्रहाब्रवी-
द्बृहन्नलाहं नरदेव नर्तना ।
वेणीं प्रकुर्यां रुचिरे च कुण्डले
ग्रथे स्रजः प्रावरणानि संहरे ।
स्नानं रचेयं विमृजे च दर्पणं
विशेषकेष्वेव च कौशलं मम ।
क्लीबेषु बालेषु जलेषु नर्तने
शिक्षाप्रदानेषु च योग्यता मम ।
करोमि वेणीषु च पुष्पपूरका-
श्च मे स्त्रियः कर्मणि कौशलाधिकाः ।
तमब्रवीत्पांशुमुदीक्ष्य विस्मितो
विराटराजोपसृतं महायशाः ।

10

After 4. 12. $16^{ab}$, S (G1 om. lines 1–6) ins.:

अवाङ्मुखाश्च भीताश्च मल्लाश्चान्ये विचेतसः ।
व्यसुत्वमपरे चैव वाञ्छन्तीव प्रविह्वलाः ।
गां प्रवेष्टुमिवेच्छन्ति खं गन्तुमिव चोत्थिताः ।
त्रस्ताः शान्ता विषण्णाङ्गा निःशब्दा विह्वलेक्षणाः ।
विराटराजमल्लास्ते भग्नचित्ता हतप्रभाः ।
मल्लेन्द्रनिहताः सर्वे न किंचित्प्रवदन्ति ते ।
मल्ल उद्वीक्ष्य तान्मल्लांस्त्रस्तान्वाक्यमुवाच ह ।
आगतं मल्लराजं मां कृत्स्ने पृथिविमण्डले ।
सिंहव्याघ्रगजैः सार्धं क्रीडन्तं विद्धि भूपते ।
मल्लेन्द्रस्य वचः श्रुत्वा बलदर्पसमन्वितम् ।
विराटो वीक्ष्य तान्मल्लांस्त्रस्तान्वाक्यमुवाच ह ।
अनेन सह मल्लेन को योद्धुं शक्तिमान्नरः ।
ततो युधिष्ठिरोऽवादीच्छ्रुत्वा मत्स्यपतेर्वचः ।
अस्ति मल्लो महाराज मया दृष्टो युधिष्ठिरे ।
अनेन सह मल्लेन योद्धुं शक्नोति भूपते ।
योऽसौ मल्लो मया दृष्टः पूर्वं यौधिष्ठिरे पुरे ।
सोऽयं मल्लो वसत्येष राजंस्तव महानसे ।
युधिष्ठिरवचः श्रुत्वा व्यक्तमाहेति पार्थिवः ।
सोऽप्यथाहूयतां क्षिप्रं योद्धुं मल्लेन संसदि ।
भीमसेनो विराटेन आहूतश्चोदितस्तदा ।
योद्धुं ततोऽब्रवीद्वाक्यं योद्धुं शक्नोमि भूपते ।
नरेन्द्र ते प्रभावेन श्रिया शक्त्या च शासनात् ।
अनेन सह मल्लेन योद्धुं राजेन्द्र शक्नुयाम् ।
युधिष्ठिरकृतं ज्ञात्वा श्रिया तव विशां पते ।
महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम् ।
चोदितो भीमसेनस्तु मल्लमाहूय मण्डले ।

11

N ins. after 4. 12. 20: T2, after line 2 of 253*:

ततस्तौ नरशार्दूलौ बाहुयुद्धे समीयतुः ।
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ।
आसीत्सुभीमः संपातो वज्रपर्वतयोरिव ।
उभौ परमसंहृष्टौ बलेनातिबलावुभौ ।
अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ।
उभौ परमसंहृष्टौ मत्ताविव महागजौ ।
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसंकटैः ।
संनिपातावधूतैश्च प्रमाथोन्मथनैस्तथा ।
क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्वनैः ।
तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च ।
शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ।
जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टितैः ।
तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा ।

9

(L. 1) G2.3 गजेंद्रतुल्यो. — (L. 2) Some MSS. °तोद्य°. — (L. 7) G M1 उतासुरो; M2.5 हुताशनो (for उमा°). — After line 20, T1 ins.:

इत्यर्जुनस्तं नरदेवमोजसा
विज्ञाप्य तस्थौ विधिनात्मनः क्रियाम् ।

10

(L. 9) T2 G2 °मृगैः; G1 M5 °गणैः (for °गजैः). — After line 12, T1 ins.:

इत्युक्तास्ते विराटेन सर्वे मल्ला विशां पते ।
तूष्णीमासंस्ततो राजा क्रोधाविष्ट उवाच सः ।
ग्रामांश्च वेतनान्येषां मल्लानां हारयाम्यहम् ।

— (L. 21) M1–3 योद्धुकामो (for योद्धुं ततो). — (L. 24) G2 °कृतं कृत्वा; M °कृतशलात्. — (L. 26) M (except M4) तं (for तु). — After line 26, T G2 ins.:

योद्धुं व्यवस्थितो वीरो रेणुं संमृज्य हस्तयोः ।

11

(L. 1) B3.5 Dn2 D1–3.9–12 T2 °युद्धं. — (L. 2) Om. in D1–3. D3 बलेनातिबलावुभौ (for the posterior half). — After line 2, Ś1 K ins.:

तद्युद्धमभवद्घोरं तयोस्तत्र समागमे ।

— (L. 3) Om. in D1–3. Dn2 D11.12 T2 भीमश्च (for सुभीमः). — (L. 4) Om. in K2 D3.7 D1.2 वीरौ (for उभौ). — (L. 5) Om. in K2 D3.7. Ś1 Dn1 D1.2 D4

सर्वाणि भूतान्यजयत्स वीर्यवान्
अतर्पयच्चापि हिरण्यरेतसम् ।
यदस्य संस्थामपि तस्य संयुगे
जानामि वीर्यं परवीर्यमध्यगः ।
संगृह्य रश्मीनपि वार्य वीर्यवान्
आदाय चापं प्रययौ रथे स्थितः ।
न सर्वभूतानि न देवदानवाः
न चापि सर्वे कुरवः समागताः ।
धनं हरेयुस्तव जातु धन्विनो
बृहन्नला तूत्तरसारथिर्यदि ।

### 35

After 4. 36. 40, D4 ins. the foll. passage, of which D3 ins., at the some point, lines 2–3 only:

प्रगृह्यैतद्धनं सर्वं मुञ्च मां त्वं बृहन्नडे ।
आरनालेन जीविष्ये न मे गोभिः प्रयोजनम् ।
जीवन्प्राप्स्यामि गा ह्यन्या निवर्तस्व बृहन्नडे ।
अर्जुन उवाच ।
यशो हि कल्पान्तशतैकसाक्षि
न जीवितं कुञ्जरकर्णलोलम् ।
क्षितिपालसूनो भव रङ्गमध्ये
लज्जामहे संगररङ्गभङ्गात् ।
उत्तर उवाच ।
या कीर्तिरुत्सर्पति देहनाशे
धिग्दुःखदां मूलविनाशिनीं ताम् ।
विक्रीय देहं द्रविणेन को नु
यात्राकृतं देवकुले करोति ।

### 36

T1 ins. after 4. 37. $10^{ab}$: G2 (which om. 10–11), after 4. 37. 9:

ये जेतारो महीपानाममुना बहवो हताः ।
यस्मिंस्तेजो महत्कृत्स्नं निर्भरोच्छ्वसितं भवेत् ।
येन मे दक्षिणा दत्ता बद्ध्वा द्रुपदमोजसा ।
विद्ध्वा वियद्गतं लक्ष्यं विनिर्जित्य च पार्थिवान् ।
निर्जितानेन पाञ्चाली पुरानेन स्वयंवरे ।
खाण्डवे येन संतृप्तो वह्निर्जित्वा सुरासुरान् ।
परिणीता सुभद्रा च येन निर्जित्य यादवान् ।
निर्जितो येन युद्धेन त्रिपुरारिः स्मरार्दनः ।
गत्वा त्रिविष्टपं येन जितेन्द्रा दानवा युधि ।
निवातकवचा राजन्दानवानां त्रिकोटयः ।
निर्जिताः कालकेयाश्च हिरण्यपुरवासिनः ।
येन त्वं मोचितो बद्धश्चित्रसेनेन तद्वने ।
येन गत्वोत्तरं मेरोरानिनाय महद्धनम् ।
याजितो धर्मसूनुश्च नृपान्सर्वान्विजित्य च ।
यस्मिञ्शौर्यं च वीर्यं च तेजो धैर्यं पराक्रमः ।
औदार्यं चैव गाम्भीर्यं ह्रीः श्रीर्धर्मो दयार्जवम् ।
एवमादिगुणोपेतः सोऽयं पार्थो न संशयः ।

### 37

After 4. 39. 19, S (which om. st. 20) ins.:

माता मम पृथा नाम तेन मां पार्थमब्रुवन् ।
देवदानवगन्धर्वान्पिशाचोरगराक्षसान् ।
अहं पुरा रणे जित्वा खाण्डवेऽग्निमतर्पयम् ।
हुताशनं तर्पयित्वा सहितः शार्ङ्गधन्वना ।
त्रिविष्टपगतौ दृष्ट्वा पितामहमहेश्वरौ ।
मूर्च्छया पतितं भूमावागतौ देवसत्तमौ ।
दृष्ट्वा तौ वरदौ देवौ संज्ञां लब्ध्वोत्थितं पुनः ।
मूर्धाभिप्रणतं भूमौ तौ तदा वरदौ वरौ ।
कृष्णेत्येकादशं नाम प्रीत्या मे तत्र चक्रतुः ।
च मम वीर्येण कर्मणा चाभिराधितौ ।
सर्वदेवैः परिवृतौ भूयो मां स्वयमूचतुः ।
वरं तात वृणीष्वेति यत्प्रार्थयसि पाण्डव ।
ततोऽहमस्त्राण्यलभं दिव्यानि च दृढानि च ।
ब्राह्मं पाशुपतं चैव स्थूणाकर्णं च दुर्जयम् ।
ऐन्द्रं वारुणमाग्नेयं वायव्यमथ वैष्णवम् ।
ततोऽहमजयं भूयो रथेनैन्द्रेण दुर्जयान् ।
मातलिं सारथिं कृत्वा निवातकवचान्रणे ।
अवध्यकवचान्देवैर्वरदत्तान्महासुरान् ।
तिस्रः कोटीर्दानवानां संयुगेष्वनिवर्तिनाम् ।
एको निर्जित्य संग्रामे भूयो देवानतोषयम् ।
ततो मे भगवानिन्द्रः किरीटमददात्स्वयम् ।
देवाश्च शङ्खमददुः शत्रुसैन्यनिवारणम् ।
अहं पारे समुद्रस्य हिरण्यपुरवासिनाम् ।

### 35

(L. 2) Cs cites आरनालं.

### 37

(L. 7) G1 लब्धेरितं; M4 °स्थितः. — (L. 8) M1–3 मूर्धभिः प्रणतं; M4 मूर्ध्ना निपतितौ. — (L. 10) M1.2.4 (*sup. lin.* as above) चाभितोषितौ; M5 °नंदितौ. — (L. 12) T1 G यं (for यत्). — (L. 18) T1 G सर्वान्हत्वा महारथान् (for the posterior half). — (L. 20) M समरे (for संग्रामे). — (L. 21) T1 G प्रददात् (for अददात्). — (L. 22) T1 G M5 (*sup. lin.* as above) °विदा° (for °निवा°). — (L. 23)=(var.) 4. 56. $11^{ab}$. M2.4

हत्वा षष्टिसहस्राणि जयं संप्राप्तवानहम् ।
असंभ्रान्तो रथे तिष्ठन्सहस्रेषु शतेषु च ।
शत्रुमध्ये दुराधर्षो न मुह्यन्ति च मे दिशः ।
अहं गन्धर्वराजेन ह्रियमाणं सुयोधनम् ।
भ्रातृभिः सहितं तात गन्धर्वैः समरे जितम् ।
चतुर्दश सहस्राणि हत्वा चैनममोचयम् ।
मा भैर्विगतसंत्रासः कुरूनेतान्समागतान् ।
सुयोधनस्य मिषतः कर्णस्य च कृपस्य च ।
पितामहस्य भीष्मस्य द्रौणेर्द्रोणस्य च स्वयम् ।
सर्वानेव कुरूञ्जित्वा प्रत्यानेष्यामि ते पशून् ।
Colophon.

38

After 4. 39. 23, D9 ins.:

न स्मर्तव्यं त्वया वीर लोकपालसमो ह्यसि ।
प्रसादये महाबाहो पूर्वं यत्स्खलितं मम ।
तावन्मेऽभूद्भयं पार्थ यावत्त्वां नावलोकये ।
विभयो दर्शनात्तुभ्यं कस्त्वां योत्स्येजिजीविषुः ।
एवं प्रहृष्टरोमासौ ब्रूते मत्स्यसुतोऽर्जुनम् ।
प्राञ्जलिः समुपातिष्ठद्वासवो द्रुहिणं यथा ।
ततोऽर्जुनः समाश्वास्य मत्स्यं वैराटिमब्रवीत् ।
उवाच मुदितः काले तमो हत्वा यथा रविः ।
आश्वास्य पुत्रं मत्स्यस्य धनुर्विस्फार्य गाण्डिवम् ।
प्रेक्षणीयतमो भूत्वा तस्थौ दीप्तो रविर्यथा ।

39

After 4. 40. 27, N (D1 missing) ins.:

उत्तर उवाच ।
एकस्त्वं पाण्डवश्रेष्ठ बहूनेतान्महारथान् ।
कथं जेष्यसि संग्रामे सर्वशस्त्रास्त्रपारगान् ।
असहायोऽसि कौन्तेय ससहायाश्च कौरवाः ।
अत एव महाबाहो भीतस्तिष्ठामि तेऽग्रतः ।
वैशंपायन उवाच ।
उवाच पार्थो मा भैषीः प्रहस्य स्वनवत्तदा ।
युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत्सखा मम ।
तथा प्रतिभये तस्मिन्देवदानवसंकुले ।
खाण्डवे युध्यमानस्य कस्तदासीत्सखा मम ।
निवातकवचैः सार्धं पौलोमैश्च महाबलैः ।
युध्यतो देवराजार्थे कः सहायस्तदाभवत् ।
स्वयंवरे तु पाञ्चाल्या राजभिः सह संयुगे ।
युध्यतो बहुभिस्तात कः सहायस्तदाभवत् ।
उपजीव्य गुरुं द्रोणं शक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं कृष्णं च माधवम् ।
पिनाकपाणिनं चैव कथमेतान्न योधये ।
रथं वाहय मे शीघ्रं व्येतु ते मानसो ज्वरः ।

40

This passage of 27 lines, which has been placed by oversight in this App., is only a part of the foll. adhy. (4. 43. 10–20), which was wrongly copied here by the scribe of B5 and subsequently *omitted* by him in its proper place. The passage, which is ins. after 4. 42. 28 begins with धार्तराष्ट्राय दास्यामि (cf. 4. 43. 10^c) and ends with अद्य पश्यन्तु कौरवाः (= 4. 43. 20^d), followed by a *repetition* of 4. 42. 28. It needs only to be noted that the passage contains 822*, and 826*, but not 823* (a Southern stanza which is found interpolated in some N MSS. including B1).

(*sup. lin.* as above) °पुरमारुजं. — (L. 24) Cf. 4. 56. 11^cd. T1 G विजयं प्राप्तवानपि. — (L. 25) M2.5 समेषु विषमेषु च (for the posterior half). — (L. 26) M5 आपतत्सु (for शत्रुमध्ये). — After line 29, T1 ins.:

मन्नामकथनं कीर्तिं प्राप्यान्यैश्च प्रकीर्तितम् ।
एतानि मम नामानि योऽहन्यहनि कीर्तयेत् ।
तं न पश्यन्ति सत्त्वानि न तं निघ्नन्ति शत्रवः ।
अद्य पश्य महाबाहो मम वीर्यं सुदुःसहम् ।

(L. 30) M5 दृष्ट्वा (for एतान्). — Colophon. *Adhy. no.:* S 42 (M2.4 41).

39

Of the comm. only Cr cites स्वयंवरे from line 12. — (L. 1) Ś1 K कथम् (for बहून्). — (L. 2) K बहून् (for कथं). K समेत्य, Dn2 D4.6 जेष्यामि. Ś1 समेत्य पार्थ संग्रामे. Ś1 K सर्वशा(Ś1 °श)स्त्रविशारदान्. — (L. 3) Ś1 K कौरव्य (for कौन्तेय), and सहायाश्चापि कौ°. — (L. 4) D8 अत एव हि तिष्ठामि भीतः पार्थ तवाग्रतः. — (L. 5) K धीमान्; D8 जिष्णुर् (for पार्थो). K कौंतेयः (for मा भैषीः). — (L. 7) Ś1 K D2.9 सखे मम; D8 सहायतां. — D8 reads lines 8–9 after line 11. — (L. 9) B8 अयात्; B3m D5–7.9 अगात् (for आसीत्). B3.5 D2.4–7.9.10 सहायतां (for सखा मम). Ś1 K D8 कः सहायस्तदाभवत्. — K1 reads lines 10–11 after 13. — (L. 14) Ś1 K °व्य रणे रुद्रं. — Ś1 K2 B4 (om. the second line) ins. after line 15: D4.5.7.9 (all om. the second line), after line 16: K1, after line 17:

समासाद्य च वार्ष्णेयं योगानामीश्वरं प्रभुम् ।
कृष्णं च देवकीपुत्रं न भीर्मामुपयास्यति ।

41

Before 4. 45. 1 (that is, after adhy. 44), S ins.:

वैशंपायनः ।
कृपस्य तु वचः श्रुत्वा कर्णो राजन्युधां पतिः ।
पुनः प्रोवाच संक्रुद्धो गर्हयन्ब्राह्मणं कृपम् ।
लक्षयाम्यहमाचार्यं भयाद्धार्त्किं गतं रिपौ ।
भीतेन हि न योद्धव्यमहं योत्स्ये धनंजयम् ।
ननु वारुणमाग्नेयं याम्यं वायव्यमेव च ।
अस्त्रं ब्रह्मशिरश्चैव सत्त्वहीनश्च ते वृथा ।
मित्रकार्यं कृतमिदं पितापुत्रैर्महारथैः ।
भर्तृपिण्डश्च निर्दिष्टो यथेष्टं गन्तुमर्हथ ।
भिक्षां हरस्व त्वं नित्यं यज्ञाननुचरस्व च ।
आमन्त्रणं हि भुङ्क्ष्वाद्य मास्मान्युद्धेन भीषय ।
भार्गवास्त्रं मया मुक्तं निर्दहेत्पृथिवीमिमाम् ।
किं पुनः पाण्डुपुत्राणामेकमर्जुनमाहवे ।
आगमिष्यन्ति पदवीं मात्स्याः पाण्डवमाश्रिताः ।
तानहं निहनिष्यामि भवता गम्यतां गृहम् ।
तस्य तद्वचनं श्रुत्वा अश्वत्थामा प्रतापवान् ।
उवाच वदतां श्रेष्ठो दुर्योधनमवेक्ष्य च ।
ततश्छेत्स्यामि खड्गेन शिरस्ते ब्राह्मणाधम
वैशंपायन उवाच
एवमुक्ते तु वचने कर्णेनामित्रसूदन ।
अश्वत्थामा ततो राजन्खड्गं जग्राह चर्म च ।
गृहीत्वा विमलं खड्गं चर्म चादाय सुप्रभम् ।
दुद्राव योद्धुं तं कर्णं सिंहः क्षुद्रमृगं यथा ।
तस्मिन्गृहीते खड्गे तु कर्णोऽपि रथिनां वरः ।
उत्ततार रथात्तूर्णं गृह्णन्खड्गं स वीर्यवान् ।
ततस्तौ तु महावीर्यौ धृतास्त्रौ युद्धदुर्मदौ ।
अन्योन्यस्य वधं प्रेप्सू सिंहाविव मदोत्कटौ ।
तौ दृष्ट्वा सुमहावीर्यौ युद्धाय समवस्थितौ ।
दुर्योधनस्ततस्तूर्णं रथादुत्तीर्य वेगवान् ।
अभिगम्य गुरोः पुत्रमश्वत्थामानमब्रवीत् ।
अश्वत्थामन्गुरोः पुत्र क्षम्यतां द्विजसत्तम ।
कर्णो वक्तुं न जानाति ब्राह्मणाश्चातिकोपनाः ।
त्वयि संनिहितो भारो युद्धस्यैष विनिश्चयः ।
स तथाभिहितो राजन्राज्ञा चैव निवारितः ।
स्वरथं प्राप्य तूर्णं वै न च किंचिदुवाच ह ।
कर्णोऽपि स्वं रथं तूर्णमारुरोह नृपाज्ञया ।

42

After 4. 45. 26, D7 ins.:

कर्ण उवाच ।
सदैव द्रोणपुत्रोऽयं पापात्मा पापपौरुषः ।
किमत्र कार्यं पार्थेन कथं वा स प्रशस्यते ।
अन्यत्र कामान्मोहाद्वा लोभाद्वास्मासु केवलात् ।
प्रशंसति दुरात्मानं पाण्डवं पापपौरुषम् ।
मां चापि निन्दते नित्यं द्विषतस्यैव काम्यया ।
तस्मादयं सुदुर्बुद्धिः पश्यतां मम पौरुषम् ।
अश्वत्थामोवाच ।
वाक्छूरा ब्राह्मणाः प्रोक्ता बाहुशूराश्च क्षत्रियाः ।
धनुषा चार्जुनः शूरः कर्णः शूरो मनोरथैः ।
कर्ण उवाच ।
सदा भीषयते सर्वां वाहिनीं ब्राह्मणो गुरुः ।
प्रीत्या च पाण्डुपुत्राणां दर्शयन्नहितं तव ।
सदा च वायवो वान्ति नित्यं वर्षति वासवः ।
अर्जुनं समरे जित्वा लब्ध्वा च विजयं महत् ।

43

After 4. 48. 23, S ins.:

ततः स समरे वीरो बीभत्सुः शत्रुपूगहा ।
गोपालांश्चोदयामास गाश्चैताश्चोदयेति च ।
उत्तरं चाह बीभत्सुर्हर्षयन्पाण्डुनन्दनः ।
गवामग्रं समीक्षस्व गाश्चैवाशु निवर्तय ।
यावदेते निवर्तन्ते कुरवो जवमास्थिताः ।
याह्युत्तरेण गाश्चैताः सैन्यानां च नृपात्मज ।
पश्यन्तु कुरवः सर्वे मम वीर्यपराक्रमम् ।
ते लाभमिव मन्वानाः कुरवोऽर्जुनमाहवे ।
दृष्ट्वा यान्तमदूरस्थं क्षिप्रमभ्यपतन्रथैः ।
हस्त्यश्वपरिवारेण महताभिविराजता ।
योधैः प्रासासिहस्तैश्च चापबाणोद्यतायुधैः ।
तान्यनीकान्यशोभन्त कुरूणामाततायिनाम् ।
संसर्पन्त इवाकाशे विद्युत्वन्तो बलाहकाः ।
तानि दृष्ट्वा ह्यनीकानि निवर्तितरथानि च ।
पार्थोऽपि वायुवद्धोरं सैन्याग्रं व्यधुनोच्छरैः ।

$24^{ab}$.

41

(L. 2) M संरब्धो (for संक्रुद्धो). — (L. 8) M (except M5) निर्विष्टो (for निर्दिष्टो). — (L. 10) M आमंत्रणानि (for °णं हि). — After line 14, T ins.:

किं वेदवादिनां कार्यं परस्नेहानुभाषिणाम् ।

42

(L. 2–3) = (var.) 4. 42. 25. — (L. 11) = 4. 42.

43

(L. 1) T2 धीरो; M शूरो (for वीरो). — (L. 2) T2 M गावश्चोदयतेति च (for the posterior half). — (L. 10) T1 G1. 3 °ता चापि राजता. — M om. line 14. — (L. 15) T1 G1. 3 सैन्याभ्रं.

44

After 4. 49. 20, all MSS. except Ś1 K D1.2.4.3 ins.:

तमापतन्तं सहसा किरीटी
वैकर्तनं वै तरसाभिपत्य ।
प्रगृह्य वेगं न्यपतजवेन
नागं गरुत्मानिव चित्रपक्षः ।
तावुत्तमौ सर्वधनुर्धराणां
महाबलौ सर्वसपत्नसाहौ ।
कर्णस्य पार्थस्य निशम्य युद्धं
दिदृक्षमाणाः कुरवोऽभितस्थुः ।
स पाण्डवस्तूर्णमुदीर्णकोपः
कृतागसं कर्णमुदीक्ष्य हर्षात् ।
क्षणेन साश्वं सरथं ससारथि-
मन्तर्दधे घोरशरौघवृष्ट्या ।
ततः सुविद्धाः सरथाः सनागा
योधा विनेदुर्भरतर्षभाणाम् ।
अन्तर्हिता भीष्ममुखाः सहाश्वाः
किरीटिना कीर्णरथाः पृषत्कैः ।
स चापि तानर्जुनबाहुमुक्ता-
ञ्शराञ्शरौघैः प्रतिहत्य कर्णः ।
तस्थौ महात्मा सधनुः सबाणः
सविस्फुलिङ्गोऽग्निरिवाशु कर्णः ।
ततस्तु जज्ञे तलतालशब्दः
सशङ्खभेरीपणवप्रणादः ।
प्रक्ष्वेडितज्यातलनिस्वनं तं
वैकर्तनं पूजयतां कुरूणाम् ।
उद्धूतलाङ्गूलमहापताकं
ध्वजोत्तमं साकुलभीषयन्तम् ।
गाण्डीवनिह्रादकृतप्रणाद
किरीटिनं प्रेक्ष्य ननाद कर्णः ।
स चापि वैकर्तनमर्दयित्वा
साश्वं ससूतं सरथं पृषत्कैः ।
तमाववर्ष प्रसभं किरीटी
पितामहं द्रोणकृपौ च दृष्ट्वा ।
स चापि पार्थं बहुभिः पृषत्कै-

44

(L. 1) B1.3 त्वरितं; S समरे (for सहसा). — (L. 2) B2.4.5 D3.7.9 सहसा (for तरसा). S °नं सर्वसमृद्धतेजाः. — After line 2, S ins.:

प्रच्छादयामास महाधनुष्मा-
न्व्यषेधयच्छत्रुगणांश्च वीरः ।
निहत्य कर्णस्य तथा किरीटी
पुरःसरांश्चापि च पृष्ठगोपान् ।

— (L. 3) S प्रती(G1 समी)पमभ्यागमदप्रमेयो. — (L. 4) S वितत्य पक्षौ गरुडो यथोरगं (M °डेव नागं). — D7 om. lines 7–9. — (L. 7) D6 ततस्तयोर्युद्धमतीव घोरं; S कर्णं च पार्थं च मिश(T2 M2–4 °शा)म्य रथ्यौ. Cs cites निशम्य. — (L. 8) B (except B1) D5.6 S °वोवतस्थुः. — (L. 9) S तं (for स), and स्पष्टम् (for तूर्णम्). — (L. 10) B5 G M5 कोपात्; D6 संख्ये (for हर्षात्). — D3 om. lines 11–13. — (L. 11) B (except B1) D5.7.9 सकेतुम्; S ससूतम् (for ससारथिम्). — (L. 12) S °धे मेघ इवाभि(T1 G2 °शु-; T2 G3 M4 *sup. lin.* °श्म-; G1 °भ्र-; M5 °ति)वृष्ट्या. — (L. 13) S °युग्याः (for °विद्धाः). — (L. 15) B3 D4 °हिंते; T2 G2.3 M °हिंतं; G1 °मुखं. D6 च योधाः; D9 समस्ताः; S समीक्ष्य (M3 निरीक्ष्य) (for सहाश्वाः). — (L. 16) B3 D3.9 कर्णरथे; B4 D7 कर्णरथः; Dn2 D10 S कर्णरथं; D5 कीर्णरथे; D6 कीर्णरथः. — (L. 18) Dn1 D10 वीरः; S तूर्णं (for कर्णः). — (L. 19) B D3.5.6.9 ततो; S बभौ (for तस्थौ). — (L. 20) S अथ (for आशु). — After line 20, B3.4 D5 ins.:

अन्तर्दधे पार्थमिषुप्रवर्षै-
र्भृशं तदा चुक्रुशुराशु योधाः ।

— (L. 21) B1.2 Dn D10–12 अभूद्वै; D3.7 तेषां (for जज्ञे). S तलतालघोषः (M3 तुमुलं सघोषं). — (L. 22) B3 D6.7 °भेरीपटहप्रणादः (D6 °हा प्रणेदुः); B4 शंखस्य भेरी°; D3 शंखाश्च भेरीपटह°; S °भेरीपणवाकुलस्तु. — D7 om. lines 23–52. — (L. 23) Om. in D9. Dn2 D11.12 प्रक्ष्वेलनं; Cr प्रचंडित-; Cn प्रक्ष्वेडित- (as above). S प्रक्ष्वेळितास्फोटित-सिंहनादैर्. Ca cites lines 25–28 (with v. l. वीक्ष्य for प्रेक्ष्य in line 28). — (L. 25) S आधूत- (for उद्धूत-). — (L. 26) D10 ध्वजोत्तमान्. Dn2 D11.12 °भीषणं तं. B3m D3.9 Cr ध्वजोत्तमस्या(D9 °त्तमो व्या)कुलभीषणं तं; B3m Crp °त्तमास्याकुलभीषयंतं (Crp °णां तं); B3m Crp °त्तमाशाकुल-भीषणं (B3m °यं-) तं; B3m.4 Dn1 D5.6 Co.rp °त्तमानां कुलभीषयं(Dn1 Co °णं)तं; B5 Cn.s °त्तमांसाकुलभीषणांतं; S रथोत्तमं श्रेष्ठतमं कुरूणां; Crp °त्तमास्याकुलभीषणान्तं and °त्तमं साकुलभीषयन्तं (as above). — ❀ Cr: अर्जुनमिश्रस्तु साकुलं यथा स्यात् बिन्दुलोप आर्ष इत्याह । ❀ — (L. 27) B2 D6 °निर्घोष°; Cr as above. — (L. 29) D6 पार्थोथ; S पार्थोपि (for स चापि). — (L. 30) T1 G1.3 M4.5 °केतुं (for °सूतं). D9 स्वशरैः (for सरथं). D9 प्रयुक्तैः; T1 G1.3 M4.5 ससूतं; T2 G2 M1–3 सकेतुं (for पृषत्कैः). D6 च पृषत्कवर्षैः (for सरथं पृष°). — D3 om. lines 31–36. — (L. 31) B4 असौ ववर्षाथ किरीटमाली; S ननाद हर्षात्सहसा कि°. — (L. 33) S सिषेच (for स चापि), and शरौघैर् (for पृषत्कैर्). — D9 om. 34–36. — (L. 34) S °तैनः संयति तीक्ष्णवेगैः (T2

वैकर्तनो मेघ इवाभ्यवर्षत् ।
तथैव कर्णं च किरीटमाली
संछादयामास शितैः पृषत्कैः ।
तयोः सुतीक्ष्णान्सृजतोः शरौघा-
न्महाशराघास्त्रविवर्धने रणे ।
रथे विलग्नाविव चन्द्रसूर्यौ
घनान्तरेणानुददर्श लोकः ।
अथाशुकारी चतुरो हयांश्च
विव्याध कर्णो निशितैः किरीटिनः ।
त्रिभिश्च यन्तारममृष्यमाणो
विव्याध तूर्णं त्रिभिरस्य केतुम् ।
तेनातिविद्धः समरावमर्दी
प्रबोधितः सिंह इव प्रसुप्तः ।
गाण्डीवधन्वा ऋषभः कुरूणा-
मजिह्मगैः कर्णमियाय जिष्णुः ।
शरास्त्रवृष्ट्या निहतो महात्मा
प्रादुश्चकारातिमनुष्यकर्म ।
प्राच्छादयत्कर्णरथं पृषत्कै-
र्लोकानिमान्सूर्य इवांशुजालैः ।

°धारैः). — (L. 35) S वैकर्तनं चापि किरी°. — (L. 36) S (except T2) प्रच्छाद°. Dn1 शरैः पृषत्कैः; D6 G1.3 M शितैः शरौघैः; T G2 महेंद्रकल्पः. — (L. 37) S अमोघान् (for सुतीक्ष्णान्). — (L. 38) B1.3.5 महाशरौघास्त्रमहाविमर्दे (B5 °र्दः); B2 D6 अन्योन्यघोरास्त्रविमर्दनिष्ठे; B4 आसीत्सुघोरास्त्रमहाविमर्दः; D3 महान्सुघोरस्तुमुलो विमर्दः; D5 महान्सुघोरास्त्रमहाविमर्दे; D9 सहासुभौघोरमहाविमर्दः; S अ(G2 श)स्त्रघोरास महान्विमर्दः; cf. Cs. Cr cites विमर्दः. — (L. 39) S राहुप्रमुक्ताविव चंद्र°. — (L. 40) T1 G क्षणांतरेण. D10 T1 G1.3 आशु (for अनु-). Cc.r cite घनान्तरेण. — After line 40, S ins.:

हतास्तु पार्थेन नरप्रवीरा
भूमौ शयानाः सुमुखाः सुकेशाः ।
सुवर्णलोहायसवर्मगात्रा
वृक्षा यथा हैमवता निकृत्ताः ।
तथा स शत्रून्समरे विनिघ्न-
न्गाण्डीवधन्वा व्यधमत्सपत्नान् ।
चचार संख्ये विदिशो दिशश्च
दहन्निवाग्निर्वनमातपान्ते ।
प्रकीर्णपर्णानि यथा वसन्ते
विधूनयन्वायुरिवाल्पसारान् ।
तथा सपत्नान्विधमन्किरीटी
चचार संख्येऽतिरथो रथेन ।
शत्रूनिवेन्द्रः समरे किरीटी
व्यद्रावयत्तद्रथसिंहवृन्दम्
प्रच्छादयंश्चारुरिष्टधन्वा
रथेषुभिः शत्रुगणाननेकान् ।
कर्णं त्वथोवाच किरीटमाली
शूरः कुरूणां प्रवरोऽभिगर्जन् ।

Thereafter S reads our adhy. 55, and cont.:

अथोरतावृत्य महीं समग्रां
पार्थेषुमार्गेषु महाद्विपेन्द्राः ।
हिरण्यकक्ष्याः शरजालचित्रा
यथा नगाः पावकजालनद्धाः ।
तं शत्रुसेनाङ्गनिबर्हणानि
कर्माणि कुर्वन्तममानुषाणि ।
वैकर्तनः पूर्वममृष्यमाणः
समर्पयल्लक्ष्यमिवाशु दूरात् ।

[ Lines 1–12 are a repetition (with v. l.) of 4. 49. 15ᵃ–17ᵈ. — (L. 2) T2 G2 M4 युवानः (for शयानाः). T G2 M2.4 सुषुपुः (for सुमुखाः). — (L. 3) M1 (*sup. lin.* as above).5 °वर्मनद्धा. — (L. 6) T2 G2 द्विषतां निहंता (for व्यधमत्सप°). — (L. 7) T2 G2 प्रदिशो (for विदि°). — (L. 11) T1 G1.3 विकिरन् (for विध°). — (L. 14) T2 G2 M4.5 विद्राव्य तत्; M1–3 विद्रावयन् (for व्यद्रा°). M °वीर° (for °सिंह°). — (L. 15) T2 प्राच्छा°. — (L. 16) G2 परेषु°; M1–3 वरेषु° (for रथेषु°). ]

— (L. 41) D6 तुरगान् (for हयांश्च). S ततश्चतुर्भिस्तुरगान्विकृष्य. — (L. 42) D6 पार्थस्य विव्याध शरैस्तु कर्णः; S °ध कर्णोथ धनंजयस्य. — D3 om. lines 43–44. — (L. 43) S षड्भिश्च सूतं दशभिर्हयांश्च. — (L. 44) S षष्ट्या च पार्थं (for विव्याध तूर्णं). — After line 44, S ins.:

सविष्फुलिङ्गोज्ज्वलभीमघोषः
कोपेन्धनः केतुशिखः शरार्चिः ।
कर्णाग्निरस्त्रानिलभीमवेगो
बभौ दिधक्षन्निव पार्थकक्षम् ।
स्वनेमिशङ्खस्वनभीमघोष-
श्चलत्पताकोज्ज्वलभीमविद्युत् ।
पार्थाम्बुदः शस्त्रशराम्बुधारः
कर्णानलं संशमयांचकार ।

— (L. 45) B5 Dn D11.12 ततो (for तेन), and अभि° (for अति°). S समरे किरीटी (for समरा°). — D3 om. lines 47–51. — (L. 47) B2 D6 S प्रवरः (for ऋषभः). — (L. 48) D9 जघान कर्णं निशितैश्च जिष्णुः; S प्रतत्वरे कर्णवधाय जिष्णुः. — (L. 49) B1.3.4 D5.6.10 सशस्त्र° (for शरास्त्र°). B2.4.5 D5.6.10 अभि° (for नि°). S स माह्ममस्त्रं युधि सव्यसाची. — (L. 50) S अद्भुतवीर्य(T G2 °घोर-; G3 °भीम)कर्मा. — (L. 51) B2 Dn2 D5.9 प्रच्छाद°; S संताप°. M

45

B Dn D5.6.11.12 (all probably by conflation) ins. after 4. 50. $2^{ab}$: S ins. after passage No. 46 of this App.:

ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
दिव्यमस्त्रं प्रकुर्वाणः प्रत्ययाद्रथसत्तमान् ।
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
तथा गाण्डीवनिर्मुक्ताश्छादयन्ति शरा दिशः ।
न रथानां न चाश्वानां न ध्वजानां न वर्मणाम् ।
अतिविद्धैः शितैर्बाणैरासीद्व्यङ्गुलमन्तरम् ।

B2.5 Dn2 D6.11.12 (all om. lines 9–15) S cont.:

दैवयोगाद्धि पार्थस्य हयानामुत्तरस्य च ।
शिक्षाबलोपपन्नत्वादस्त्राणां च परिक्रमात् ।
ध्वजगाण्डीवयोश्चापि दैवी मायाकृतेति च ।
इतस्ततश्च संयाने दूरे वाप्यथ वान्तिके ।
दुर्गे विषमजाते वा स्थले निम्ने तथा क्षितौ ।
न च रुध्येद्गतिस्तस्य रथस्य मनसो यथा ।
समरेषु तु विद्वांसस्तस्य तांस्तान्पराक्रमान् ।
वीर्यमत्यद्भुतं दृष्ट्वा तथा पार्थस्य तद्बलम् ।
त्रेसुरेव परे भीताः पराङ्मुखरथा अपि ।
कालाग्निमिव बीभत्सुं निर्दहन्तमिव प्रजाः ।
नारयः प्रेक्षितुं शेकुर्ज्वलन्तमिव पावकम् ।
तानि भिन्नान्यनीकानि रेजुरर्जुनमार्गणैः ।
तिग्मांशोश्च वनाग्राणि व्याप्तानीव गभस्तिभिः ।
अशोकानां वनानीव संचितैः कुसुमैः शुभैः ।
पार्थः संरञ्जयामास रुधिरेणाकुलं बलम् ।

Dn2 D11.12 (all om. lines 26–27, 32–33, 39, 41, 44–49, 74–75, 79–81, 85, 89, 95–99) S cont.:

सहस्रशोऽर्जुनशरैश्छिन्नान्युच्चावचानि च ।
छत्राणि च पताकाश्च खेऽभ्युवाह सदागतिः ।
ये ह्यर्जुनबलत्रस्ताः परिपेतुर्दिशो दश ।
रथाङ्गदेशमुत्सृज्य पार्थच्छिन्नयुगा हयाः ।
निकृत्तपूर्वचरणास्ते निपेतुः शितैः शरैः ।
शिरोभिः प्रथमं जग्मुर्मेदिनीं जघनैर्हयाः ।
चक्षुर्नखविषाणेषु दन्तवेष्टेषु च द्विपान् ।
मर्मस्वन्येषु चाहत्य तथा निघ्नन्गजोत्तमान् ।
कौरवाणां गजानां तु शरीरैर्गतचेतसाम् ।
क्षणेन संवृता भूमिर्मेघैरिव नभस्तलम् ।

(except M3) शरौघैर् (for पृषत्कैर्). — (L. 52) S °माली (for °जालैः).

45

Before line 1 (that is, after 4. 50. $2^{ab}$), B Dn D5.6.11.12 ins.:

अधारयत वेगं स वेलेव तु महोदधेः

— M2 om. lines 2–4. — (L. 2) B2.5 S (except T2 G2; M2 om.; M4 *sup. lin.*) विकु° (for प्रकु°). B2.3 Dn D5.6.11.12 Cc.s प्रत्यायाद्. B Dn D5.6.11.12 °सत्तमः. — (L. 4) B Dn D5.6.11.12 T G2 निर्मुक्तैः (for निर्मुक्ताः). B1.2.4 Dn D5.11.12 शरैः पार्थो; B3 D6 अच्छादयत् (for छादयन्ति). B Dn D5.6.11.12 G1.3 M1 दिशो (for शरा). B Dn D5.6.11.12 दश (for दिशः). T G2 शरैः प्रच्छादयद्दिशः. — (L. 5) B (except B1) Dn D5.11.12 गजानां (for ध्वजानां). — (L. 6) B D6 Cn.s अनिविद्धं (B3 अनिर्भिन्नं); Dn1 D5 अनिर्विद्धं; Dn2 D11.12 अतिविद्धं; T G2 अनाविद्धं; G1.3 अविद्धं तु. G1 शरैर् (for शितैर्). T1 G1.3 M1–3 नासीद् (for आसीद्). T1 G1 ह्यंगुलिम्; M1 व्यंतरम्; M2–4 विवरम् (for ह्यङ्गुलम्). M1 अगुलम् (for अन्त°). — (L. 7) B2.5 D6 °योगाच्च; Dn2 D11.12 दिव्ययोगाच्च; G1 दैवयोगेन. — (L. 8) B2 नित्तसिल्पोप°; B5 शिक्षाकल्पोप°; Dn2 D6.11.12 Cn शिक्षाशिल्पोप°. — After line 8, B Dn D5.6.11.12 ins.:

वीर्यतत्त्वं द्रुतं चाग्र्यं दृष्ट्वा जिष्णोरपूजयन् ।

❀ Cr: व्यूढस्यापततः शरैः इत्यनन्तरम् अधारयत वेगं स इत्यादि दृष्ट्वा तस्याथ विक्रमम् इत्यन्तं श्लोकचतुष्टयं दी अ स संमतम् । ❀ — (L. 9) B2.5 Dn2 D6.11.12 om. lines 9–15. T G2 दैव्या शक्त्या च (T2 स) मायया. — (L. 12) M3 न निरुध्येद्; M4 न रुध्येत; M5 न च रुद्धा. — (L. 14) M1–3 पार्थस्यापि च तद्बलम्. — (L. 15) G1 त्रेसुश्चैव; M1.2 वितत्रसु°. G1 M3.4 अपरे (for परे). G1.3 कुरवश्च पराङ्मुखाः (for the posterior half). — (L. 19) B2.5 Dn2 D6.11.12 Cn.s शैलं प्रति बला(B2.5 D6 नवा)भ्राणि; G1.3 °शोरिव गात्राणि. B2.5 Dn2 D6.11.12 व्याप्तानीवार्करश्मिभि. (B2.5 °रश्मयः). — (L. 20) B2 कुंदानि; B5 D6 फुल्लानि; Dn2 D11.12 छन्नानि; G1 संहृतैः; G3 भ्रंसितैः (for संचितैः). Dn2 D11.12 बहुशः (for कुसुमैः). — (L. 21) B2.5 Dn2 D6.11.12 रेजुः पार्थशरैस्तत्र तदा सैन्यानि भारत. — For omissions of Dn2 D11.12 see above. — (L. 22) Dn2 D11.12 (cf. Cn.s) स्रजोर्जुनशरैः शीर्णे शुष्यत्पुष्पं हिरण्मयं. — (L. 23) Dn2 D11.12 Cn.s दधार (for ऽभ्युवाह). — (L. 24) Dn2 D11.12 स्वबलत्रासनात्रस्ताः. — (L. 25) Dn2 D11.12 Cn.s °देशानादाय (for °मुत्सृज्य). — (L. 27) G3 परं; M1–3 परे; M5 पुनः (for हयाः). — (L. 28) Dn2 D11.12 कर्णकक्षविषाणेषु अंतरोष्ठेषु चैव ह. — (L. 29) Dn2 D11.12 मर्मस्वंगेषु. Dn2 D11.12 पातयत्समरे गजान्; M5 तदा जघ्नुर्गजो°. — (L. 30) Dn2 D11.12 कौरवाग्र्यगजानां. T2 G च (for तु). — (L. 31) T1 G M1.2 नभःस्थलम्. — After line 31, T G2 ins.:

संछिन्नपरपादांश्च गजानेवं व्यनाशयत् ।

अस्त्रैर्दिव्यैर्महाबाहुरर्जुनः प्रदहन्निव ।
वडवामुखसंभूतः कालाग्निरिव सर्वतः ।
यथा युगान्तसमये सर्वं स्थावरजङ्गमम् ।
कालपक्वमशेषेण धक्ष्येदुग्रशिखः शिखी ।
तद्वत्पार्थोऽस्त्रतेजोभिर्धनुषो निस्वनेन च ।
दैवाद्वीर्याच्च बीभत्सुस्तस्मिन्दौर्योधने बले ।
रणशक्तिममित्राणां प्रायेणापनिनाय सः ।
चेष्टां प्रायेण भूतानां रात्रिः प्राणभृतामिव ।
सोऽतीयात्सहसा शत्रून्सहसा चाभिपेदिवान् ।
शीघ्रं दूरं दृढामोघमस्त्रमस्यातिमानुषम् ।
खगयानाभिसंवीतैः खंविष्टैः खगमैरिव ।
अर्जुनेन खमावव्रे लोहितप्राणपैः खगैः ।
अर्जुनास्त्रविनिर्मुक्ताः शरा गाण्डीवधन्वनः ।
तार्क्ष्यवेगा इवाकाशे न ससर्जुः परात्मसु ।
वर्माणि सारथींश्चैव हैमजालानि वाजिनाम् ।
किरीटं सूर्यसंकाशं वैयाघ्रमथ चर्म च ।
तस्य सर्वाणि गात्राणि रथस्य द्विषतां शरैः ।
नीहारेणेव भूतानि छन्नानीव चकाशिरे ।
सकृदेव न तं शेकू रथमभ्यसितुं परे ।
अनभ्यस्तः पुनस्तैर्हि रथः सोऽतिपपात तान् ।
तच्छरा द्विद्शरीरेषु यथैव न ससञ्जिरे ।
द्विडनीकेषु बीभत्सोर्न ससञ्ज रथस्तथा ।
स तद्विक्षोभयामास विगाह्यारिबलं रथी ।
अनन्तवेगो भुजगः क्रीडन्निव महार्णवे ।
अस्यतो नित्यमत्यर्थं सर्वघोषातिगस्तथा ।
सततं श्रूयते भूतैर्धनुषश्च किरीटिनः ।
संछिन्नास्तत्र मातङ्गा बाणैरल्पान्तरान्तरे ।
संस्यूतास्तत्र दृश्यन्ते मेघा इव गभस्तिभिः ।
दिशोऽनुभ्रमतः सर्वाः सव्यं दक्षिणमस्यतः ।
सततं दृश्यते युद्धे सायकासनमण्डलम् ।
पतन्त्यरूपेषु यथा चक्षूंषि न कदाचन ।
नालक्ष्येषु शराः पेतुस्तथा गाण्डीवधन्वनः ।
मार्गो गजसहस्रस्य युगपन्मर्दतो वनम् ।
कौन्तेयरथमार्गस्तु रणे घोरतरोऽभवत् ।
नूनं पार्थजयैषित्वाच्छक्रः सर्वामरैः सह ।
हन्त्यस्मानिति मन्यन्ते पार्थेनैवार्दिताः परे ।

क्षुरप्रैर्निशितैरन्यान्मेघपर्वतसंनिभान् ।
एकदन्ताक्षिचरणान्गजान्पार्थो व्यदारयत् ।
ऊर्ध्वमुद्धृतशुण्डाग्रान्विपुलास्यान्सभूरुहान् ।
वक्त्रमारभ्य जघनमुपर्यर्धं व्यदारयत् ।

— (L. 34) Dn2 D11.12 read यथा after सर्वं. — (L. 35) Dn2 D11.12 Cn.s कालक्षयम्. Dn2 D11.12 दहत्यग्र°; G1.3 धक्ष्यत्युग्र°. Cn.s cite अग्रशिखः. — (L. 36) Dn2 D11.12 तद्वत्पार्थो महाराज ददाह समरे रिपून्. — After line 36, Dn2 D11.12 ins.:

ततः सर्वास्त्रतेजोभिर्धनुषो निस्वनेन च ।
शब्देनामानुषाणां च भूतानां ध्वजवासिनाम् ।
भैरवं शब्दमत्यर्थं वानरस्य च कुर्वतः ।

— (L. 37) Dn2 D11.12 (cf. Cn.s) दैवारिपाच्च. — After line 37, Dn2 D11.12 ins.:

भयमुत्पादयामास बलवानरिमर्दनः ।

— (L. 38) T2 रणे; G1 रथं (for रण-). Dn2 D11.12 (cf. Cn.s) रथशक्तिममित्राणां प्रागेव निपतद्भुवि. Cnp शक्तिः. — (L. 40) Dn2 D11.12 Cn.s सोपयात्; T1 G1.2 सोत्ययात्. Dn2 D11.12 Cn.s पश्चात् (for शत्रून्). Dn2 D11.12 Cn.s साहसात्, T2 G2 बहुधा (for सहसा). Dn2 D11.12 T2 चाभ्युपेयिवान्; G1 तेभिपेदिरे; G3 अभिप्रपेदिवान्; M3 चाभिपेदिरे. Cn.s cite उपेयिवान्. — (L. 41) M2.3.5 °स्त्रमसन्नमा°. — After line 41, T G2 ins.:

दृष्ट्वा ते कौरवा भीता अतिमानुषविक्रमम् ।

— (L. 42) Dn2 D11.12 शरव्रातैः सुतीक्ष्णाग्रैः समादिष्टैः खगैरिव. — (L. 43) Dn2 D11.12 अर्जुनस्तु (for अर्जुनेन). Dn2 D11.12 लोहितप्राशनैः. — After line 43, Dn2 D11.12 (cf. Cn.s) ins.:

अत्र मध्ये यथार्कस्य रश्मयस्तिग्मतेजसः ।
दिशासु च तथा राजन्नसंख्याताः शरास्तदा ।

— (L. 44) T G °मुक्तः and शरो. T G2 °निःसृतः; G1 °संयुतः; G3 °संहृतः; M1 °संयुताः (for °धन्वनः). — (L. 45) T1 G1 समर्जे; T2 G2 ससज्ज; M4 ससज्जुः. — (L. 47) T2 G2 M वैयाघ्रस्य (M1.2 °घ्र तु; M3 °घ्रं च; M4.5 °घ्रक-) रथस्य च. — (L. 49) T G छन्नानि प्र(G1 च; G3 न)चकाशिरे. — (L. 50) Dn2 D11.12 Cn.s सकृदेवानतं शेकुः; T1 °व न संशेकुः; G1.3 °व तु संशेकुः; M3 °वकृत शे°; M4.5 °व तु तं शे°. T1 अभ्यर्दितुं; G1.2 अभ्यासितुं; Cn.s as in text. — (L. 51) Dn2 D11.12 (cf. Cn.s) अलभ्यः पुनरश्वैस्तु. Dn2 D11.12 (cf. Cn.s) रथात्सोतिप्रपादयेत्; G1 रथः सोतीव वायुवत्. — (L. 52) Dn2 D11.12 ते शरा. T2 G2 M4.5 Cn.s ससज्जिरे. — (L. 54) Dn2 D11.12 ह्यरातिबलमंजसा (for the posterior half). — (L. 55) Dn2 D11.12 G3 Cn.s अनंतभोगो. — (L. 56) Dn2 D11.12 Cn.s सर्वमेवा° (for सर्वघोषा°). — (L. 57) Dn2 D11.12 अश्रुतः; T1 G1.3 संनादः (for सततं). M शब्दो (for भूतैर्). Dn2 D11.12 T2 धनुर्घोषः (for धनुषश्च). — (L. 58) Dn2 D11.12 संततास्; G1.2 संछन्नास्. — (L. 59) Dn2 D11.12 संवृतास्तेन (for संस्यूतास्तत्र). — (L. 60) Some MSS. सव्य- (for सव्यं). — (L. 64) Dn2 D11.12 गच्छतो वने; T2 नर्दतो वनं. — (L. 65) Dn2 D11.12 यथा भवेत्तथा जज्ञे रथमार्गः किरीटिनः. — (L. 67) Dn2 D11.12 °स्मानित्यमन्यंत पार्थेन निहताः परे.

ग्रन्तमत्यर्थमहितान्सव्यसाचिं तु मेनिरे ।
कालमर्जुनरूपेण ग्रसन्तमिव च प्रजाः ।
कुरुसेनाशरीराणि पार्थेनानाहतान्यपि ।
पेतुः पार्थहतानीव पार्थकर्मानुदर्शनात् ।
ओषधीनां शिरांसीव कालपक्तिसमन्वयात् ।
अवनेमुः कुरूणां हि वीर्याण्यर्जुनजाद्भयात् ।
बाह्वोरथास्फोटयतोः प्रध्माते शङ्खमर्जुने ।
चकार चार्जुनः क्रोधाद्विमुखान्नृषितानपि ।
अर्जुनेन विभिन्नानि बलाग्राणि पुनः क्वचित् ।
चक्रुर्लोहितधाराभिर्धरणीं लोहितोत्तराम् ।
लोहितेनापि संपृक्तैः पांसुभिः पवनोद्धतैः ।
तेनैव च समुद्धूतैः सूक्ष्मैर्लोहितबिन्दुभिः ।
लोहितार्द्रैः प्रहरणैर्निमग्ना लोहितोक्षिताः ।
लोहितेषु निमग्नास्ते निहताश्च किरीटिना ।
बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः ।
सार्कं तत्तत्क्षणेनासीत्संध्याभ्रमिव लोहितम् ।
अप्यस्तं प्राप्य चादित्यो निवर्तेत न पाण्डवः ।
निवर्तेत न जित्वारीनित्यजल्पन्विचक्षणाः ।
तान्सर्वान्समरे शूरान्पौरुषे पर्यवस्थितान् ।
दिव्यैरस्त्रैरमेयात्मा सर्वानार्च्छद्धनुर्धरान् ।
स तु द्रोणं त्रिसप्तत्या क्षुद्रकाणां समर्पयत् ।
अशीत्या शकुनिं चैव द्रौणिमप्याशु सप्तभिः ।
दुःषहं दशभिर्बाणैरर्जुनः समविध्यत ।
दुःशासनं द्वादशभिः कृपं शारद्वतं त्रिभिः ।
भीष्मं शांतनवं षष्ट्या प्रत्यविध्यत्स्तनान्तरे ।
स कर्णं कर्णिनाविध्यत्पीतेन निशितेन च ।
वासविर्द्विषतां मध्ये विव्याध परमेषु च ।
स कर्णं सतनुत्राणं निर्भिद्य निशितैः शरैः ।
अगच्छद्धारयन्भूमिं चोदितो दृढधन्वना ।
ततोऽस्य वाहान्व्यहनच्चतुर्भिश्च क्षुरेण तु ।
सारथेश्च शिरः कायादपाहरदरिंदमः ।
अर्धचन्द्रेण चिच्छेद चापं तस्य करे स्थितम् ।
तस्मिन्विद्धे महाभागे कर्णे सर्वास्त्रपारगे ।
हताश्वसूते विरथे ततोऽनीकमभज्यत ।

Colophon (in S only).

वैशंपायनः ।
तत्प्रभग्नं बलं सर्वं विपुलौघबलं तथा ।

S cont.:

भीष्ममासाद्य संतस्थौ वेलामिव महोदधिः ।
तानि सर्वाणि गाङ्गेयः समाश्वास्य परंतपः ।
ततो व्यूहं महाबाहुः समरेष्वपराजितः ।
रथनागाश्वकलिलं युयुधे युद्धकोविदः ।
अभेद्यं परसैन्यानां शूरैरथ समीक्षितम् ।
आचार्यदुर्योधनसूतपुत्रैः
कृपेण भीष्मेण च पालितानि ।
अवध्यकल्पानि दुरासदानि
नराश्वमातङ्गसमाकुलानि ।

Then S reads 4. 49. 3–20, followed by a passage given in App. I (No. 44). In the course of the latter passage, namely, No. 44, S reads our adhy. 55.

— (L. 68) $M_{1-3}$ अत्यंतम् (for अत्यर्थम्). $G_{1.3}$ ग्रंतमत्यर्थभीतास्ते; $M_4$ ग्रंतमित्यहिताः सर्वे. $Dn_2$ $D_{11.12}$ (cf. $Cn_3$) विजयं तत्र मे°; $G_{1.3}$ मेनिरे सव्यसाचिनं. — (L. 69) $Dn_2$ $D_{11.12}$ संहरंतमिव प्रजाः. — (L. 70) $Dn_2$ $D_{11.12}$ (cf. $Cn_3$) पार्थेनैवाहतान्यपि. — (L. 71) $Dn_2$ $D_{11.12}$ $M_{2.4}$ $Cn_3$ सेदुः; $M_3$ नेदुः (for पेतुः). $Dn_2$ $D_{11.12}$ °नुशासनात्. — (L. 72) $Dn_2$ $D_{11.12}$ द्विषच्छीर्षाणि सोन्वयात्; $T_2$ $G_{2.3}$ कालपंक्ति°; $G_1$ काले पक्व°; $M_{1.2}$ काले पक्ति°. — (L. 73) $Dn_2$ $D_{11.12}$ Cn अवनेशुः; $M_3$ अन्वनेमुः. $Dn_2$ $D_{11.12}$ $T_2$ $G_2$ वीर्याण्यर्जु°; $G_{1.3}$ $M_5$ शिरांस्यर्जु°. — (L. 76) $Dn_2$ $D_{11.12}$ अर्जुनानिलभिन्नानि वनान्यर्जुनविद्विषां. — (L. 77) $Dn_2$ $D_{11.12}$ लोहितांतरां; $M_1$ °तोदकां; $M_2$ °तोत्तरः; $M_5$ °तोक्षितां. — (L. 78) $Dn_2$ $D_{11.12}$ °तेन समायुक्तैः पां° पवनोद्धुतैः. — (L. 83) $Dn_2$ $D_{11.12}$ $T_1$ सार्क खं; $T_2$ $G_2$ आकाशं. $G_{1.3}$ तत्र (for तत्तत्). $Dn_2$ $D_{11.12}$ संध्यायाम् (for °भ्रम्). — (L. 84) $Dn_2$ $D_{11.12}$ सूर्योपि (for चादित्यो). — (L. 85) $T_1$ $G_2$ °र्तेताविजित्यारीन्; $M_{1.2}$ °र्तेते त्वजित्वारीन्. — (L. 86) $T_2$ $G_2$ $M_5$ स (for तान्). $Dn_2$ $D_{11.12}$ $G_3$ शूरः; $Dn_2$ $D_{11.12}$ सम° (for पर्य°). — (L. 87) $Dn_2$ $D_{11.12}$ अचिंत्यात्मा (for अमेया°). — (L. 88) $Dn_2$ $D_{11.12}$ $T_2$ क्षुरप्राणां; $G_{1.3}$ नाराचानां. $Dn_2$ $D_{11.12}$ समार्पयत्. — (L. 90) $Dn_2$ $D_{11.12}$ दुःसहं, and द्रौणिमष्टाभिरेव च (for the posterior half). — (L. 92) $Dn_2$ $D_{11.12}$ राजानं च शतेन ह (for the posterior half). — (L. 93) $Dn_2$ $D_{11.12}$ कर्णं च कर्णिना कर्णे; and om. the posterior half of this line and the prior half of the next line. M तनुत्राणं शितैः शरैः (for the posterior half). — (L. 94) Om. in M. The prior half is om. in $Dn_2$ $D_{11.12}$. $Dn_2$ $D_{11.12}$ परवीरहा (for परमेषु च). — $Dn_2$ $D_{11.12}$ M om. lines 95 and 97. — (L. 100) $Dn_2$ $D_{11.12}$ $M_{2.5}$ महेष्वासे; $G_{1.3}$ महाबाहौ. $Dn_2$ $D_{11.12}$ °कोविदे (for °पारगे). — Colophon. *Adhy. no.:* S 56 ($M_{2.3}$ 55). — (L. 102) $Dn_2$ $D_{11.12}$ तत्प्रभग्नं बलं दृष्ट्वा. T $G_2$ °निभं; $G_{1.3}$ °स्वनं (for °बलं). T $G_2$ महत् (for तथा). $Dn_2$ $D_{11.12}$ पार्थमाजिस्थितं पुनः. — (L. 106) $T_2$ $G_2$ $M_{4.5}$ युयुजे. — (L. 107) $M_{1.2.5}$ शूरैरभिस°. — (L. 111) T $G_2$

46

After its version of 4. 50. 4–23, S ins.:

वैशंपायनः ।
अश्वत्थामा ततः कर्णं तत्र संप्रेक्ष्य वीर्यवान् ।
उवाच स्मयमानो व सूतपुत्रमारदमम् ।
कर्ण यत्तत्सभामध्ये बह्ववद्धं विकत्थसे ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् ।
एषोऽन्तक इव क्रुद्धः सर्वभूतावमर्दनः ।
संग्रामशिरसो मध्ये जृम्भते केसरी यथा ।
शूरोऽसि यदि संग्रामे दर्शयस्व सभां विना ।
यद्यशक्तोसि वीरेण पार्थेनाद्भुतकर्मणा ।
पुनरेव सभां गत्वा धार्तराष्ट्रेण धीमता ।
मातुलं प्रतिगृह्याशु मन्त्रयस्व यथासुखम् ।
एवमुक्तस्तदा कर्णः क्रोधादुद्वृत्य लोचने ।
द्रोणपुत्रमिदं वाक्यमुवाच कुरुसंनिधौ ।
नाहं बिभेमि बीभत्सोर्न कृष्णाद्देवकीसुतात् ।
पाण्डवेभ्योऽपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः ।
सत्त्वाधिकानां पुंसां हि धनुर्वेदोपजीविनाम् ।
गर्जतां जायते दर्पः स्वरश्च न विषीदति ।
पश्यत्वाचार्यपुत्रो मामर्जुनेन चिरं सह ।
युध्यमानं सुसंयत्तं जयो वै मय्यवस्थितः ।
ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथसत्तमान् ।
महामना मन्दबुद्धिर्निःश्वसन्धृतराष्ट्रजः ।
उवाच स महाराज राजा दुर्योधनस्तदा ।
न विद्म ह्यर्जुनं तत्र वसन्तं मात्स्यवेश्मनि ।
तेनेदं कर्ण मात्स्यानामग्रहीष्म धनं बहु ।
एतच्चेत्तर्हि गच्छामो विसृजन्तो धनं बहु ।
अयशो नातिवर्तेत लोकयोरुभयोरपि ।
न च युद्धात्परं नास्ति क्षत्रियाणां सुखावहम् ।
तस्मात्पार्थेन संग्रामं कुर्महे न पलायनम् ।
एतावदुक्त्वा राजा वै अभियानमियेष सः ।
तानि पञ्च सहस्राणि वीराणां हि धनुष्मताम् ।
अभ्यद्रवंस्तदा पार्थं शलभा इव पावकम् ।
वर्मिता वाजिनस्तत्र संभृताश्च पदातिभिः ।
भीमरूपाश्च मातङ्गास्तोमराङ्कुशपाणिभिः ।
अधिष्ठिताः सुसंयत्तैर्हस्तिशिक्षाविशारदैः ।
अभ्यद्रवन्त संक्रुद्धाश्चापहस्तोद्यतायुधैः ।
पञ्च चैनं रथोदग्रास्त्वरिताः पर्यवारयन् ।
द्रोणो भीष्मश्च कर्णश्च कुरुराजश्च वीर्यवान् ।
अश्वत्थामा महाबाहुर्धनुर्वेदपरायणः ।
इषून्वै सम्यगस्यन्तो जीमूता इव वार्षिकाः ।
ते लाभमिव मन्वानाः प्रत्यगृह्णन्धनंजयम् ।
शरौघानभिवर्षन्तो नादयन्तो दिशो दश ।

☞ Then follows passage No. 45 of this Appendix.

47

After वैशं° उ° of 4. 52. 1, N (Ś1 missing; D1 missing for lines 1–8) ins.:

दृष्ट्वा व्यूढान्यनीकानि कुरूणां कुरुनन्दनः ।
तत्र वैराटिमाभाष्य पाण्डवोऽथाब्रवीदिदम् ।
जाम्बूनदमयी वेदी ध्वजे यस्य प्रकाशते ।
तस्य दक्षिणतो याहि कृपः शारद्वतो यतः ।
धनंजयवचः श्रुत्वा वैराटिस्त्वरितस्तदा ।
हयाब्जतसंकाशान्हेमभाण्डानचोदयत् ।
आनुपूर्व्यां तु दन्शूर आस्थाय जवमुत्तमम् ।
प्राहिणोच्चन्द्रसंकाशान्कुपितानिव तान्हयान् ।

M1.4 रथाश्व° (for नराश्व°).

46

(L. 3) T2 G3 त्वं (for तत्). — (L. 10) T2 G2 M4.5 परि° (for प्रति°). — (L. 11) G1 M1.4 उद्वृत्तलोचनः; G3 उद्वृत्य चक्षुषी; M2.5 उद्धृत्य लोचने. — (L. 16) G1 M गर्जनाज् (for गर्जतां). — (L. 17) G1 M1.3.4 पर; M5 रणे (for चिर). G2 °नेनातिरंहसा; M2 °नेनावर सह. T2 G2 रथिसत्तमः; G1 रथिनां वरं; G3 रथसत्तमः; M2.3 रथसत्तम. — (L. 24) T2 M4.5 मत्स्याना. — (L. 25) G3 एतस्यैव हि; M3 तच्चेदात्तं हि; M4 इतः पर चेद्; M5 एवं चेत्तर्हि. — (L. 29) T2 °यातुम् (for °यानम्). — (L. 31) T G1.2 अनलं शलभा इव (for the posterior half). — (L. 32) G1 संभ्रांताश्च; G3 M1.3 संवृताश्च; M2.4.5 संभृताश्च. — (L. 36) T G2 त्वरितं; G3 परितः. — After line 38, G3 ins.:

कृपप्रभृतयश्चान्ये शकुनिर्धृतराष्ट्रजाः ।

— (L. 39) T इषूंस्ते; G इषुभिः; M4 इषूंश्च (*sup. lin.* इषवः).

47

(L. 1) Dn2 D3.5.7.9.11.12 कुरुनंदन; D6 पांडु°. — (L. 2) B1–3 Dn D5.11.12 आमंत्र्य (for आभाष्य). B1 Dn D11.12 पार्थो वचनमब्रवीत्; D6 पांडवो वाक्यमब्रवीत्. — (L. 3) Dn D11.12 प्रदृश्यते; D6 प्रभासते (for प्रका°). B5 D3 ध्वजाग्रे यस्य दृश्यते. — (L. 5) B4.5 Dn D7.11.12 ततः (for तदा). — (L. 6) B2.4.5 D5.6 हेमदंडेन चोदयत्; D4.5m.7.9 हेमभांड(D4 °कुंभ-; D5m °भार)परिच्छदान् (for the posterior half). Ca.c.v cite हेमभाण्डान्, Cs भाण्डं. — (L. 7) B Dn D6.11.12 Cr आनुपूर्व्यात्तु तत्सर्वं. B2 D3.5(m as in text) रथम् (for जवम्). B1.3 Dn2 D6.11.12 जवमास्थाय चोत्तमं. — (L. 16) B1 Dn D2.4.8

स गत्वा कुरुसेनायाः समीपं हयकोविदः।
पुनरावर्तयामास तान्हयान्वातरंहसः।
प्रदक्षिणमुपावृत्य मण्डलं सव्यमेव च।
कुरून्संमोहयामास मत्स्यो यानेन तत्त्ववित्।
कृपस्य रथमास्थाय वैराटिरकुतोभयः।
प्रदक्षिणमुपावृत्य तस्थौ तस्याग्रतो बली।
ततोऽर्जुनः शङ्खवरं देवदत्तं महारवम्।
प्रदध्मौ रथमास्थाय नाम विश्राव्य चात्मनः।
तस्य शब्दो महानासीद्धम्यमानस्य जिष्णुना।
तथा वीर्यवता संख्ये पर्वतस्येव दीर्यतः।
पूजयांचक्रिरे शङ्खं कुरवस्ते ससैनिकाः।
अर्जुनेन तथा ध्मातः शतधा यन्न दीर्यते।
दिवमावृत्य शब्दस्तु निवृत्तः शुश्रुवे पुनः।
सृष्टो मघवता वज्रः प्रपतन्निव पर्वते।

## 48

Before the ref. of 4. 53. 1, S ins.:

वैशंपायनः।
जितं वैकर्तनं दृष्ट्वा पार्थो वैराटिमब्रवीत्।
स्थिरो भव त्वं संग्रामे जयोऽस्माकं नृपात्मज।
यावच्छङ्खमुपाध्मास्ये द्विषतां रोमहर्षणम्।
अविक्लवमसंभ्रान्तमव्यग्रहृदयेक्षणम्।
याहि शीघ्रं यतो द्रोणो ममाचार्यो महारथः।
तथा संक्रीडमानस्य अर्जुनस्य रणाजिरे।
बलं सत्त्वं च तेजश्च लाघवं चाप्यवर्धत।
तच्चाद्भुतमभिप्रेक्ष्य भयमुत्तरमाविशत्।
उत्तरः।
अस्त्राणां तव दिव्यानां शरौघान्क्षिपतश्च ते।
मनो मे मुह्यतेऽत्यर्थं तव दृष्ट्वा पराक्रमम्।
द्वैधीभूतं मनो मह्यं भयाद्भरतसत्तम।
अदृष्टपूर्वं पश्यामि तव गाण्डीवनिस्वनम्।
तव बाहुबलं चैव धनुः प्राकर्षतो बहु।
तव तेजो दुराधर्षं यथा विष्णोस्त्रिविक्रमे।
वैशंपायनः।
तमुत्तरश्चिन्नमवेक्ष्य गाण्डिवं
शरांश्च मुक्तान्सहसा किरीटिना।
भीतोऽब्रवीदर्जुनमाजिमध्ये
नाहं तवाश्वान्विषहे नियन्तुम्।
तमब्रवीदीषदिव प्रहस्य
गाण्डीवधन्वा द्विषतां निहन्ता।
मया सहायेन कुतोऽस्ति ते भयं
प्रैह्युत्तराश्वानुपमन्त्र्य वाहय।
आश्वासितस्तेन धनंजयेन
वैराटिरश्वान्प्रतुतोद शीघ्रम्।
धनंजयश्चापि निकृष्य चापं
विष्फारयामास महेन्द्रकल्पः।
उत्तरं चैव बीभत्सुरब्रवीत्पुनरर्जुनः।
न भेतव्यं मया सार्धं तात संग्राममूर्धनि।
राजपुत्रोऽसि भद्रं ते कुले महति मात्स्यके।
जातस्त्वं क्षत्रियकुले न विषीदितुमर्हसि।
धृतिं कृत्वा सुविपुलां राजपुत्र रथं मम।
युध्यमानस्य समरे शत्रुभिः सह वाहय।
उक्त्वा तमेवं बीभत्सुरर्जुनः पुनरब्रवीत्।
पाण्डवो रथिनां श्रेष्ठो भारद्वाजं समीक्ष्य तु।

## 49

After 4. 56. 2[cd], N ($Ś_1$ missing) ins.:

अथ सैन्यं महद्दृष्ट्वा रथनागहयाकुलम्।
अब्रवीदुत्तरः पार्थं प्रतिविद्धः शरैर्भृशम्।
नाहं शक्ष्यामि वीरेह नियन्तुं ते हयोत्तमान्।
विषीदन्ति मम प्राणा मनो विह्वलतीव मे।
अस्त्राणामिह दिव्यानां प्रभावात्संप्रयुज्यताम्।
त्वया च कुरुभिश्चैव भ्रमन्तीव दिशो दश।
गन्धेन मूर्छितश्चास्मि वसारुधिरमेदसाम्।
द्वैधीभूतं मनो मेऽद्य त्रासं चैव प्रपश्यतः।
अदृष्टपूर्वः शूराणां महासंख्ये समागमः।

$_{10-12}$ बलम् (for रथम्). K पांडवः (for चात्मनः). — (L. 18) B $D_{11.12}$ तथा वीर्यवतः; $D_{1.2.4.10}$ महावीर्यवता ($D_2$ °तां). Cc cites वीर्यवतः. — (L. 19) $B_1$ Dn $D_{6.11.12}$ सह; $B_4$ तेन; $D_{1-3.7-10}$ ते च (for ते स-).

### 48

(L. 7) $M_{1-3}$ चाभ्यवर्धत. — (L. 13) $T_1$ G $M_5$ मुहुः (for बहु). — (L. 22) $T_2$ $G_2$ $M_{2.5}$ प्रेह्यु°.

### 49

(L. 2) $B_1$ Dn $D_{9.11.12}$ अप° (for प्रति°). $D_{4.7.9}$ दृढं (for भृशम्). — (L. 3) $D_{2.4.8.10}$ इमान् (for इह). — (L. 5) K गतागत च दिव्यानां. K अस्त्राणां; $B_1$ $Dn_2$ $D_{9.11.12}$ प्रभावः. — (L. 6) K $B_1$ $Dn_2$ $D_{4.9-12}$ द्रवंति (for भ्रमन्ति). $B_{3-5}$ $D_{10}$ मम (for दश). — (L. 7) $B_1$ Dn $D_{4.11.12}$ चाहं; $D_1$ चासं (for चास्मि). — (L. 8) B (except $B_1$) $D_{5.6}$ मह्यं (for मेऽद्य). $B_1$ Dn $D_{11.12}$ तव; $B_{2-5}$ $D_{5-7.9}$ त्रासः. $D_{3.4.10}$ प्रपश्य मे; Cc as above. $D_{1.2}$ संत्रासं चैव पश्य मे. — (L. 9) $K_1$ $B_{2.5}$ $Dn_1$ $D_6$ °पूर्वं. K $B_1$ Dn $D_{10-12}$ मया संख्ये. K $B_1$ Cr समागम. $B_{2.4.5}$ $D_6$ महत्सैन्यसमागमं; $B_3$ Ca (cf. Cc) महत्संयत्समागमं; $B_3$m महासंशयमागतं; $D_5$ महासंपत्समागमं; $D_{8.9}$ महासंख्यस°.

गोधाघातेन महता शङ्खानां निनदेन च।
सिंहनादैश्च शूराणां गजानां बृंहितैस्तथा।
गाण्डीवशब्देन भृशमशनिप्रतिमेन च।
श्रुतिः स्मृतिश्च मे वीर प्रनष्टा मूढचेतसः।
अलातचक्रप्रतिमं मण्डलं सततं त्वया।
व्याक्षिप्यमाणं समरे गाण्डीवं च प्रपश्यतः।
दृष्टिर्विचलिता वीर हृदयं दीर्यतीव मे।
वपुश्चोग्रं तव रणे क्रुद्धस्येव पिनाकिनः।
व्यायच्छतस्तव भुजं दृष्ट्वा भीर्मे भवत्यपि।
नाददानं न संधानं न मुञ्चन्तं शरोत्तमान्।
त्वामहं संप्रपश्यामि पश्यन्नपि विचेतनः।
अवसीदन्ति मे प्राणा भूरियं चलतीव मे।
न च प्रतोदं नाभीषूनसंयन्तुं शक्तिरस्ति मे।
अर्जुन उवाच।
मा भैषीः स्तम्भयात्मानं त्वयापि नरपुंगव।
अत्यद्भुतानि कर्माणि कृतानि रणमूर्धनि।
राजपुत्रोऽसि भद्रं ते कुले मत्स्यस्य विश्रुते।
जातस्त्वं शत्रुदमने न विषीदितुमर्हसि।
धृतिं कृत्वा सुविपुलां राजपुत्र रथे मम।
युध्यमानस्य समरे हयान्संयच्छ शत्रुहन्।
वैशंपायन उवाच।
एवमुक्त्वा महाबाहुर्वैराटिं रथसत्तमः।

— (L. 10) B4 Dn D11.12 गदापातेन; D1 योधाह्वानेन; D2 गोधाघोषेण; D3.5.7 योधाघातेन; D4 योधघोषेण; Ca as above. Dn D6.11.12 निःस्वनेन च. — (L. 12) B2 D6 गांडीवस्य च घोषेण वज्रघोषसमेन च. — (L. 14) D1–4.10 च कृतं (for सततं). — (L. 15) K °प्यमानं; D7 व्याकृष्य°; D9m आकृष्य°. D1 व्याक्षिप्य समरे पार्थ. Dn1 च कर्षतः; Dn2 D11.12 प्रकर्षतः; D7.9 प्रदृश्यते. D2 गांडीवस्य च पश्यतः. — (L. 16) B1.2.4 Dn D4.9.11.12 प्रचलिता. — (L. 17) B2 D6 वपुश्चोग्रं च ते वीर. Dn2 D11.12 om. lines 18–20. — (L. 18) K शरगणं; B4 शराम्राजन्; B5 D3.4.6.8 शतभुजं; D1.2.7 शरभुजं; D5.7 (marg. *sec. m.*).9 तव भुजौ. D2 दृष्ट्वा भीतोसि फाल्गुन; D9 °ष्ट्वा भीमौ महद्धनुः; D10 भीतभीतोभवंस्त्वयि. ❀Cv: तव व्यायच्छतः शतभुजमिव दृष्ट्वा मे मम भीर्भवति। शतभुजमिव युध्यतः।❀ — (L. 19) B8 (m as above) D1.2.10 Ccp संदधानं. Cc.n.r cite संधानं (as above). — (L. 20) K भवंतं (for त्वामहं). B2.5 न चेतनः; D8 विचेतनं. — (L. 21) B1–3 Dn D1.3.5.6.11.12 च (for मे). — (L. 22) B1 Dn D1.3.11.12 रश्मींश्च (for नाभीषून्). Ca.s cite अभीषून् (as above). K2 न प्रतोदेन मे वीर; B2.4.5 D5.6 न प्रतोदं न चाभीषून्; D4 नैव प्रतोदं नो अश्वान्. K2 D1–4.8.10 नियंतुं (for संयंतुं). — (L. 25) B विश्रुतः. — (L. 26) B4 D2.4.6.9 °दमनो; Cv °दमने (as above). B1.5 Dn2 D11.12 नावसीदितुम्; Dn1 न च सीदितुम्; Cv as above. Ca विषीदितुमिच्छसि. — (L. 27) D1–4.10 transp. कृत्वा and सुविपुलां. — After line 28, K ins. a colophon (*adhy. no.*: K1 55). — (L. 29) B1.3.4 Dn D6.11.12 नरसत्तमः; D1 पार्थ°. — (L. 30) B1–3 Dn D11.12 उत्तरं वाक्यम् (for पुनरेवेदम्). — (L. 31) K अत्र (for आशु).

अर्जुनो रथिनां श्रेष्ठः पुनरेवेदमब्रवीत्।
सेनाग्रमाशु भीष्मस्य प्रापयस्वैतदेव माम्।

50

Before 4. 59. 1, which is transp. in S (in other words, after adhy. 57), S ins.:

वैशंपायनः।
एवं विद्राव्य तत्सैन्यं पार्थो भीष्ममुपाद्रवत्।
त्रस्तेषु सर्वसैन्येषु कौरव्यस्य महात्मनः।
नरसिंहमुपायान्तं जिगीषन्तं परात्रणे।
वृषसेनोऽभ्ययात्तूर्णं योद्धुकामो धनंजयम्।
तस्य पार्थस्तदा क्षिप्रं क्षुरधारेण कार्मुकम्।
न्यकृन्तद्गृध्रपत्रेण जाम्बूनदपरिष्कृतम्।
अथैनं पञ्चभिर्भूयः प्रत्यविध्यत्स्तनान्तरे।
स पार्थबाणाभिहतो रथात्प्रस्कन्द्य प्राद्रवत्।
दुःशासनो विकर्णश्च शकुनिश्च विविंशतिः।
आयान्तं भीमधन्वानं पर्यकीर्यन्त पाण्डवम्।
तेषां पार्थो रणे क्रुद्धः शरैः संनतपर्वभिः।
युगं ध्वजमथैषां च चिच्छेद तरसा रणे।
ते निकृत्तध्वजाः सर्वे छिन्नकार्मुकवेष्टनाः।
रणमध्यादपययुः पार्थबाणाभिपीडिताः।
ततः प्रहस्य बीभत्सुर्वैराटिमिदमब्रवीत्।

50

After line 2, T G2 ins.:

बाणान्धनुषि संधाय चतुरः पाकशासनिः।
भीष्मं च प्राहिणोद्धीतस्तं द्वाभ्यामभ्यवादयत्।
तस्य कर्णान्तिकं गत्वा द्वावन्नृतां च कौशलम्।
सोऽप्याशीरवदद्भीष्मः कौन्तेयो जयतामिति।

— After line 4, T G2 ins.:

वैकर्तनात्मजो वीरः संग्रामे लोकविश्रुतः।
शौर्यवीर्यादिभिः कर्णाद्बिम्बाद्बिम्ब इवोदितः।
आत्मना युध्यतस्तस्य वृषसेनस्य पाण्डवः।
मुहूर्तं तस्य तद्दृष्ट्वा हस्तलाघवपौरुषे।
तुतोष च ततः पार्थो वृषसेनपराक्रमम्।

— (L. 7) G1.3 बाणैः (for भूयः). — (L. 12) T1 युगान्ध्वजान्रथाक्षांश्च; T2 G1.3 धनुर् (T2 युगं) ध्वजमथाक्षं च; G2 युगान्ध्वजमथोक्षांश्च; M2.5 युगं ध्वजरथाक्षं (M5 °रथेषां) च. T

एतं मे प्रापयेदानीं तालं सौवर्णमुच्छ्रितम् ।
मेघमध्ये यथा विद्युदुच्चरन्ती पुनः पुनः ।
असौ शांतनवो भीष्मस्तत्र याहि परंतप ।
अस्त्राणि तस्य दिव्यानि दर्शयिष्यामि संयुगे ।
घोररूपाणि चित्राणि लघूनि च गुरूणि च ।
तस्य तद्वचनं श्रुत्वा वैराटिः पार्थसारथिः ।
वाहयच्चोदितस्तेन रथं भीष्मरथं प्रति ।
अथ तं चोदितं दृष्ट्वा फल्गुनस्य रथोत्तमम् ।
वायुनेव महामेघं सहसाभिसमीरितम् ।
तं प्रत्ययाच्च गाङ्गेयो रथेनादित्यवर्चसा ।
आयान्तमर्जुनं दृष्ट्वा भीष्मः परपुरंजयः ।
प्रत्युजगाम युद्धार्थी महर्षभ इवर्षभम् ।

## 51

After 4. 59. 5, S ins.:

अन्तरिक्षे प्रजल्पन्ति सर्वे देवाः सवासवाः ।
यदर्जुनः कुरून्सर्वान्प्राक्रान्तच्छस्त्रतेजसा ।
कुरुश्रेष्ठाविमौ वीरौ रणे भीष्मधनंजयौ ।
सर्वास्त्रकुशलौ लोके एतावतिरथावुभौ ।
उभौ देवमनुष्येषु विश्रुतौ स्वपराक्रमैः ।
उभौ परमसंरब्धावुभौ दीप्तधनुर्धरौ ।
समागता नरव्याघ्रौ व्याघ्राविव तरस्विनौ ।
उभौ सदृशकर्माणौ सूर्यस्याग्नेश्च भारत ।
वासुदेवस्य सदृशौ कार्तवीर्यसमावुभौ ।
उभौ विश्रुतकर्माणावुभौ शूरौ महाबलौ ।
सर्वास्त्रविदुषां श्रेष्ठौ सर्वशस्त्रभृतां वरौ ।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ।
अनयोः सदृशं वीर्यं मित्रस्य वरुणस्य च ।
को वा कुन्तीसुतं युद्धे द्वैरथेनोपयास्यति ।
ऋते शांतनवादन्यः क्षत्रियो भुवि विद्यते ।
इति संपूजयामासुर्भीष्मं दृष्ट्वार्जुनं गतम् ।
रणे संप्रहरिष्यन्तं दृष्ट्वा देवाः सवासवाः ।

विविधरवैः सह सिंहनादमिश्रैः ।
कुरुवृषभमपूजयत्कुरूणां
बलममराधिपसैन्यसप्रभं तत् ।

Colophon.

(*Adhy. no.*: T G M1.5 61; M2-4 60.)

## 52

After adhy. 59, S ins. the foll. addl. adhy.:

वैशंपायनः ।
गास्ता विजित्य संग्रामे कुरूणां मिषतां वने ।
ततो योद्धुमनाः पार्थः प्रायात्पञ्च रथान्प्रति ।
आददानश्च नाराचान्व्यामृशंश्चेषुधी अपि ।
संस्पृशानश्च गाण्डीवं भूयः कर्णं समभ्ययात् ।
अश्वत्थामा ।
कर्ण यत्तत्सभामध्ये बह्वबद्धं प्रभाषसे ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् ।
एषोऽन्तक इव क्रुद्धः सर्वभूतावमर्दनः ।
अदूरात्प्रत्युपस्थाय जृम्भते केसरी यथा ।
कर्णः ।
नाहं बिभेमि बीभत्सोः कृष्णाद्वा देवकीसुतात् ।
पाण्डवेभ्योऽपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः ।
सत्त्वाधिकानां पुंसां तु धनुर्वेदोपजीविनाम् ।
दर्शनाज्जायते दर्पः स्वरश्च न विषीदति ।
पश्यत्वाचार्यपुत्रो मामर्जुनेन रणे सह ।
युध्यमानं सुसंयत्तं दैवं तु दुरतिक्रमम् ।

G2 बली (for रणे). — (L. 17) G1.3 चलंतीव (for उच्च°). — M2 om. lines 19–21. — (L. 20) T G2 दृढानि (for गुरूणि). — After line 20, T G2 ins.:

अस्माकं पोषको नित्यमा बाल्यान्मात्स्यभूमिप ।
श्रेयस्कामी सदास्माकं योगक्षेमकरः सदा ।
तस्याङ्के वर्धितो बाल्ये तद्योत्स्येऽनेन सांप्रतम् ।
अस्माकं धार्तराष्ट्राणां शमकामो दिवानिशम् ।

— M3 om. lines 21–23. — (L. 22) M1.4.5 उवाह (for वाह°). — (L. 23) G1.3 तं रथं; M5 तं रणे (for अथ तं). M1.2.4 तमायांतं (M4 तं वै महा-) रथं दृष्ट्वा.

## 52

(L. 2) M3-5 युद्धमनाः. — (L. 3) T2 M5 विमृश°; G1.3 आमृश°. — (L. 5) T2 G2 M3 त्वं (for तत्). G3 विकत्थसे; M5 बभाषसे. — T2 om. lines 6–8. — (L. 7) T1 M1.3 °समः (for इव). — After the prior half of line 7, G1 ins.:

क्षत्रधर्ममनुव्रतः
वडवाग्निसमः पार्थः.

— (L. 8) G1.3 M3 प्रत्यवस्थाय. M2 संग्रामशिरसो मध्ये (for the prior half). — T1 G2 ins. after line 8: T2 (which om. lines 6–8), after line 5:

न पलायस्व शूरश्चेत्स्थित्वा युध्यस्व फल्गुनम् ।

— (L. 12) M गर्ज° (for दर्श°). G1.3 M1.5 सत्त्वं (for दर्पः). — After line 14, T G2 ins.:

अश्वत्थामा ।
को दोषः कर्ण शूराणां वाचा साकं हि पौरुषम् ।
विद्यते यदि तल्लोके गुणोत्तरमिहोच्यते ।
युध्यस्व त्वमभीः पार्थ प्रपलायस्व मा रणात् ।
उक्तं वचः सरन्कर्ण नाहमित्यादि संयुगे ।

वैशंपायनः ।
तं समन्ताद्रथाः पञ्च परिवार्य धनंजयम् ।
त इषून्सम्यगस्यन्तो मुमुक्षन्तोऽपि जीवितम् ।
ते लाभमिव मन्वानाः क्षिप्रमार्छन्धनंजयम् ।
शरौघान्सम्यगस्यन्तो जीमूता इव वार्षिकाः ।
बहुभिर्विविधैर्बाणैर्निशितैर्लोमवाहिभिः ।
आद्रवन्प्रत्यवस्थाय प्रत्यविध्यन्धनंजयम् ।
ततः प्रहस्य बीभत्सुः सर्वशस्त्रभृतां वरः ।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथसत्तमान् ।
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
एवं गाण्डीवनिर्मुक्तैः शरैः प्राच्छादयद्दिशः ।
न रथानां न नागानां न ध्वजानां न वाजिनाम् ।
अविद्धं निशितैर्बाणैरासीद्द्व्यङ्गुलमन्तरम् ।
सर्वे शान्तिपरा योधाः स्वचित्तं नाभिजज्ञिरे ।
हस्तिनोऽश्वाश्च वित्रस्ता व्यवलीयन्त सर्वशः ।
यथा नलवनं नागः प्रभिन्नः षाष्टिहायनः ।
एवं सर्वानपामृद्नादर्जुनः शस्त्रतेजसा ।
गाण्डीवस्य तु घोषेण पृथिवी समकम्पत ।
मनांसि धार्तराष्ट्राणामभ्यकृन्तद्धनंजयः ।
ततो विगाह्य सैन्यानां मध्यं शस्त्रभृतां वरः ।
सारथिं समरे शूरमभ्यभाषत वीर्यवान् ।
संनियम्य हयानेतान्मन्दं वाहय सारथे ।
आचार्यपुत्रं समरे योधयिष्येऽपराजितम् ।
पुरा ह्येष मया मुक्तः स मे भवति पृष्ठतः ।
एवमुक्तोऽर्जुनेनाजावश्वत्थामरथं प्रति ।
विराटपुत्रो जवनान्भृशमश्वानचोदयत् ।
कर्णः ।
एषोपयाति बीभत्सुर्व्यथितो गाढवेदनः ।
तं तु तत्रैव यास्यामि नायं मुच्येत जीवितात् ।
द्रोणः ।
नैषो भयेन निर्यातो महात्मा पाकशासनिः ।
एवं भीता निवर्तन्ते न पुनर्गाढवेदनाः ।
यद्येनमभिसंरब्धं पुनरेवाभियास्यसि ।
बहून्यस्त्राणि जानीते न पुनर्मोक्ष्यते भवान् ।
दिष्ट्या दुर्योधनो मुक्तो दिष्ट्या गावः पलायिताः ।
मुक्तमुष्टिषु संग्रामे किं रणेन करिष्यसि ।
क्रोशमात्रमतिक्रम्य बलमन्वानयामहे ।
अन्वागतबलाः पार्थं पुनरेवाभियास्यथ ।
Colophon.

☞ Most of lines 5–39 above recur (with v. l.) in passages No. 45 and 46 of this Appendix, and elsewhere.

53

Before adhy. 60 (or after adhy. 58), S ins.:

अर्जुनः ।
दक्षिणामेव तु दिशं हयानुत्तर वाहय ।
पुरा सार्थीभवत्येषामयं शब्दोऽत्र तिष्ठताम् ।
अश्वत्थाम्नः प्रतिरथं प्राचीमुद्याहि सारथे ।
अचिराद्द्रष्टुमिच्छामि गुरुपुत्रं यशस्विनम् ।
वैशंपायनः ।
मोहयित्वा तु तान्सर्वान्धनुर्घोषेण पाण्डवः ।
प्रसव्यं चैवमावृत्य क्रोशार्धं प्राद्रवत्ततः ।
यथा सुसंस्कृतो बाणः सुपर्णश्चापि शीघ्रगः ।
तथा पार्थरथः शीघ्रमाकाशे पर्यवर्तत ।
मुहूर्तोपरते शब्दे प्रतियाते धनंजये ।
हस्त्यश्वरथपादातं पुरस्कृत्य महारथाः ।
द्रोणभीष्ममुखाः सर्वे सैन्यानां जघने ययुः ।
यत्ताः पार्थमपश्यन्तः सहिताः शरविक्षताः ।
सैनिकाः ।
दिष्ट्या दुर्योधनो मुक्तः सैन्यं भूयिष्ठमागतम् ।
क्रोशमात्रमतिक्रम्य बलमन्वानयामहे ।

— (L. 18) $G_1$ M (except $M_4$) शारदाः (for वार्षिकाः). — (L. 19) $M_{1.2}$ transp. विविधैर् and निशितैर्. $M_3$ विशिखैर् (for विविधैर्), and विविधैर् (for निशितैर्). $T_2$ M (except $M_2$) लोमवाहिभिः. — (L. 20) $G_{1.3}$ अथ ते; M (except $M_3$) अदूरात् (for आद्र°). — (L. 25) T $G_2$ चाश्वानां (for नागानां). T $G_2$ $M_{2.3}$ वर्मणां (for वाजिनाम्). — (L. 26) $M_{3-5}$ अतीव (for अविद्धं). $G_{1.3}$ अनिर्विद्धं शितैर्बा°; $M_{1.2}$ अतिविद्धैः शितैर्बा°. $T_1$ $G_1$ $M_{1.2}$ नासीद् (for आसीद्). $M_3$ अविध्यद्गुल्ममंतरं. — (L. 27) $G_3$ M यौधाः. — (L. 28) T $G_2$ दंतिनो (for हस्तिनो). $M_{1-3}$ भागशः (for सर्वशः). — (L. 32) $T_1$ अप्यकंपद्; $T_2$ $G_{2.3}$ अप्यकृंतद् (for अभ्य°). — $M_2$ om. lines 36–39. — (L. 37) $M_{3.4}$ हि मे (for मया). $T_1$ $M_{3.4}$ शब्दः (for मुक्तः).

$M_{1.5}$ पुरा सार्थीभवत्येषां. $T_1$ सावुर्; $M_4$ सार्थी- (for स मे). $M_{1.4}$ अयं शब्दोत्र तिष्ठतां. — For lines 38–39, $M_1$ subst.:

अर्जुनेनैवमुक्तस्तु वैराटिरपराजितः ।
चोदयामास तानश्वानश्वत्थामरथं प्रति ।;

while $M_{3-5}$ subst.:

अश्वत्थाम्नः प्रति रथं भृशमश्वानचोदयत् ।

— (L. 41) $T_2$ योत्स्यामि; $M_{1-3}$ यास्यामो. — (L. 43) $T_2$ $G_2$ $M_5$ नैवं (for एवं). — (L. 47) $G_2$ मुक्तो दिष्ट्या च सं°; $M_1$ (*sup. lin.*) मुक्तस्त्वसाच्च सं°. — Colophon. *Adhy. no.*: T G $M_{1.3.5}$ 63; $M_{2.4}$ 62.

53

(L. 12) $G_3$ यत्नात्पश्यंति कौंतेयं शरविक्षतसैनिकाः. — (L 13)

याम यत्र वनं गुल्मं नदीमन्वश्मकां प्रति ।
वैशंपायनः ।
अथ दुर्योधनो दृष्ट्वा भग्नं स्वबलमाहवे ।
असृष्यमाणः कोपेन परिमार्गन्धनंजयम् ।
न्यवर्तत कुरुश्रेष्ठः स्वेनानीकेन संवृतः ।
वार्यमाणो दुराधर्षैर्भीष्मद्रोणकृपैर्भृशम् ।
ततोऽर्जुनश्चित्रमुदारवेगं
समीक्ष्य गाण्डीवमुवाच वाक्यम् ।
इदं त्विदानीमनयं कुरूणां
शिवं धनुः शत्रुनिबर्हणं च ।
अत्याशुगं वेगवदाशुकर्तृ
अवारणीयं महते रणाय ।
प्रदारणं शत्रुवरूथिनीना-
मनीकभित्संयति वज्रकल्पम् ।
प्रयाहि यत्रैष सुयोधनो हि
तं पातयिष्यामि शरैः सुतीक्ष्णैः ।
आचार्यपुत्रं च पितामहं च
सुयोधनं सूतसुतं च संख्ये ।
द्रोणं कृपं चैव निवार्य युद्धे
शिरो हरिष्यामि सुयोधनस्य ।
तमुत्तरश्चित्रमुदारवेगं
धनुश्च दृष्ट्वा निशिताञ्शरांश्च ।
भीतोऽब्रवीदर्जुनमाजिमध्य
नाहं तवाश्वान्विषहे नियन्तुम् ।
तमब्रवीन्मात्स्यसुत प्रहस्य
गाण्डीवधन्वा द्विषतां निहन्ता ।
मया सहायेन कुतोऽस्ति ते भयं
प्रैह्युत्तराश्वानुपमन्त्रयस्व ।
आश्वासितस्तेन धनंजयेन
वैराटिरश्वान्प्रतुतोद शीघ्रम् ।
विष्फारयंस्तद्धनुरुग्रवेगं
युयुत्समानः पुनरेव जिष्णुः ।
गाण्डीवशब्देन तु तत्र योधा
भूमौ निपेतुर्बहवोऽतिवेलम् ।
शङ्खस्य शब्देन तु वानरस्य
शब्देन ते योधवराः समन्तात् ।
अर्जुनः ।
एषोऽतिमानी धृतराष्ट्रसूनुः
सेनामुखे सर्वसमृद्धतेजाः ।
पराजयं नित्यममृष्यमाणो
निवर्तते युद्धमनाः पुरस्तात् ।
तमेव याहि प्रसमीक्ष्य यत्तः
सुयोधनं तत्र सहानुजं च ।
वैशंपायनः ।
तमापतन्त प्रसमीक्ष्य सर्वे
कुरुप्रवीराः सहसाभ्यगच्छन् ।
प्रहस्य वीरः स तु तानतीत्य
दुर्योधने द्वौ निचखान बाणौ ।
तेनार्दितो नाग इव प्रभिन्नः
पार्थेन विद्धो धृतराष्ट्रसूनुः ।
युयुत्समानोऽतिरथेन संख्ये
स्वयं निगृह्यार्जुनमाससाद ।

54

After 4. 60. 15, S ins.:

तस्मिन्महेष्वासवरेऽतिविद्धे
धनंजयेनाप्रतिमेन युद्धे ।
सर्वाणि सैन्यानि भयार्दितानि
त्रासं ययुः पार्थमुदीक्ष्य तानि ।
ततस्तु ते शान्तिपराश्च सर्वे
दृष्ट्वार्जुनं नागमिव प्रभिन्नम् ।
उच्चैर्नदन्तं बलवन्तमाजौ
मध्ये स्थितं सिंहमिवर्षभाणाम् ।
गाण्डीवशब्देन तु पाण्डवस्य
योधा निपेतुः सहसा रथेभ्यः ।
भयार्दिताः पार्थशराभितप्ताः
सिंहाभिपन्ना इव वारणेन्द्राः ।
संरक्तनेत्रः पुनरिन्द्रकर्मा

M2 भग्नं स्वबलमाहवे; M3 दिष्टया गावः पलायिताः (for the posterior half). — (L. 15) G1.3 M3 यात (for याम). M1.2.4.5 °श्मकीं; M3 °श्मकाः. — (L. 17) T2 G1 M4 क्रोधेन (for कोपेन). M1.2 प्रतिमार्गं. — (L. 19) M1 °कृपादिभिः; M2.5 °मुखैर्भृशं. — After line 21, T1 G2 ins.:

भोगेन्द्रकल्पं भुवनेषु रूढ-
मभेद्यमच्छेद्यमदाह्यमाजौ ।

— (L. 27) M1 अनीकजित्. — After line 27, T1 G2 ins.:

वैधव्यदं शत्रुनितम्बिनीनां
सुखप्रदं कौरववंशजानाम् ।

— (L. 36) T2 G1.3 M1.4 उग्रवेगं (for आजिमध्ये). — (L. 40) T G2 M4.5 भयं ते (for ऽस्ति ते भयं). — (L. 41) G1 अभिमंत्र्य वाह्य; M1-3 उपमंत्र्य वाह्य (for उपमंत्रयस्व). — (L. 43) T G2 M5 अतुदज्जवेन (for प्रतुतोद शीघ्रम्). — (L. 44) T1 G2 M2.5 (*sup. lin.* as above) उग्रघोषं; T2 उग्रघोरं. — (L. 46) M (except M5) तत्र (for योधा). — (L. 47) M (except M5) यौधा (for भूमौ).

